॥ शिवाभ्यां नमः ॥

अयं

श्रीमदद्वैतविद्याचार्यवर्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीरङ्गराजा-
ध्वरीन्द्रवरतनूभवश्रीमदप्पयदीक्षितकृतिः

# कुवलयानन्दः ।

( अर्थालङ्कारप्रबन्धः )

श्रीमद्वाधूलवंशमुक्ताफलतिलकश्रीदेवसिंहसुमतिनन्दनश्रीमत्साग्निचित्यवाजपे-
ययाजिगंगाधरमनीषिविरचितया

## रसिकरञ्जन्याख्यया टीकया

संवलितः

श्रीमद्गौरीमायूरदक्षिणपार्श्वप्रवहद्वीरचोलनदीदक्षिणतारमण्डनायि-
ताचलकुटीसमाख्याग्रहाराभिजनेन श्रीमद्वाधूलवंशमुक्ताफ-
लश्रीमद्गङ्गाधरसुधीमणेः पौत्रेण राजुशास्त्र्यपरनाम-
कश्रीमन्मृत्युञ्जयसुधीमणेः चरमेण तनुभुवा वृ-
द्धाम्बिकागर्भजन्मना श्रीकुम्भघोणनगरवि-
राजमानस्वदेशहूणवाणीपाठशालागीर्वा-
णवाण्युपाध्यायपदमधितिष्ठता

## रा०. हालास्यनाथशास्त्रिणा

स्वलिखितया प्राचीनचन्द्रालोकपाठभेदप्राक्तनमतभेदादीनां विवेचयित्र्या कयाचित्
लघ्व्या टिप्पण्या सह
सनाथीकृत्य
सम्यक्संशोध्य च.

कुम्भघोणस्थश्रीविद्यामुद्राक्षरशालायां
मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीतः ।

समुल्लसतितमाम् ।

कल्यब्दाः ४९९४.

मूल्यं सार्धं रूप्यद्वयम् (२-८-०)प्रेषणव्ययः. कलाद्वयञ्च(०-२-०)

# भूमिका ।

आर्याः ! रसिकशिरोमणयः ! अवधत्तेह किंचित्.

विज्ञातमेव हि भवतां यदिह श्रीमदद्वैतविद्याचार्यवर्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रतनयश्रीमदप्पययज्वावतंसैर्दशमयूखमण्डितचन्द्रालोकाख्यप्राचीनालङ्कारप्रबन्धस्य पञ्चममयूखशेषमर्थालङ्कारमयूखमुपजीव्य विरचितः कुवलयानन्दनामार्थालङ्कारप्रबन्धस्सर्वैरप्यर्थालङ्कारस्वरूपजिज्ञासुभिर्व्युत्पित्सुभिराद्रियमाणः चकास्तितरामिति । यद्यप्ययं प्रबन्धः चन्द्रिकाख्यया व्याख्यया सह नागरग्रन्थान्ध्रलिपिषु मुद्रितः प्रसरीसरीति । तथाऽपि सा व्याख्या न विशदीकरोति मूलाशयमिति न तत्र रज्यन्ति सहृदयानां मनांसीत्यत एवैतन्मुद्रणप्रवृत्तिरस्माकम् ।

प्रागब्दाष्टकादधीतकाव्यजालस्समनुबोधितोऽस्मि बाल्यात्प्र भृत्यात्मजनिर्विशेषमशनवसनादिभिस्सम्पोष्य आवर्णोपदेशमादृश्यकाव्यपरिचयं काव्यविद्यामनुशिक्षितवता मद्भगिनीभर्त्रा गर्गवंशशिखामणिना ईश्वरशर्मणा गुरुमणिना । यथा—'वत्स ! मया महता प्रयासेन सम्पाद्य दृढतमेषु तालपत्रेषु स्वहस्तेनैव लिखितासतिदुर्लभामतिविस्तृतामन्वर्थनामधेयां कुवलयानन्दटीकां **रसिकरञ्जनीं** परिशील्य, सम्यक्तदर्थावगमेन सफलय च मामकं तत्सम्पादनप्रयास'मिति। ततस्तन्निदेशानुरोधेन तामां तं परिशीलयन्नस्मद्वंशमुक्तामणिना महता विरचितोऽयं प्रबन्ध इति जानंश्च जातसम्मोदः तां मुद्रणेन सर्वतः प्रकटयितुं धृतमतिरपि विद्याभ्यासपरतया नाशकं तथा चरितुम्। ततो गतेषु केषुचिदब्देषु अतीते खरनाम्नि वत्सरे सकलजनोपयोगिन्यां नागरलिप्यामेव मुद्रणीया सेति निश्चिन्वन् पुस्तकान्तरान्वेषणाय धृतव्यवसायः श्रीकुम्भघोणस्थपच्चयप्पवीधीवास्तव्यानां विश्वामित्रवंशमुक्ताफलश्रीराजचूडामणिदीक्षितवंश्यनवीनालङ्कारिककुलतिलकश्रीमद्गुरुस्वामिशास्त्रितनूभवबालचन्द्रशास्त्रिसूनूनां **यज्ञस्वामिशास्त्रिणां** सकाशादलभे द्वितीयं पुस्तकम् । श्रीपाट्टरार्यवीधीवास्तव्य-

श्रीमद्विजयराघवपाट्टरार्यतनूभवश्रीताताचार्यसकाशाच्च, तृतीयं, श्रीगोविन्दपुराभिजनानां मधुरानगरविराजमानहूणवाणीमहापाठशालागीर्वाणवाण्याचार्यपदमलंकुर्वतां पाणिनितन्त्रपारावारपारीणधिषणानां सहृदयशिखामणीनामण्णाशास्त्र्यपरनामधेयमहादेवसुधीमणीनां सकाशात्तुरीयं कुम्भघोणनगरप्रान्तवर्तितिरुवशनल्लूर्नामकाग्रहारवास्तव्यानां कणादतन्त्रनिरुपमपाण्डित्यविशदीकृतदिन्मुखानां **श्रीमहालिङ्गशास्त्रिणां** सकाशाच्च पञ्चमम् । एतेषु पञ्चसु **क.** चिह्नितमाद्यमस्मदाचार्यदत्तमशिथिलमविच्छिन्नपङ्क्तिकमनत्यबद्धमातिशायितमुद्राक्षरसौन्दर्यवर्णराजिमण्डितमतीताक्षयसंवत्सरभाद्रमासि विलिखितमनतिप्रत्नं च । द्वितीयमपि मदीयपुस्तकपाठानुसारिपाठं प्रायस्तत्तुल्यमेव । सूक्ष्मतः पर्यालोचने हि अनयोः **क. ख.** पुस्तकयोः मातृकापि एकैव स्यादिति प्रतिभाति । तृतीयं तु **ग.** चिह्नितं मध्ये मध्ये विच्छिन्नपङ्क्तिकं क्वचित्क्वचित्सुबद्धपाठं विस्पष्टाक्षरमेव । तुरीयं तु **घ.** चिह्नितं अपूर्णमतिशिथिलं प्रायस्सुबद्धमेव। पञ्चमं तु **ङ.** चिह्नितं तृतीयपुस्तकपाठानुसारिपाठमनतिस्पष्टवर्णमनतिशिथिलमनतिसुबद्धं च । पञ्चाप्येतानि क्रमात् **क. ख. ग. घ. ङ.** चिह्नितानि सम्यक्परिशील्य कामपि प्रतिकृतिं विलिख्य परिशोध्य मुद्रणाय प्रारिप्सुः प्राकट्यं काञ्चित्प्रकटनपत्रिकाम् । ततश्श्रीमंतस्सहृदयशिखामणयः महामहिमभरिताः **श्रीवञ्चिराज्ञीप्रियकेरलवर्मभूपालप्रभृतयः** रसिकशिरोमणयः अग्रिममूल्यप्रेषणेन मां प्रोदसाहयन् । ततस्तेषां साहाय्यमालम्ब्य अतीते मिथुनमास्येव मुद्रणाय प्रारब्धवानप्यतर्कितोपनतैरहितोपक्रमैरविवेचनीयैरन्तरायनिकुरुम्बैराहितप्रतिबन्धतया व्यलम्बिषि कञ्चित्कालम् । 'श्रेयांसि बहुविघ्नानी'त्याभाणकानुसारेण समापतितानि तान्यन्तरायनिकुरुम्बाणि भगवतो भक्तार्तिहन्तुर्भवानीवल्लभस्य कृपया तत्रभवताम्महतां सुहृदामशीर्बलेन च विवस्वदुदये हिमानीव व्यलीयन्त । ततः अतीते माघे मासि अशीतिपुटपरिमितां प्रथमां सञ्चिकां प्रैषयमग्रिममूल्यदातॄणां निकटं अनन्तरे मासि तावतीमेव सञ्चिकां द्वितीयामप्यनयं तेषां करतलम् ।

अथ तृतीयां सञ्चिकां चतुर्विंशत्यधिकशतपुटपरिमितां अतीतमास्येव प्रेषिषितामपि समुद्दिष्टपुटाधिकपुटपरिमेयतया नाशकं तथा प्रेषयितुम्। यथा कथञ्चिदेतावतापि वा कालेन पश्यतामेव तेषां नः परिपन्थिनां भगवतः कृपया प्रबन्धः समाप्तमुद्रणोऽयं वितनोति सहृदयहृदयाह्लादमित्यतो मम महान् प्रमोदः। तदत्र नः सुहृन्मणयः कालविलम्बजं कालभेदकृतं मामकीनं मन्तुं मर्षयन्तो मयि विकिरेयुराशिषमाशासतां च साफल्यमस्मदुद्योगस्येति तेषां गौरवमभ्यर्थये। अत्र प्रथमं **कुवलयानन्दः** अधस्तात् **रसिकरञ्जनी** तदधो मल्लिखिता **टिप्पणी** चेति मुद्रणरीतिः। कुवलयानन्दस्थकारिकाणां परिज्ञानाय तासां तथैव रसिकरञ्जन्याश्चाङ्क्यकार्येक्षरवैजात्यम्। रसिकरञ्जन्यामपि मूलप्रतीकविवेकाय तेषूर्यकुर्विं वर्णवैजात्यम्। टीकासजातीयवर्णमुद्रिता अपि टिप्पणीभागाः मध्ये रेखाविन्यासेनाभिव्याज्यन्त। टिप्पण्यां नाहं किंचिद्ज्ञः भवादृशामविज्ञातमपूर्वं विषयमुपन्यास्थम्। किं तु प्रकाशादिग्रन्थपरिशीलनगृहीतार्थसंग्रहं पठितृसौकर्याय क्वचिन्न्यबध्नामिति वेदितव्यम्। किंच यत्र यत्र कारिकासु चन्द्रालोकतः पाठभेदोऽस्ति, तत्र तत्र चन्द्रालोकपाठाष्टिप्पण्यां न्यरूप्यन्त। यद्यपि सावधानेन मया अयं प्रबन्धः मुद्रणकाले असकृत्परिशोधित एव। तथापि नात्र स्यात्क्वचिदपि स्खालित्यमिति वक्तुं न शक्नोमीत्येव निवेदये सुहृदां पुरतः। यतः सहजावेव किलाबोधविभ्रमौ पुरुषचित्तस्य। यदि स्युरत्र स्खलितानि क्वचित्क्वचिदक्षरच्युतिप्रभृतीनि तानि विदुषां सुविदान्येवेत्यतो नाद्रियत मया शुद्धाशुद्धपत्रीमुद्रणप्रयासः। तदत्र यदि यानि कानि चिदत्र स्युः स्खलितानि तानि नस्सुहृदः पठनकाले सम्यक्परिशील्य समन्विष्य पत्रपृष्ठपङ्क्त्यादिसूचनपूर्वकं विलिख्य च यदि प्रेषयेयुः तानि द्वितीये संस्करणे सर्वेषामुपकाराय परिशोध्य मुद्रयितुं तथा प्रेषयितॄणां सुहृदां परस्सहस्त्रं साष्टाङ्गप्रणतीरुपदीकर्तुं च धृतमतिः प्रतीक्षे तेषां तादृशमुपकारम्।

एतत्परिशोधनविषये क्वाचित्क्वचित्सञ्जातविशयस्य मम तन्निराकरणादिना उपकृतवतामव्याजकरुणार्णवानां मतिमन्दरपरिलोडितपाणिनितन्त्रपारावा-

रसमुद्धृततत्त्वार्थपीयूषाणां रसिककुलशिरोमणीनामस्मदाचार्यचरणानां**श्रीमच्छठकोपाचार्यमणीनां** ममात्र व्यवसाये प्रवृत्तिमुत्पादितवतां अस्मत्प्राक्तनाचार्याणामीश्वरशर्मणां पुस्तकान्तरप्रदानेन कृतोपकाराणां **यज्ञस्वामिशास्त्रिणां श्रीताताचार्याणां महादेवसुधीमणीनां महालिङ्गशास्त्रिणां** च अविकलमतिसुन्दरममुं प्रबन्धं मुद्राक्षरैरङ्कितवतां श्रीविद्यामुद्राक्षरशालाधिपानां **श्रीसाम्बशिवार्याणां** च अग्रिममूल्यप्रदानादिना विहितोपकाराणामव्याजसुहृदां **श्रीमद्गणपतिकवितिरुमलाचार्यज्येष्ठाराममुकुन्दजीप्रभृ**तीनां रसिकमणीनां च प्रत्युपकृत्यशक्ततया उपदीकरोमि बह्वीर्विनतीः ।

इदानीपवसितरसिकरञ्जनीमुद्रणेन मया **आपस्तम्बधर्मप्रश्न** उज्वलासहितः **गौतमधर्मप्रश्नश्च मिताक्षरीसंवलितः** मुद्राक्षरैरङ्कयितुमारभ्येताम्। न चिरादेतौ समाप्तमुद्रणौ वितनुतामामोदं विदुषां भवादृशां सहृदयानामिति समभ्यर्थये भगवन्तं भवानीवल्लभमित्यशेषमतिभावुकम् ।

नन्दनवत्सरे
ज्येष्ठशुक्लाष्टम्यां
कुम्भघोणे

इत्थं
अस्य ग्रन्थस्य प्रकटयिता
सहृदयसमुदायदासः
रा०. **हालास्यनाथशास्त्री.**

# PREFACE.

It is a fact known to all, that the great Appaya Dikshita has immortalised himself not only by his works on Adwaita philosophy, but likewise in several other departments of Sanskrit learning such as Alankara. In this latter his great work Kuvalayananda which is both a commentary and expansion of an earlier work Chandraloka is the most popular, and stands most prominent before the Sanskrit student. Indeed, this work has been already published in Devanagari, in Telugu and Grandha characters with a commentary called Chandrika. But since this commentary does not aim at bringing out the views of the author of Kuvalayananda, it is not held in estimation by the learned. Therefore, the present edition of Kuvalayananda with its well-known commentary Rasikaranjani is brought out at the suggestion of several learned Pundits, in the full hope that it would supply a real want and raise the standard of Alankara learning among Sanskrit students. In preparing this edition, I have used five manuscripts denoted, for the sake of reference, by *Ka* (क), Kha (ख), *ga* (ग) *gha* (घ), *gna* (ङ). The first *Ka* belongs to my revered teacher and relative Mr. Iswara sastriar of Thiruvilanthur who was the first to impress upon me the desirability and usefulness of bringing out the edition of Rasikaranjani. The M.S. nearly 25 years old is neatly written in legible handwriting, and there are but few mistakes in it.

The second M.S. *Kha* was kindly lent me by Mr. Yagnaswami sastriar grand-son of the well-known Doraswami sastriar of Kumbhakonam. This closely follows the above M.S. and both seem to be copies of the same original.

The third M.S. *ga* belongs to the well-known Pundit Thathachariar of Kumbhakonam. In this some

lines are here and there omitted, but the reading is generally correct.

The fourth M.S. *gha* was obtained from Mr. Annasastriar of Govindapuram, late Sanskrit Pundit of the Government Colleges of Kumbhakonam and Madura and at present the Sanskrit Pundit of the Native College Madura. This is much damaged and incomplete but the reading is correct.

The fifth M.S. *gna* belongs to Mr. Mahalinga sastriar of Tiruvasanallur, the matchless scholar of great renown in Nyaya philosophy. This follows closely the reading of the third M.S. and is full of blunders and indistinct letters.

Having prepared an edition based on these five M.S.S, I issued a notice about a year and a half ago to the public, expressing my intention of publishing this work and requesting their encouragement. This appeal was most readily responded to by several learned gentlemen like His Highness Kerala Varma Valiya Koil Tamburan of Travancore, M R A S. Then came in my way several dfficulties that generally attend such undertakings, which however by the grace of God and the kind help I received from my friends I have over come. To such of my subscribers as had already sent in their subscriptions I sent the first part of this book consisting of I—80 pages in February last and the second part (pages 81—160) in the succeeding month. The third I had to delay till now as it has exceeded the limit fixed, which was 80, by 44 pages. The whole book is now before the public, with whom I hope it will find favour.

In this edition, Chandraloka, Kuvalayananda and Rasikaranjani are all printed in different characters, so as to be easly distinguishable by the reader. Here and

there is a footnote ( टिप्पणी ) of my own, which contains in brief the views of several other important rhetoricians where they differ from our text, and the reading of the original Chandraloka where it differs from the one adopted by Appaya Dikshita in his Kuvalayananda.

I have not prepared a corrigenda, as is now genrally done, since I think it to be useless labour in asmuch as the few clerical blunders here and there can be easily detected by the reader. But if the learned public would desire to have one and point out the mistakes that they may find in the course of their reading, I shall most happily add one to the second edition of this work.

I cannot conclude without tendering my sincerest thanks to my revered teacher and guide, Pundit Satakopachariar of Kumbakonum, whose mighty intellect has churned the ocean of Vyakarana, who is matchless as a teacher and uurivalled in nobility and breadth of mind—for the help I have received from him in clearing the meaning of several intricate passages of this work. I have also to express my thanks to those learned gentlemen above mentioned, who have helped me with their M.S.S, and to the learned public in general for their timely encouragement. My heart-felt thanks are due to Mr. Sambasiva Iyer avergal, the Proprietor of the Sree Vidya Press, for the thousand and one ways in which he has encouraged and assisted me in the publication of this work.

June 30, 1892
KUMBHAKONAM.

**R. Halasyanatha Sastri**
*Sanskrit Pundit*
**Native High School.**

**IN THE PRESS, (BY THE SAME EDITOR.)**

1. Apastambha Dharma Sutras with the commentary called Ujvala by Haradatta.

2. Goutama Dharma Sutras with the commentary called Mitakshari by Haradatta.

# अथालंकाराणामनुक्रमः

## तत्रादौ शतमलङ्काराः

—* आहत्यालङ्काराः १२० भवन्ति. *—

## सूचनम् ।

२१. पुटे रसिकरञ्जन्यां पञ्चमपङ्क्त्यवसाने 'नोपमाना' इति वर्तते । तत्र 'नोपादाना' इति पठनीयम् ।

२९. पुटे टिप्पण्यां द्वितीयपङ्क्तौ 'इत्येक एव प्रतीपभेदः निरूपितः । इतरे चत्वारो भेदाः प्रकाशकारादिमतानुसारेण ग्रन्थकृता परिकल्पिता इति वेदितव्यम् । देवरकोण्डौगलार्यकृष्णबुधस्तु, प्रतीपालङ्कारमुपमेयोपमायामन्तर्भावयति । तथा हि' इति पाठक्रमो वर्तते ।

तत्र 'इत्याद्यः भेदः प्रतीपोपमात्वेन लक्षितः । द्वितीयतृतीयतुरीया भेदा नोक्ताः । पञ्चमो भेदस्तु, प्रतीपालङ्कारत्वेन उत्तरत्र प्रत्यनीकानन्तरं लक्षितः । यथा—**प्रतीपमुपमानस्य हीनत्वमुपमेयतः । दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥'** इति । अत्र प्रतीपस्य द्वितीयतृतीयतुर्यभेदाः प्रकाशकारादिमतानुसारेण ग्रन्थकृता परिकल्पिता इति वेदितव्यम् । देवरकोंडौगलार्यकृष्णबुधस्तु, तुरीयपञ्चमौ भेदौ प्रतीपालङ्कारमाह । तथा हि—'**आक्षेप उपमानस्य कैमर्थक्येन गम्यते । यद्वोपमेयभावः स्यात्तत्प्रतीपमुदाहृतम् ॥'** यत्रोपमेयेनैव उपमानकार्ये सिद्धे किमर्थमुपमानमित्याक्षेपः तदेकं प्रतीपम् । यद्वा प्रसिद्धोपमानस्य निकृष्टार्थमुपमेयत्वकृतिः तद्द्वितीयमिति । एवं लक्षयन् तयोः क्रमेण 'तदोजसस्तद्यशसः' 'आकर्णय सरोजाक्षि' इति पद्यद्वयमुदाजहार । द्वितीयतृतीयभेदौ परित्यज्य आद्यं भेदमुपमेयोपमायामन्तरभावयच्च । तथा हि-' इति पठनीयम् ।

# श्रीमदप्पयदीक्षितेन्द्राः ।

इमे खलु दीक्षितेन्द्राः श्रीमति चोलदेशे काञ्चीपरिसराविराजमानाडयप्पलाख्याग्रहारे गतेषु [ ४६९४ ] कल्यब्देषु तथा हौणाब्देषु (१५५२) सङ्ख्याकेषु श्रीमद्भरद्वाजकुलजलधिकौस्तुभमणेः **श्रीरङ्गराजाध्वरीन्द्रतो** लब्धजन्मानः विरचितबहुप्रबन्धाः विजितवैतण्डिकनिकुरुम्बाः प्रख्यातचरित्राश्च इति सार्वजनीनमेतत् । तेषां जन्मवत्सरादिकं तद्वंश्यैः शिवानन्दयोगीन्द्रैस्तच्चरिते सम्यङ्निरूपितम् । तेषां किल द्विसप्ततिर्वयसः परमावधिरित्यभियुक्ताः । तेषाञ्चेयं सूक्तिः चरमा श्रीमति चिदम्बरक्षेत्रे । यथा "चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं सुताश्च विनयोज्वलास्सुकृतयश्च काश्चित् कृताः । वायांसि मम सप्ततेरुपरि नैव भोगे स्पृहा न किंचिदहमर्थये शिवपदं दिदृक्षे परम् ॥" तेषां च विद्याग्रहणं पितुरेव यतस्त एव निरबध्नन् तत्कृते सिद्धान्तलेशसङ्ग्रहाख्ये ग्रन्थे 'सिद्धान्तलेशान्धियः । शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान् ।" इति तथा शिखरिणीमालाव्याख्याने शिवतत्वविवेकेऽपि ' 'सर्वविद्यालतोपघ्नपारिजातमहीरुहान् । महागुरून्नमस्यामि सादरं सर्ववेदसः" । इत्युपक्रमे । तथा समाप्तावपि, श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥" इति.तत्कृतयः सङ्ख्यया चतुरधिकं शतमिति तदीयबिरुदलेखनक्रमगतेन चतुरधिकशतप्रबन्धनिर्वाहकपदेन ज्ञायते । इदानीमप्युपलभ्यन्ते मार्कीपञ्चाशद्ग्रन्थाः । तत्र इदानीमपि प्रचारे विद्यमानाः ग्रन्थाः श्रीमदद्वैतसिद्धान्तावलम्बिनः निर्गुणवस्तुप्रतिपादनधुरीणाः, श्रीपरिमलः, सिद्धान्तलेशसंग्रहः वेदान्तनक्षत्रवादावली, मध्वतन्त्रमुखमर्दनं, मध्वमतविध्वंसनं, न्यायरक्षामणिः, इति षट् । सगुणनिष्ठाः शिखरिणीमाला, शिवतत्वविवेकः, ब्रह्मतर्कस्तवः, लघुविवरणं, आदित्यस्तवरत्नं, तद्व्याख्या, शिवाद्वैतविनिर्णयः, शिवध्यानपद्धतिः, पञ्चरत्नं, तद्व्याख्या, आत्मार्पणं, मानसोल्लासः, शिवकर्णामृतं, आनन्दलहरी, चन्द्रिका, शिवमहिमकलिकास्तुतिः, रत्नत्रयपरीक्षा, तद्व्याख्या, अरुणाचलेश्वरस्तुतिः, अपीतकुचाम्बास्तवः, चन्द्रकलास्तवः, शिवार्कमणिदीपिका, शिवार्चनाचन्द्रिका, शिवपूजाविधिः, नयमणिमाला, तद्व्या-

ख्या, इति शिवोत्कर्षवादपराः षड्विंशतिः । तथा श्रीरामानुजीयमतानुसारिणः. नयमयूखमालिका, तद्व्याख्या, श्रीवेदान्तदेशिकविरचितयादवाभ्युदयव्याख्या, तथा तत्कृतपादुकासहस्रव्याख्या, वरदराजस्तवश्च । इति पञ्च । श्रीमदानन्दतीर्थीयसिद्धान्तानुसारिणौ न्यायरत्नमाला तद्व्याख्या चेति द्वावेव । तथा व्याकरणे नक्षत्रवादावली, अलङ्कारशास्त्रे च अर्थचित्रमीमांसा, तथा कुवलयानन्दः, इति द्वौ । तथा पूर्वमीमांसायां नक्षत्रवादावली, विधिरसायनं, इति द्वौ । एवं मिलित्वा चतुश्चत्वारिंशत् । अन्ये च बहवो ग्रन्थास्तत्कृता उपलभ्यन्ते न समग्राः ।

## श्रीमद्गंगाधरवाजपेययाजी ।

अयं कस्मिन्काले आसीदिति न सम्यक् ज्ञायते । अप्पयदीक्षितकालस्य एतत्कालस्य च मध्यकालः मार्की (१००) वत्सराः स्युरिति प्रतिभाति । यतः अयं रसिकरञ्जन्युपक्रमे 'अस्मात्पितामहसहोदरदेशिकेन्द्रमप्पय्ययज्वतिलकं प्रणमामि मूर्ध्ना । यस्यानवद्यकृतिभिश्शततोऽधिकाभिः वैपश्चिती बुधततेः प्रसरीसरीति ॥' इति पद्यं न्यबध्नात् । रसिकरञ्जनीकारस्य पितामहस्समरपुङ्गवदीक्षितः इति व्यवहरन्ति पूर्ववृत्तविदः वृद्धाः । 'पितामहसहोदरस्य देशिकेन्द्र' इत्युक्त्या कियानेवानयोः मध्यकाल इति विज्ञायते । अयं चेन्नपुरीसमीपवर्ति 'मोशूर्तिरुवालङ्काडु' नामकाग्रहाराभिजनः श्रीमद्वाधूलवंशमुक्ताफलश्रीदेवनरासिंह्मभट्टतनूभवः श्रीकाश्यश्रीविश्वरूपयतीन्द्रतो लब्धसर्वविद्यावैशारद्यः तञ्जासंस्थानमहाराजशहाजीभूपतेः प्रतिगृहीतग्रामसमूहः अत्रैव मरुद्वृधातीरे न्यवसत् . स्ववासग्रामस्य 'तिरुवालङ्काडु' इति नामधेयमपि 'चक्रे इति वृद्धमुखाद्विज्ञायते । इदानीमपि तत्प्रतिगृहीतगृहारामादिकं तद्वंश्यैरनुभूयते अनेन विरचिताः ग्रन्थाः बहवः । तथापि इदानीमुपलभ्यमानाः कणादतन्त्रे सिद्धान्तचन्द्रिकाख्यं प्रकरणरत्नं, तद्व्याख्या सिद्धान्तचन्द्रिकाप्रसादाभिख्या विस्तृता । अलङ्कारशास्त्रे कुवलयानन्दव्याख्या रसिकरञ्जनी च सिद्धान्तचन्द्रिका तद्व्याख्या च मया आन्तं सम्पादिता । ते अपि यथावसं प्रकटीकरिष्यामि । एतद्ग्रन्थपरिशीलनेन अस्य सर्वेष्वपि तन्त्रेषु प्रबन्धृत्वमस्तीत्यनुमीयते । इति शिवम् । इत्थं. रा. हा.

श्रीमेधादक्षिणामूर्तये नमः ।

# श्रीमदप्पयदीक्षितविरचितः

# कुवलयानन्दः ॥

सान्निचित्यवाजपेययाजिगङ्गाधरमनीषिविरचितया
रसिकरञ्जन्याख्यटीकया समेतः ॥
हालास्यनाथसूरिकृतया लघुटिप्पण्या च संवलितः ॥

१उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥

एकत्र बोधमुद्रां कलयन्नन्यत्र पुस्तकं पाणौ ।
व्याकुर्वन्निगमान्तं देवः पायाद्वटद्रुतलवासी ॥
अधिमौलि कलां शशिनः शम्बररिपुचीटिकामिवाधाय ।
हरिणाक्ष्यै निजमङ्गं योऽदत्त स मेऽस्तु मङ्गलाय विभुः ॥

निश्वसितनिगममालां निरतिशयानन्दनीरनिधिवेलाम् ।
करविलसदक्षमालां कलये निरवद्यवाङ्मयीं देवीम् ॥
यत्पादपङ्कजरजःकणिकानुषङ्गमासाद्य देवगुरुमप्यधरीकरोति ।
मूकोऽपि तं पशुपतेरपरावतारं श्रीविश्वरूपयमिनं गुरुमानतोऽस्मि ॥
अस्मत्पितामहसहोदरदेशिकेन्द्रमप्पय्ययज्वतिलकं प्रणमामि मूर्ध्ना ।
यस्यानवद्यकृतिभिश्शततोऽधिकाभिर्वैपश्चिती बुधततेः प्रसरीसरीति ॥
गङ्गाधराध्वरी प्राज्ञस्तनोति विदुषां मुदे ।
हृद्यां कुवलयानन्दटीकां रसिकरञ्जनीम् ॥

निरन्तरभगवदनुसन्धानादिलब्धान्तरायविरहोऽपि ग्रन्थकारो ग्रन्थारम्भे व्याख्यातृश्रोतृणां निरन्तरायव्याख्यानश्रवणप्रचयगमनायार्थं श्रीमन्नारायणानुस्मरणलक्षणं मङ्गलं निबध्नाति—**उद्घाट्येति** । हृदयाब्जकोशं हृत्पद्मकलिकाम् । योगकलया योगाभ्यासपाटवेन । उद्घाट्य विकासं प्रापय्य । चिराद्धन्यैः चिरकालसम्भृततपोबल-

प्रणम्य पार्वतीजानिं परिशील्य च सत्कृतीः । हालास्यनाथनामाहं लिखामि लघुटिप्पणीम् ॥
१. अमरीकबरीभारभ्रमरीमुखरीकृतं । दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥ ततः परस्परेत्यादिपद्यं । तत उद्घाट्येत्यादि । एवं चन्द्रिकाख्यव्याख्यानुसृतः कश्चित्कः पाठक्रमोऽप्यस्ति ।

**परस्परतपस्सम्पत्फलायितपरस्परौ ।**
**प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥**

---

लब्धसुकृतपरिपाकशालिभिः पुरुषधौरेयैः । यथारुचि अनुसन्धेयत्वेन आगमसिद्धानां नीवारशूकांगुष्ठप्रादेशादिपरिमाणानां तत्तदुपासनाप्रकरणगतानां मध्ये स्वस्वरुच्यनुसारिणा तेन तेन परिमाणेन । गृह्यमाणोऽपि साक्षात्क्रियमाणोऽपि । योऽविरतं सन्ततम् । परिपूर्णरूपः । प्रस्फुरति प्रकाशते । यद्वा । यथारुचि जन्मान्तरवासनानुसारिण्या रुच्या भक्त्या । गृह्यमाणः रामकृष्णादिमूर्तिविशेषविशिष्टतया प्रत्यक्षीक्रियमाणोऽपि परिपूर्णरूपोऽपरिच्छिन्नरूपः । प्रकाशते । एवम्भूतो मुकुन्दः मे मह्यं । शाश्वतिकं नित्यम् । श्रेयः मोक्षलक्षणम् । दिशतु प्रयच्छत्वित्यर्थः । अत्र विशेष्यमुकुन्दवाचि शब्दस्य श्लिष्टतया निधिविशेषोऽपि प्रतीयते । हृदयाब्जवत् गूढप्रदेशे स्थितं कोशं धनागारम् । योगकलया उपायसामर्थ्येन । उद्घाट्य प्रवेशप्रतिबन्धकं निरस्य । धन्यैः धनलाभशालिभिः । चिरात् बहुकालमारभ्य । यथारुचि यथेच्छम् । गृह्यमाणोऽपि स्वीक्रियमाणोऽपि । न क्षीयते । किन्तु अविरतं परिपूर्णः स्फुरति । शाश्वतिकं पुनःपुनर्भवम् । भोगरूपम् । दिशतु इति । एवं प्रतीयमानाप्रकृतार्थौपम्यं मुकुन्दे व्यज्यतइति शब्दशक्तिमूलोपमालङ्कारध्वनिः । अंगुष्ठपरिमाणादिलक्षणपरिच्छेदापरिच्छेदयोरपि शब्दप्रत्यायितविरोधस्य औपाधिकत्वस्वाभाविकत्वाभ्यां सङ्घटनया समाधानाद्विरोधाभासः । परिच्छिन्नसकलवस्त्वपेक्षया आधिक्यलक्षणो व्यतिरेकालङ्कारः । मुकुन्दकोशशब्दादिषु श्लेषः । हृदयाब्जकोशमित्यत्र उपमा । परिपूर्णरूप इत्यत्र निरन्तरग्रहणरूपक्षयकारणसद्भावेऽपि क्षयरूपकार्यानुत्पत्तेः परिपूर्णरूपत्वोक्त्या प्रतीतेर्विशेषोक्त्यलङ्कारः । लौकिकनिध्यपेक्षया आधिक्यरूपो व्यतिरेकालङ्कारश्च । तयोरेकवाचकानुप्रवेशसङ्करः । एतेषामुपमाध्वन्यङ्गत्वादङ्गाङ्गिभावसङ्करः । एतैरलङ्कारैरुपस्कृतस्य उपमाध्वनेः प्रधानभूतभगवद्विषयभक्तिरूपभावाङ्गत्वाच्छब्दशक्तिमूलोपमाध्वनेरर्थशक्तिमूलभावध्वनेश्चाङ्गाङ्गिभावसङ्कर इति भावः ॥

विघ्नप्रचयसम्भावनया तन्निवारणपटुतरप्रचुरमङ्गलकर्तव्यतामभिप्रेत्य शिवयोरनुसन्धानरूपं मङ्गलं पुनर्निबध्नाति—**परस्परेति** । **स्तुम इति** । स्तुतिरत्र वाक्यार्थः । सा च गुणिनिष्ठगुणाभिधानरूपेति परस्परेत्यादिविशेषणैर्गुणाभिधानरूपैर्विशेष्य भूतजायापती विशेषितौ । शिवकृततपोऽतिशयफलत्वे सति देवीकृततपोऽतिशयफलत्वं पूर्वार्धे विवक्षितोऽर्थः । प्रपञ्चमातापितरावित्यनेन सकलप्रपञ्चाकारपरिणमनानमायाशक्तिरूपाचिच्छक्त्यधिष्ठानत्वेन शिवस्य कर्तृतया शिवायाः परिणाम्युपादानतया च उभयोर्मातापितृभावः । प्रपञ्चमातापितृभावाक्षिप्तमनादित्वं स्पष्टीकरोति —**प्राञ्चाविति** । शिवयोरभिधानभूतानि

---

१. यद्यपि इदं पद्यं दशमयूखमण्डितप्राचीनचन्द्रालोकनान्दीश्लोको न भवति । किं तु अप्पय्यदीक्षितकृतमेव । एतच्च रसिकरञ्जनीकारेण 'येषा' मिति श्लोकव्याख्यानावतरणिकायां सगु·

पदान्तराणि विहाय जायापतिशब्देन विशेष्यनिर्देशोऽस्य शास्त्रस्य रसप्रधानतया समस्तरसाभ्यर्हितशृङ्गाररसालम्बनविभावप्रतिपादनेन एतद्ग्रन्थारम्भे तत्स्तुतिरूपमङ्गलकर्तव्यता समुचितेत्यभिप्रायेण । अत्र वर्णनीयोमामहेश्वररूपालम्बनविभावेन तदीयदिव्यगुणानुसन्धानरूपानुभावेन च कविगतभावस्याभिव्यक्तेरसंलक्ष्यक्रमव्यंग्यो भावध्वनिः । विशेष्यरूपस्य जायापती इत्यस्य समुचितदेवतास्तुत्यभिप्रायगर्भतया परिकरांकुरः । परस्परतपस्सम्पदित्यत्र अन्योन्यतपःफलत्वनिरूपणाद्रूपकम् । आभ्यामलङ्काराभ्यामुपस्कृतः प्रधानभूतो भावध्वनिः ॥

इह खल्वाप्तोपदेशः शब्द इति भगवदक्षपादोक्तरीत्या आप्तोपदेशसंज्ञिते शब्दप्रमाणे प्रभुसुहृत्कान्तासम्मितोपदेशरूपतया त्रिधा विधा गाहमाने प्रयोजनविशेषसद्भावेऽपि तदनवगमेनैव राजादिवत्कर्तव्यतामात्रबोधनेन प्रवर्तकाद्वेदादिकविधिनिकरात् प्रभुसम्मितोपदेशरूपतया प्रसिद्धात्, समीहितविशेषोक्तिप्राप्त्युपायतत्प्राप्तिपरिपन्थिनिरसनोपायविदनेन सुहृदादिवत्प्रवर्तकात् पुराणादेः सुहृत्सम्मितोपदेशरूपाच्छब्दार्थप्रधानाद्विलक्षणः, हावभावविलसितैर्ललितकोमलतरैर्वीतरागमपि पुमांसमनङ्गपरवशं विधाय स्वाभिमुखीकरणपटुतरकामिनीवद्रसभावप्रधानतया न्यक्कृतशब्दार्थयुगलः, शब्दार्थव्युत्पत्तिकोविदान् विविधव्यञ्जनव्यापारोपरागेण वैदग्ध्यापरनामधेयसरसतापादनेन स्वाभिमुखतामापादयन्, स्वप्रतिपाद्यनायकप्रतिनायकवृत्तान्तप्रतिपादनमुखेन रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशरूपतया प्रवर्तयन्, काव्यापरनामा, कान्तासम्मितोपदेशात्मना सकलरसिकजनमनोविश्रान्तिसीमा, सर्वानुभवसाक्षिकोऽस्ति तृतीयः प्रकारः । स तु नृपदैवतादिवर्णनारूपतया कालान्तरभाविनिर्मातृश्रोतृगतैहिकामुष्मिकफलनिष्पादनेन सफलः । अत्रोदाहरणतां प्रतिपन्नाः पुरातनाः कविपुङ्गवाः साम्बमयूरकालिदासप्रभृतयः । श्रवणसमनन्तरभावि तु फलं सकलस-

---

त्विकं निर्धारयिष्यते । तथापि अर्थालङ्कारशतकलक्ष्यलक्षणकारिकामात्रपरिमितेषु सर्वतश्चन्द्रालोकनाम्ना व्यवह्रियमाणेषु तालपत्रालिखितेषु नागरग्रन्थान्ध्रलिपिभिर्मुद्रितेषु च सर्वेषु पुस्तकेषु अस्य मङ्गलश्लोकत्वेन दृश्यमानतया, अयं अर्थालङ्कारमात्रपरिमितः चन्द्रालोकः अप्पय्यदीक्षितैरेव प्राचीनचन्द्रालोकस्य पञ्चममयूखशेषस्थानि लक्ष्यलक्षणवाक्यानि समादाय, केषाञ्चित् लक्ष्याणि केषाञ्चित् लक्षणानि केषाञ्चिदुभयमपि परित्यज्य, अन्यथा विरच्य, तत्रानिरूपितानां केषाञ्चित् स्वयमुभयं निर्माय संयोज्य च, नान्दीश्लोकादिविन्यसनपूर्वकं परिष्कृत्य विरचितः । ततस्तद्विवरणतया कुवलयानंदः कृत इति च प्रतिभाति । अतः अत्र कुवलयानंदे चंद्रालोककारिकामात्रपठनसौकर्याय अक्षरभेदस्य करिष्यमाणतया एतत्पद्यं तन्मङ्गलत्वेन पठनीयमिति धिया अत्र वर्णभेदः अङ्गीकृत इति सुधियो विदांकुर्वंतु । एवमुत्तरत्र 'अलङ्कारेषु— एषां चंद्रालोके—' इत्यनयाः पद्ययोरपि 'ललितः क्रियते तेषां' इत्यादिप्रतिज्ञापर्यालोचने सति लक्ष्यलक्षणकारिकारूपचंद्रालोकोद्देशेनैव कृतत्वस्य भानात्तत्रापि वर्णव्यत्यासोऽङ्गीकरिष्यत इति विज्ञेयम् ।

हृदयहृदयसंवादिन्यखण्डालौकिकानन्दात्मकरसाभिव्यक्तिः । इदमपि सरसजनमनस्साक्षिकमिति नाऽत्र विवदितव्यम् । व्यक्तीकरिष्यते चेदमुपरिष्टाद्रसवदलङ्कारप्रस्तावे । यदाहुरग्निपुराणे व्यासपादाः । 'अदोषं गुणवत्काव्यमलङ्कारैरलंकृतम् । रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति, । इति । अत्र पूर्वार्धेन काव्यस्य लक्षणमुक्तं उत्तरार्धेन फलमिति द्रष्टव्यम् । तत्र पूर्वार्धे काव्यमिति लक्ष्यनिर्देशः । तच्च शब्दार्थयुगलम् । तदाहुर्मम्मटोपाध्यायाः । 'तददोषौ शब्दार्थौ' इति । तथा च अदोषत्वे सगुणत्वे च सति सालङ्कारत्वं तल्लक्षणमनुसन्धेयम् । इत्थं हि लक्षितं काव्यं त्रिविधं मेनिरे बुधाः । ध्वनिसंज्ञं हि यत्काव्यं प्रथमं तदुदाहृतम् ॥ गुणीभूतव्यङ्ग्यसंज्ञं द्वितीयं मध्यमं स्मृतम् । तृतीयं चित्रमित्युक्तमधमं व्यङ्ग्यवर्जितम् । यत्रातिशेते वाच्यार्थं व्यङ्ग्यं तद्ध्वनिरुच्यते ॥ यथा । 'स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः । वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥' अत्र घनाघनसमयप्राथमिकवर्षोदबिन्दूनां पक्ष्माधरपयोधरवलीपतनक्रमेण नाभीप्रवेशरूपेण वाक्यार्थांशेन निर्वर्ण्यमानेन चिरनिदाघसमयतपश्चर्याभिनिवेशसमासादिततापातिरेकतप्यमानशरीरोपरि तादृशोदबिन्दुसन्दोहसम्भेदस्सर्वाङ्गीणं सम्मदभूमानमादधानश्चेतसः परवशतामुपजनय्य तपोविच्छेदकारितया तदन्तराय इति सकललोकविदितमेतत् । प्रस्तुते च तपस्यन्ती देवी नोक्तां दशामतिवर्तते । अतः तादृगवस्थां प्राप्तवत्याः पार्वत्याः समाधिसमयानुरूपावस्थानाभिव्यञ्जनेन तपोविच्छेदसामग्रीपौष्कल्येऽपि, न तपोविरतिमगमदिति, 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।' इति वृद्धोक्तलक्षणलक्षितो विशेषोक्तिनामालङ्कारो ध्वन्यत इति संलक्ष्यक्रमव्यङ्ग्योऽर्थशक्त्युद्भवो वस्तुनाऽलङ्कारध्वनिरिति । एवं भूतश्चाऽयं वाच्यकक्ष्यामतिक्रान्तो वाच्यात् प्रतीयमानः सकलसहृदयहृदयचमत्कारकारी वाच्यातिशायी इति ध्वनेरिदमुदाहरणम् । समाध्युचितावस्थानविशेषाभिव्यक्तिपरिपाटी चेत्थम् ॥ 'नासाग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः । ध्यायीत मनसा देवमुरो विष्टभ्य चाग्रतः ॥' इति समाधिशालिनामवस्थानमाहुः । तत्र नासाग्रन्यस्तनयनत्वं 'स्थिताः क्षणं पक्ष्मसु' इति वाक्यार्थेन व्यज्यते । नयनयोरात्यन्तिकमीलनोन्मीलनयोः पक्ष्मणामधोग्रतोर्ध्वाग्रताभ्यां तत्र उदबिन्दूनां स्थित्यसम्भवात् । अधरनिपतनपूर्वकपयोधरनिपतनवर्णनात् संवृतास्यत्वं । इतरथा हि सामस्त्येनोदबिन्दूनामास्य एव प्रवेशेन अधरादिपतनायोगात् । वलीषु तेषां स्खलनोक्त्या च उरोविष्टम्भः । अन्यथा अवनततयावस्थितौ हि पयोधरयोरन्तस्संकुचिततया तत्र तेषां कुतः पतनं स्यात् । कुतस्तरां वलीषु स्खलनम् । कुतस्तमां च नाभीप्रवेशः । तेषां क्रमवर्णनेन च निश्चलत्वाभिव्यक्तिः । चञ्चलतायामुक्तक्रमासम्भवात् । किं च । एतैरेव विशेषणैर्देव्या अलोकसामान्यं सौन्दर्यमभिव्यज्यते । तत्र 'स्थिताः क्षणं पक्ष्मसु' इत्यनेन पक्ष्मणामविरलता मसृणता च व्यज्यते । तेषां वैरल्यरूक्षत्वयोः तत्रोदबिन्दूनां पतनशोषणयोरन्यतरसम्भवेन तेषां स्थित्ययोगात् । 'ताडिताधराः, इति पक्ष्माग्रस्थितिशिथिलितवेगैरप्यधरता-

डनवर्णनात्तस्यातिसुकुमारता । अधरदेशतः प्रच्युतानां तेषां पयोधरनिपतनेन चूर्णीभवनवर्णनात् पयोधरकाठिन्यम् । ततो वलीषु स्खलनोक्त्या उरोविष्टम्भेऽपि वलीनां विस्पष्टता । निरवशेषतया सर्वेषां तेषां नाभौ प्रवेशवर्णनेन नाभीगभीरता च व्यज्यत इति, सौन्दर्यरूपवस्तु ध्वनिः । अनयोर्वस्त्वलङ्कारध्वन्योरेकवाचकानुप्रवेशलक्षणस्सङ्करध्वनिः । अधिकं सङ्करप्रस्तावे विचारयिष्यते ॥ यथा वा । 'भम धम्मिअ! विस्सद्धो सो सुणओ अज्ज मारिओ देण । गोलाणईकच्छकुडङ्गवासिणा दरियसीहेण ॥ छा। भ्रम धार्मिक! विस्रब्धः सशुनकोऽद्य मारितस्तेन । गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥' अत्र कस्याश्चित् नायकसङ्केतावसथञ्जीवितसर्वस्वायमानं धार्मिकभ्रमणान्तरायतो रक्षितुं विधिमुखेन धार्मिकं प्रत्युक्तिरियम् । अत्र 'भ्रम, इति नायं विधौ प्रैषे वा लोट् । भवतो धार्मिकस्य मद्विधप्राकृतजनानियोज्यत्वेन तदुभयासम्भवात् । किन्तु प्राप्तकालतायाम् । एतावन्तङ्कालं निर्विशङ्कग्रामभ्रमणपरिपन्थिनं शुनकं शङ्कमानः न निर्भयं भ्रमितवानसि, सम्प्रति तादृग्भ्रमणस्य कालस्ते प्राप्त इति स्वतस्सिद्धमपि भ्रमणं श्वभयेनापोदितं भ्रमेति प्रतिप्रसूतम् । 'धार्मिक!' इति देवतासपर्याद्युपयुक्तकुसुमाद्युपयोगार्थं ते भ्रमणं युक्तम् । 'विस्रब्धः' इति शङ्काकारणवैकल्यात् । 'सः' इति यस्त निरन्तरभयजनितकम्पानङ्कितामङ्गलतिकामकृत । 'अद्य' इति दिष्ट्या वर्धस इति । 'मारितः' इति न पुनरुत्थानं तस्येति । 'तेन' इति यं पूर्वं त्वमपि कर्णाकर्णिकया अधिगोदातटगहनं सिंहः प्रतिवसतीत्यश्रौषीरिति । 'दृप्तसिंहेन' इति प्राङ्नदीतीरे गहनान्तरे अवस्थितः अधुना तु दृप्तत्वान्मदपरवशो बहिर्निस्सरतीति, गोदावरीपरिसरानुसरणमपि कथाशेषीभूतं, कैव कथा तल्लतागहनप्रवेशशङ्काया इति व्यज्यते । तेन इतः परं गोवदारीनदीतीरलतागृहावासं परिहरेति निषेधोव्यज्यतइति अर्थशक्तिमूलो वस्तुध्वनिरयम् । यदि तु विना रसानुवेधं न काव्यसरणौ परितोष इति तदावश्यकता, तदापि तदुक्तरीत्या सम्भोगाभिलाषुककामुकीरूपालम्बनसङ्केतस्थानरूपोद्दीपनविभावाभ्यां विशिष्टवक्त्रादिवैशिष्ट्यसहकारिसंवलनोदितशृङ्गाररसानुवेधाद्रसध्वनिरप्ययम् । अत्र वक्तव्यशेषं सूक्ष्मालङ्कारप्रकरणे वक्ष्यामः । यथा वा ।' निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि! दूति! बान्धवजनस्याज्ञातपीडागमे! वापीं स्नातुमितोगतासि न पुनस्तस्याधमस्यान्तिकम् ।' अत्र विदग्धनायिकायाः कस्याश्चित् कुपितनायकसमाधानेन तदाह्वानाय, प्रहितां तेन सम्भुक्तां प्रत्यग्रसम्भोगचिह्नव्यञ्जिततत्सम्भोगकृतापराधां दूतीं प्रति उक्तिरियम् । अत्र अधमपदेन तत्सम्भोगः प्राधान्येन व्यज्यते । अधमत्वं हि जातिकृतं कर्मकृतं वा स्यात् । तत्र आद्यं नोत्तमनायिका स्वनायकस्य प्रतिपादयति । ततः कर्मकृतमेव तत् सा प्रतिपादयतीति, कर्माऽपि दूतीसम्प्रेषणप्राक्कालिकमभ्युपेत्यैव दूतिसम्प्रेषणेन, नोद्घाटनीयम्, तदुत्तरभावि तु हीनं कर्म तत्सम्भोगरूपं

---

१. 'वीसत्थो' इति पाठे विश्वस्त इति संस्कृतम्. २. 'गहण' इति घ. पुस्तकपाठः.
३. 'अपवादितं' इति ख. पुस्तकपाठः. ४. नोद्दीपितेति ख. पुस्तकपाठः.

सन्निहितचिह्नैर्ज्ञातुं शक्यमिति तत्कृताऽधमतायामेव अधमपदस्य पर्यवसानमिति तेन पदेन सम्भोगव्यक्तिरविकला । 'निश्शेषच्युतचन्दनं' इत्यादीनि तु विशेषणानि सम्भोगाङ्गानां आलिङ्गनचुम्बनादीनां व्यञ्जनेन तत्सहकारितां भजन्ते । तथा हि । प्रथमं वाच्यार्थस्य वापीस्नानस्योपपादनाय निश्शेषच्युतचन्दनमिति चन्दनच्यवनस्य निश्शेषतोक्तिः । तदन्तिकगमनश्रमाम्बुजनिता चन्दनच्युतिः । अतः त्वत्प्रियान्तिकमेवाहं गताऽस्मीत्यन्यथासिद्धिं परिहर्तुं निश्शेषग्रहणम् । श्रमाम्बुजनितायां हि तस्यां किञ्चिदुन्मृष्टतया निश्शेषता चन्दच्युतेः न स्यात् । स्नाने तु संक्षालनेन वाच्यार्थस्य वापीस्नानस्य उपस्कारः । ततस्सम्भोगमभिव्यङ्क्तुं प्रवृत्तस्याधमपदस्य सहायतां प्रतिपत्तुं तद्ग्रहणम् । स्नाने हि सर्वावच्छेदेन चन्दनच्यवनं भवेत् । तत्र तु स्तनोपरिभागावच्छेदेनैव चन्दनच्युतिरियं गाढोपगूहननिमित्तेत्येवमुपगूहनं तद्घटितवाक्यार्थेन व्यज्यते । तथा निर्मृष्टराग इत्यत्र निरित्युपसर्गमहिम्ना अधररागनिश्शेषमृष्टतोक्ता । ताम्बूलादिकृताधररागस्य ताम्बूलभक्षणविलम्बात् न निश्शेषमृष्टता स्यात् । स्नानेन तु निश्शेषमृष्टता भवतीति वाच्यार्थोपपत्तेः । तत्साधारण्यव्यावर्तनाय अधरग्रहणम् । स्नानेन हि द्वयोरपि रदनच्छदयोर्निश्शेषमृष्टता रागस्य भवति । तत्र तु अधर एव सा दृश्यते, अतश्चुम्बनकृतैवेयमिति चुम्बनव्यक्तिः । नेत्रे दूरमनञ्जने इति वाच्यार्थमुपपादयितुमत्यन्तार्थकदूरपदोपादानम् । श्रमाम्भःकृते ह्यञ्जनलोपे नात्यन्तिकता स्यादिति तदभिप्रायः । ततो व्यङ्ग्यार्थे व्यङ्क्तुं दूरपदं प्रान्तभागार्थकं सत् नेत्रे प्रान्तभागेऽनञ्जने इति वाक्यार्थपर्यवसानेन प्रान्तभागानञ्जनता चुम्बनकृतैवेति चुम्बनं ध्वनयति । पुलकिता तन्वी तवेयमिति । तत्र पुलकितेति स्नानविशेषपन्यासेन वाच्यार्थोपपादनम् । ततस्तत्साधारण्यव्यावर्तनाय पुलकिताऽपि तनुः तन्वा वर्तत इति अभिप्रायः । स्नानेन हि सहजतानवशालिन्यपि तनुः किञ्चिदुच्छूना भवति । इयं तु न तथेति । रतिजनितावेव तानवपुलकोद्गमाविति ध्वन्यते । एवमेभिर्विशेषणैरुपस्कृतेन अधमपदेन रतावभिव्यज्यमानायां वाच्यकक्ष्यायां वाच्यार्थानुगुणतया स्थितं मिथ्यावादिनीत्यादिविशेषणद्वयं व्यङ्ग्यानुगुणार्थे पर्यवस्यतीति असंलक्ष्यक्रमव्यङ्ग्यो रसध्वनिरिति प्राञ्चः । नवीनास्तु[4]– पद्यमिदं नानया रीत्या व्याकर्तुं युक्तम् । अधमपदव्यङ्ग्यसम्भोगस्य वाच्याधमत्वनिष्पादकतया वाच्यसिद्ध्यङ्गरूपगुणीभूतव्यङ्ग्यत्वापत्तेः । श्लोकगतानां विशेषणानां स्नानसाधारण्यव्यावर्तनमपि न युक्तम् । लिङ्गजलैङ्गिकसंविदा व्यक्तिं गतार्थयतो महिम्नो[5] विमर्शं प्रत्याचक्षाणः प्रकाशकारो पञ्चमोल्लासशेषे 'निश्शेषेत्यादौ यानि चन्द-

ख. पुस्तके १. 'प्रथमं' इत्यारभ्य 'परिहर्तुं' इत्यंतं एकं वाक्यं दृश्यते 'निश्शेषग्रहणं' इति पदं न दृश्यते. २. 'जनितस्त्वेदकृतेति' पाठः ३. प्राग्वाच्येति घ. पाठः. ४. नवीनाः– रसगङ्गाधरकारादयः ५ महिम्नः महिमभट्टस्येत्यर्थः इदमिहावधेयम् । काव्यप्रकाशे पञ्चमोल्लासशेषे या व्यञ्जनाख्यावृत्तिः संस्थापिता सा ध्वन्यालोककृतः आनंदवर्धनाचार्यस्यैवोपज्ञाविषया । ततः लोचनकर्त्रा अभिनवगुप्ताचार्येण ऊरीकृता च । अनंतरं गतवति कियति काले तां व्यञ्जनामनुमानेऽन्तर्भावयन् महिमभट्टः व्यक्तिविवेकाख्यं ग्रंथं कृतवान् । तथा चोक्तं का-

नच्यवनादीनि गमकतयोपात्तानि तानि कारणान्तरतोऽपि सम्भवन्ति, यतोऽत्रैव स्नानकार्यत्वेनोपात्तानि नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानीति' तटादिघटितवाक्यार्थानां स्नानसाधारण्यमेवानुमेने । तथा च तद्ग्रन्थविरोधः स्फुट एव । ग्रन्थविरोधमविगणयतः आनुमानिकसंविदा व्यक्तेः कृतार्थताऽपत्तिं को वारयेत् । अतस्तटादिघटितवाक्यार्थैः सम्भोगत्रापीस्नानसाधारणैरपि वक्तृबोद्धव्यवैशिष्ट्यादिसहकारिसमवधानमहिम्ना प्रागुक्तानां सम्भोगाङ्गानां अभिव्यक्तिः । न च सर्वं वाक्यं सावधारणमिति न्यायेन तटादिभावत्र्यसितया प्रतीयमानानां निश्शेषचन्दनच्यवनादीनां सर्वावच्छेदेन निश्शेषचन्दनच्यवनादिकारिस्नानसाधारण्यं कथमिति वाच्यम् । नद्यादौ तरुणजनविविक्तदेशे स्वच्छन्दमङ्गक्षालनेन सर्वतो निश्शेषचन्दनच्यवनेऽपि वापीस्नाने अवतरणमार्गस्य वापीगतबहुलयुवजनसङ्कीर्णतया उत्तरीयाद्यपसारणेन पयोधरक्षालनासम्भवेन त्रपापरवशतया स्वस्तिकीकृतभुजलतायुगलेन तटस्यैव मुहुरामर्शात् तटघटितवाक्यार्थस्य तत्राबाधात् । तथा निर्मृष्टरागतापि स्वाच्छन्द्यासम्भवेन ओष्ठद्वये अंगुलीसम्मर्दासम्भवेन अधरोष्ठ एव गण्डूषचुलुकीकरणादिषु अंगुलीसम्मर्दमावहतीति, तत्रैव निश्शेषमृष्टता रागस्येति तस्यापि विशेषणस्य स्नानसाधारण्यं युक्तम् । नेत्रे दूरमनञ्जने इत्यपि उक्तरीत्या सर्वत्राञ्जनलोपासम्भवेन प्रान्तभाग एवाञ्जनलोपोपपत्या साधारणमेव । एवमेभिस्साधारणैरेव सम्भोगाङ्गानां व्यञ्जनेन अधमपदमपि सम्भोगातिरिक्तहीनकर्मकृतं वा जातिकृतं वा अधमत्वमभिदधत्, प्रागुक्तसहकारिमहिम्ना सम्भोगं व्यञ्जयेदेवेति अधमत्वस्य सम्भोगैकनिष्पाद्यतया गुणीभूतव्यङ्ग्यताया अपि नावकाश इति वदन्ति । वस्तुतस्तु, विशेषणानां स्नानसाधारण्यव्यावर्तनं नातीव दोषमावहति । न हि वाच्यार्थासाधारण्यमात्रेण व्यक्तेरानुमानिकबोधेन अन्यथासिद्धिस्सम्भवति । प्रमाणान्तरेण व्यक्तेस्सिद्धौ तादृशस्थले वैयञ्जनिकबोधानुमितिसामग्र्योस्समवधाने वैयञ्जनिकबोधसामग्र्याश्शब्दसामग्रीत्वेन अनुमितिसामग्रीतो बलवत्तया शाब्दवैयञ्जनिकबोधस्यैव उत्पत्तेः । यच्च, अधमत्वस्य सम्भोगमात्रनिष्पाद्यत्वे गुणीभूतव्यङ्ग्यतापत्तेः जातिकृतां सम्भोगातिरिक्तहीनकर्मकृतां वा अधमतामधमपदं प्रतिपादयतीति नवीनैरभ्यधायि, तद्युक्तमेव । न हि व्यञ्जकानां विशेषणानां व्यङ्ग्यसाधारण्येऽपि व्यञ्जकत्वं हीयते । स्थिताःक्षणमित्यादौ उदबिन्दूनां पक्ष्मस्थितेरविरलत्वनासाग्रन्यस्तनयनत्वव्यङ्ग्याविनाभावेऽपि व्यञ्जकत्वाहानेः । प्रागुदाहृतप्रकाशकारग्रन्थोऽपि नासाधारण्यानियमाभिप्रायेण । साधारण्येऽपि तत्सम्भवात् । नानुमया व्यक्तेर्गतार्थतेत्येवं

---

व्यप्रकाशटीकासु पञ्चमोल्लासे 'यथा चाह व्यक्तिविवेककारो महिमभट्टः 'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुं । व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥' इति' इति । तदेतन्महिमभट्टमतं खण्डयन् प्रकाशकारः पञ्चमोल्लासे व्यञ्जनां स्थापयामास. इति.

१. 'गमकतया' ज्ञापकतयेति चक्रवर्ती । उपभोगव्यञ्जकतयेति प्रदीपकारः । २. 'अनैकान्तिकानि' व्यभिचारीणीत्यर्थः. व्यभिचारिहेतुस्थले अनुमितेरसम्भवात्, व्यञ्जनैव अङ्गीकरणीयेति तत्तात्पर्यम्..

अलङ्कारेषु बालानां अवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्ष्यलक्षणसङ्ग्रहः ॥

---

परतया व्याकर्तव्य इति न तद्विरोधोऽपीत्यास्तां विस्तरः ॥ वाच्यानतिशायिव्यङ्ग्यकत्वं गुणीभूतव्यङ्ग्यत्वम् । न चाधमकाव्ये अतिव्याप्तिः । तत्र व्यङ्ग्यस्यैवाभावात् । भावे वा कस्य चित् वाच्यानतिशायीत्यनेन अगूढापराङ्गत्वादिरूपगुणीभूतव्यङ्ग्यविभाजकधर्मवत्वस्य विवक्षितत्वात् । यथा । 'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥' अत्र ग्रामतरुणमित्यनेन ग्रामे एक एव तरुणः, तेन दुर्लभत्वं व्यज्यते । तरुणमिति कामकलाकौशलम् । तरुण्या इति रतावुत्कण्ठा । नववञ्जुलेत्यादिना वञ्जुलमञ्जर्याः करग्रहणप्रतिपादनेन नववञ्जुललतागृहस्य भूतलसंस्पर्शेन स्वच्छन्दोपभोगयोग्यता । पश्यन्त्या इति शतृप्रत्ययेन दर्शनसमकालताप्रतीतेः दर्शनमुखच्छायामालिन्ययोः कार्यकारणपौर्वापर्यव्यतिक्रमलक्षणातिशयोक्तेः मुखच्छायामालिन्यस्य अचिरभावित्वद्योतनेन नायकगमनेऽपि स्वागमनप्रयुक्तमिथ्यावादित्वव्यक्त्या इत्थं मया वञ्चितस्य कथंकारं द्रष्टव्य इति प्रियवञ्चनप्रयुक्तस्वानौचिती व्यज्यते । नितरामिति स्वापराधप्रकर्षश्च । अत्र स्वानौचित्यं रसभङ्गहेतुः । अत एवोक्तं ध्वनिकृता । 'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥' इति । एवमत्र व्यङ्ग्यस्य रसभङ्गहेतुतया वाच्यानतिशायितेति गुणीभूतव्यङ्ग्यमिदम् । यद्यपि अत्र नायिकालम्बनो वञ्जुलमञ्जरीदर्शनादिना उद्दीपितश्चिन्तादिना व्यभिचारिणा सञ्चारितो विप्रलम्भरसो ध्वन्यत इति विप्रलम्भरसध्वनिरस्ति । तथापि स्वानौचित्यव्यञ्जनप्रयुक्तं गुणीभूतव्यङ्ग्यत्वं नापह्नोतुं शक्यम् । तयोस्सङ्करसम्भवात् ॥ अव्यङ्ग्यत्वे सति चारुत्वं चित्रत्वं । न च व्यङ्ग्यशून्यस्य काव्यत्वमेव नेति वाच्यम् । तथापि वाच्यार्थवैचित्र्यमात्रेण चारुतोपपत्तेः काव्यत्वसम्भवात् । यथा । 'सञ्छिन्नमूलः क्षतजेन रेणुः तस्योपरिष्टात् पवनावधूतः । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे ।' इत्यत्र उपमायाः स्ववैचित्र्यमात्रविश्रान्तिपर्यवसितायाः चारुत्वमिति, व्यङ्ग्यसद्भावे उपमायाः तत्परिपोषकतया स्ववैचित्र्यमात्रविश्रान्ततानुपपत्तेः । केचिदव्यङ्ग्यमित्यनेन स्फुटव्यङ्ग्यराहित्यं विवक्षितमित्याहुः । तदेवं त्रिविधं काव्यम् ॥ तत्र आद्ययोः प्रभेदयोः ध्वनिगुणीभूतव्यङ्ग्ययोरन्यत्रास्माभिः प्रपञ्चः कृत इति चित्रमीमांसायामभिधानात्तावपहाय ग्रन्थकारः तृतीयभेदं विवेक्तुं ममायं प्रयत्न इत्यभिप्रेत्य, चिकीर्षितं विषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धचतुष्टयसूचनपूर्वकं निर्दिशति —

**अलंकारेष्विति ।** अलङ्कारेषु अर्थालङ्कारेषु । उत्तरत्रार्थालङ्काराणामेव निरूपयिष्यमाणत-

१. 'तत्र' इत्यारभ्य 'कस्यचित्' इत्यंतं ख. पुस्तक एव दृश्यते, नान्येषु । २. वर्तमानकालतेति घ. पुस्तकपाठः. ३. स्वस्याः अगमनं इतिविग्रहः.

या साधारणस्यापि तस्य विशेषपरत्वावश्यम्भावात् । बालानां अधीतकाव्यानां । अलङ्कारस्वरूपजिज्ञासूनामिति भावः । अवगाहनपदेन अवगमो लक्ष्यते । अवगाहने सर्वाङ्गमज्जनात् सर्वावच्छेदेन शरीरजलसंयोगः । तद्वदेतद्ग्रन्थपरिशीलेने अलङ्कारविषयाशेषविशेषपरिज्ञानं भवतीति व्यज्यते । **ललित इति** । सुगम इत्यर्थः । तेन प्राचीनप्रबन्धानामतिविस्तृततया बालानां न तत्र तादृक्प्रवेशस्सम्भवतीति, स्वग्रन्थ एव ते प्रथमं प्रवर्तेरन्निति निखिलव्युत्पित्सूपादेयत्वं स्वग्रन्थस्य सूचितम्भवति । **लक्ष्यलक्षणसंग्रह इति ।** लक्ष्यलक्षणयोः सङ्ग्रहः संक्षेपरूपस्सन्दर्भो नातिविस्तरस्सङ्ग्रह इत्यर्थः । तत्र अलङ्काररूपस्य विषयस्य तदवगमनस्य प्रयोजनस्य अवगमग्रन्थयोः कार्यकारणभावरूपसम्बन्धस्य अलङ्कारस्वरूपजिज्ञासुबालाधिकारिकत्वस्य च सूचनात् अनुबन्धचतुष्टयं श्रोतृजनमनस्समाधानेन प्रवृत्त्यङ्गं प्रकटितं भवतीति, सुखमत्र बालाः प्रवर्तिष्यन्त इति भावः ॥

ननु, चन्द्रालोकनाम्नः प्राचीनग्रन्थस्य सद्भावात् तत एवालङ्कारप्रतिपत्तिस्सम्भवतीति किमनेनायासेनेत्याशङ्क्य, सत्यमस्ति चन्द्रालोकः[3] काव्यप्रकाशादिवन्निरवशेषकाव्यलक्षणात्मा । तथा हि । चन्द्रालोके शब्दमयूखः प्रथमः (१) दोषमयूखो द्वितीयः (२) लक्षणमयूखस्तृतीयः (३) ततो गुणमयूखः (४) ततोऽलङ्कारमयूखः (५) ततो रसमयूखः[4] (६) ततो ध्वनिमयूखः (७) ततो गुणीभूतव्यङ्ग्यमयूखः (८) ततो लक्षणामयूखः (९) ततश्शक्तिमयूखः (१०) ततश्च चन्द्रालोकोऽर्थालङ्कारात्मक एव न त्वन्य इति केषांचिद्भ्रमो निरस्तः । तथा परस्परतपस्सम्पदिति चन्द्रालोकनान्दीश्लोक इत्यपि भ्रम एव । पञ्चममयूखे शब्दालङ्कारान्निरूप्य 'उपमा यत्र सादृश्ये'त्यादिना अर्थालङ्कारप्रस्तावे नान्द्या एवाभावात् । तथापि

---

१ 'परत्वकथनावश्यम्भावात्' इति **ख.** पाठः २ 'शीलनेन०' इति **ग. घ.** पाठः
३ 'अयं चन्द्रालोकः कालिदासकृत इति काचित्प्रथा वर्तते । सा निर्मूला । किन्तु अयं याज्ञिकश्रीमहादेवात्मजेन सुमित्राम्बागर्भसंभूतेन कौण्डिन्यवंशतिलकेन पीयूषवर्षापरनामधेयेन **जयदेवनाम्ना** महाकविना विरचितः इति निश्चीयते । चन्द्रालोके 'चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती' । 'महादेवस्सत्रप्रमुखमखविद्यैकचतुरः सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ । अनेनासावाद्यस्सुकविजयदेवेन रचिते चिरं चन्द्रालोके सुखयतु मयूखस्सुमनसः ॥' 'पीयूषवर्षप्रभवं चन्द्रालोकम्मनोहरम् । सुधानिधानमासाद्य श्रयध्वं विबुधा मुदम् ॥' जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः । सूक्तिपीयूषवर्षस्य जयदेवकवेर्गिरः ॥' इत्यादीनां पद्यानां सत्वात् ॥
४. अस्मत्संपादितेषु पुस्तकेषु 'अलङ्कारमयूखः । तता ध्वनिमयूखः ।' इत्येव पाठक्रमो लिखितः । व्यञ्जनामयूखः **क. ख. ग.** पुस्तकेषु दशमत्वेन परिगणितः । **घ.** पुस्तके तु 'व्यञ्जनामयूखः' इत्येतन्न दृश्यते । तत्पुस्तकरीत्या नवमयूखास्सम्पद्यन्ते । तदेतत्प्रामादिकम् । दशमयूखमण्डिते चन्द्रालोके व्यञ्जनायास्सप्तमे ध्वनिमयूखे निरूप्यमाणत्वात् षष्ठे रसानां निरुच्यमानत्वाच्च । तस्मात्पञ्चमस्यालङ्कारमयूखस्य सप्तमस्य ध्वनिमयूखस्य च मध्ये षष्ठत्वेन रसमयूखः परिगणनामर्हतीति ।

**येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।**
**प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते ॥**

अथ उपमा—

**उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।**
**हंसीव कृष्ण! ते कीर्तिस्स्वर्गंगामवगाहते ॥**

---

अर्थालङ्कारेषु न कृत्स्नः । सर्वेषामलङ्काराणां अनिरूपणात् । तदीयलक्ष्यलक्षणकारिकाणां दुरधिगमत्वात् तत्र निरूपितानामलङ्काराणां तत्रत्यलक्ष्यलक्षणकारिकातात्पर्यैर्विवरणार्थः, अवशिष्टानां स्वयं लक्ष्यलक्षणकथनेनै स्वस्य एतद्ग्रन्थनिर्माणप्रयासस्सफल इति, न तत्र वैफल्यचोद्यावकाश इति परिहरन्नाह—**येषामिति** । क्वचित् चन्द्रालोकस्थानामपि लक्षणश्लोकानां परित्यागेन अभिनवविरचनं दृश्यते । यथा । 'उपमायत्र' इति लक्षणश्लोकः तदीय एव । लक्ष्यश्लोकस्तु, 'हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव' इति । तदीयलक्ष्यपरित्यागेन हंसीवेत्युदाहरणान्तरं स्पष्टम् । क्वचित् लक्षणश्लोकोऽप्यन्यथा दृश्यते । यथा । अतिशयोक्तौ 'रूपकातिशयोक्तिस्स्यात् रूपं रूपकमध्यगम् ।' इति तदीयलक्षणश्लोकः । अत्र त्वन्यथेति स्पष्टं । क्वचिदुभयमप्यन्यथा दृश्यते । यथा । रूपके 'यत्रोपमानचित्रेण सर्वथाप्युपरज्यते । उपमेयमयी भित्तिः तत्र रूपकमिष्यते ॥' इत्यादिस्तदीयो लक्ष्यलक्षणश्लोकः । अत्र तु तदुभयमप्यभिनवमेवेति स्फुटम् । अतः प्राय इत्युक्तम् । **इतरेषामिति** । तत्रानिरूपितानामित्यर्थः ।

तत्र इतरालङ्कारापेक्षया अभ्यर्हितत्वात् उपमायाः तामादौ लक्षयांबभूवालोककृदिति तदीयोपमालक्षणप्रतिपादकं श्लोकमाह—**उपमेति** । अयमभिसन्धिः । सर्वेभ्योऽलङ्कारेभ्यस्तावदुपमाभ्यर्हिता । यतः अनन्वयोपमेयोपमाप्रतीपस्मृतिमत्ससन्देहभ्रान्तिमद्रूपकपरिणामोल्लेखापह्नुत्युत्प्रेक्षातिशयोक्तिसमासोक्तितुल्ययोगितादीपकप्रतिवस्तूपमादिषु सादृश्यरूपोपमा तावदनुगता । न च तां विना एते विच्छित्तिं सहृदयहृदयानामादधति । यतस्तस्या एव एते वचोभङ्गीभेदेन परिणामाः । मुखं मुखमिव । इंदुरिव मुखं मुखमिवेन्दुः । इत्यनन्वयोपमेयोपमे । मुखमिवेंदुरिति प्रतीपम् । इंदुमवलोक्य तन्वीमुखं स्मरामीति स्मृतिमान् । इंदुर्मुखं वेति ससंदेहः । इंदुधिया मुखमनुधावंति चकोरा इति भ्रांतिमान् । पूर्णेंदुर्वदनमिति रूपकम् । दृगम्बुजेन वीक्षत इति परिणामः । कमलमिति मधुपैः इंदुरिति चकोरैः

---

तदपरिगणने तु लेखकप्रमादो हेतुरिति च विजानता मया तथात्वेन विन्यासः कृत इति विज्ञेयम् । १. **'हृदये खेलतोरुच्चैस्तन्वंगी स्तनयोरिव'** । इति चन्द्रालोकपाठः । २. न कृत्स्नः—असम्पूर्णः । सावशेष इत्यर्थः । ३. 'कथनार्थश्च' इति पाठस्समीचीनः । अन्यथा स्वस्य प्रयासः कथनेन सफल इत्यन्वयः कार्यः ।

**यत्रोपमानोपमेययोः सहृदयहृदयाह्लादितया चारु सादृश्यमुद्भूततयोल्लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते तत्रोपमालङ्कारः ।**

---

कामिनीवदनमिति कामुकैः गृह्यत इत्युल्लेखः । नेदं मुखं किं तु कोकनदमित्यपह्नुतिः । लावण्यसिन्धुलहरीसरस्सम्भवं कमलमिव मुखमित्युत्प्रेक्षा । कमलमिदमित्यतिशयोक्तिः । मुखं नेत्राङ्करुचिरमिति समासोक्तिः । अब्जं वदनं च भातीति तुल्ययोगिता । तत्रैवाब्जस्याप्रकृतत्वे दीपकम् । त्वन्मुखे अहं रज्यामि, चन्द्र एव हि चकोरस्सज्जत इति प्रतिवस्तूपमा । इत्येवमादिभिर्वचोविन्यासविशेषैरेषा विवर्तते । अतः अनेकालङ्कारविवर्तिनीत्वादियमभ्यर्हितेत्यस्याः प्रथममुक्तिः । अत एवोक्तं चित्रमीमांसायाम् । 'उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदात् । रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ।' इति । सर्वत्रात्र पूर्वार्धं लक्षणप्रतिपादकम् । उत्तरार्धमुदाहरणमिति विवेको[1] द्रष्टव्यः । श्लोकं व्याचष्टे—**यत्रेति** । काव्य इत्यर्थः । अत्र, द्वयोः सादृश्यं वर्ण्यते यत्र, तत्रोपमालङ्कार इत्येतावदुक्तौ 'प्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' इत्यादौ उपमालङ्कारापत्तिः । तत्र काव्यशशिनोरर्थरश्मीनां च सहृदय(हृदयाह्लादिसादृश्यरूपसहृदय)मनोरञ्जकत्वादिधर्मसाम्येन सादृश्यप्रतीतेः । अत उपमानोपमेययोरित्युक्तम् । कविसमयप्रसिद्ध्या उपमानोपमेयत्वयोग्ययोरित्यर्थः । न च काव्यशशिनोरुपमानोपमेयत्वयोग्यतास्ति । अतो नोक्तदोषः । गोसदृशो गवय इत्यादौ गोगवययोस्तथाभावेऽपि नोपमालङ्कार इति तत्रातिव्याप्तिपरिहाराय सहृदयहृदयाह्लादितयेति विशेषणम् । इदमुपलक्षणम् । अलङ्कारान्तराणामपि सहृदयमनोहारितायामेवोन्मेषात् । अत एव गौर्वाहीक इति न रूपकम् । स्थाणुर्वा पुरुषो वेति न ससन्देहः । इदं रजतमिति न भ्रान्तिमान् । नेदं रजतं किं तु शुक्तिरिति नापह्नवः । नूनमयं स्थाणुरिति नोत्प्रेक्षा । पुत्रेण सहागतः पितेति न सहोक्तिः । तेन विनागत इति न विनोक्तिः । घटः पटश्च भूतलेऽस्तीति न तुल्ययोगिता । तस्थस्थमिपां तान्तन्ताम् इति न यथासंख्यमित्यादि द्रष्टव्यम् । उद्भूततयेत्यादि व्यङ्ग्योपमाव्यावृत्त्यर्थम् । 'समराङ्गणमारूढं भवन्तं पश्यतां नृणाम् । भवं कल्पान्तसंक्रुद्धं द्रष्टुं नोत्कण्ठते मनः ॥' इत्यादौ तथाभूतं त्वां दृष्टवतः तथाभूतभवदर्शनमासीदिति प्रतीतेः, किंचित्कुर्वतः अशक्यान्यवस्तुकरणात्मा विशेषालङ्कारः । तेन च तथाभूतो भव इव तदा त्वं स्थित इति उपमा व्यज्यते । अत्र उपमायाः व्यङ्ग्यायाः प्राधान्येनालंकार्यता नालङ्कारता । न च ध्वन्यमानस्यालङ्कार्यत्वे अलङ्कारो ध्वन्यत इति वदतो व्याघातः । अन्यत्र वाच्यकक्ष्यां गाहमानस्य तस्य अलङ्कारत्वमासीदिति ब्राह्मणश्रमणन्यायेन तत्रालङ्कारतेति सिद्धान्तात् । अत एव 'निरुपादानसम्भारमभित्तावेव तन्वते । जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥' इत्यत्र प्रसिद्धशिल्पिव्यतिरेको ध्वन्यत इति व्यतिरेकालङ्कारध्व-

---

१. 'प्रायशो विवेक' इति **ख.** पाठः । ५. 'हृदयाह्लादिसादृश्यरूपसहृदय' इत्येतत् **ग.** पु-

निमुदाहृत्य प्रागुदाहृतरीत्या अलङ्कारतोपपादिता प्राचीनैः । अतः अव्यङ्ग्यत्वपर्यवसानादस्य न व्यङ्ग्योपमायामतिव्याप्तिः । ततश्च उपमानोपमेयत्वयोग्यताशालिनोः सहृदयहृदयसम्मदाधायित्वे सति अव्यङ्ग्यं सादृश्यं उपमालङ्कार इति लक्षणमुक्तं भवति । वस्तुतस्तु, चारुत्वे सति अव्यङ्ग्यं सादृश्यमुपमेत्येतावदेव लक्षणमिह विवक्षितम् । न तु उपमानोपमेयत्वयोग्ययोरित्यपि । 'ग्रथ्नामि काव्यशशिनम्' इत्यादौ चारुत्वाभावादेव अतिव्याप्त्यसम्भवात् । अत एत द्वयोस्सादृश्यलक्ष्मीरित्येवोक्तम् । तदप्यनन्वये अतिव्याप्तिनिरासाय । न चैवमप्युपमेयोपमाप्रतीपयोरतिव्याप्तिः । तयोरुक्तसादृश्यवर्णनसत्त्वेन उपमालङ्कारान्तर्भावस्येष्टत्वात् । तृतीयसदृशव्यवच्छेदस्य प्रसिद्धोपमानप्रातिलोम्येन प्रसिद्धोपमेयोत्कर्षस्याधिकस्य तत्र फलस्य च सद्भावेन तत एव तयोरुपमातः पृथगुक्तेः । उपमेयोपमायां प्रकृताप्रकृतगोचरोपमाद्वयरूपतया प्रतीपे अप्रकृतविषयतया च तस्याः प्रतीतेः । अन्यथा अप्रकृतविषयस्मृत्यादेरपि प्रकृतविषयस्मरणादितोऽलङ्कारान्तरत्वापत्तेश्च । अतः 'न लक्षणस्य तज्ज्ञापनं दोष' इति चित्रमीमांसायां कण्ठरवेण ग्रन्थकृदभिहितवान् । वस्तुतस्तु, सादृश्यप्रतीतिमात्रोद्देश्यककविसंरम्भविषयीभूतचारुसादृश्यमुपमेति विवक्षितम् । तेन अनन्वयोपमेयोपमाप्रतीपेषु न क्वाप्यतिव्याप्तिः । तत्र सादृश्यस्यानुमत्वद्योतनतृतीयसदृशव्यवच्छेदोपमेयोत्कर्षफलकत्वेन कविसंरम्भगोचरतया सादृश्यबोधमात्रोद्देश्यककविसंरम्भविषयत्वाभावात् । एवं 'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेतां । तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥' इत्यादावपि । यत्र न सादृश्यप्रतीतिमात्रे कविसंरम्भः । सादृश्यवर्णनस्य यद्यालिङ्गितत्वेन (यदि तथाविधौ प्रवाहौ स्तः तदा उपमीयेत ।)[1] न च तथाविधौ प्रवाहौ स्तः । अतोऽनुपमेमेवास्य वक्ष इति अनुपमत्वद्योतनमेव कविसंरम्भगोचर इति लक्षणानुपपत्त्यभावात् । न चानन्वये सादृश्यप्रतीतेरभावेन तस्य व्यवच्छेद्यत्वेऽपि प्रतीपोपमेयोपमयोः सादृश्यप्रतीति सत्त्वेन सङ्ग्राह्यतया तद्व्यवच्छेदोऽनुपपन्न इति उक्तलक्षणस्य तयोरव्याप्तिरिति वाच्यम् । कविसंरम्भगोचरस्यैव फलत्वेन तत्र सादृश्यप्रतीतिव्यतिरिक्तस्य तृतीयसदृशव्यवच्छेदादेरेव फलतया, तत्प्रतीत्युपायतामात्रेण तत्र सादृश्यप्रतीतेः, न तन्मात्रपर्यवसायिता कविसंरम्भस्येति, फलभेदात् तयोरुपमातः पृथग्भावस्य उचितत्वात् । द्वारतया सादृश्यप्रतीतिस्थलेऽपि उपमास्वीकारे अनन्वयेपि तत्सत्त्वेन तस्यापि सङ्ग्राह्यत्वापत्तेः । अत एव मम्मटमंखुकादिभिः तयोरनन्वयस्येवोपमातः पृथक्परिगणनं कृतम् । न च स्मृत्यादेरप्यप्रकृतविषयस्य प्रकृतविषयस्मृत्यादितः पृथग्भावप्रसङ्ग इति वाच्यम् । फलभेदाभावेन तत्र पृथग्भावासम्भवात् । एतेन प्रकृताप्रकृतोपमाद्वयाप्रकृतोपमारूपतया न तयोः पार्थक्यमिति निरस्तम् । उक्तरीत्या सादृश्यवर्णनसत्त्वेऽपि तत्रोपमात्वासम्भवादिति दिक् । यत्तु, स्वनिषेधापर्यवसायिसादृश्यवर्णनमुपमे-

---

स्तके न दृश्यते । १. ग. पुस्तके 'यदि तथाविधौ' इत्यारभ्य 'उपमीयेत' इत्यन्तं न दृश्यते । किन्तु २. तथाविधौ प्रवाहौ न स्तः, इत्येतावदेव दृश्यते ।

हंसीवेत्याद्युदाहरणं । इयञ्च पूर्णोपमेत्युच्यते । हंसी कीर्तिः स्वर्गङ्गावगाहनमिवशब्दश्चेत्येतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् ।

यथा वा—

गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥

---

ति उपमालक्षणान्तरं मीमांसाकृतो वर्णयन्ति । तच्चिन्त्यम् । रूपकतुल्ययोगितादिष्वपि सादृश्यस्य गम्यतया वर्णनसत्त्वादतिव्याप्तेः । न च तत्र सादृश्यस्य वर्णनमेव नेति नोक्तदोष इति वाच्यम् । न हि शक्तिलक्षणाभ्यां प्रतिपादनमेव वर्णनं न तु व्यञ्जनव्यापारेणेति नियमः । तथा सति वर्णनविरहेणैव व्यङ्ग्योपमाव्यावृत्तिसम्भवेन तद्व्यवच्छेदाय अव्यङ्ग्यत्वविशेषणस्यायुक्तत्वापत्तेरिति दिक् । **हंसीवेत्यादीति** । अत्र यद्यपि स्वर्गङ्गावगाहनस्य उपमाने हंस्यां मुख्यत्वेऽपि कीर्तौ तस्यासम्भवादुभयानुगतिक्षमत्वाभावात् न साधारणता युज्यते । तथाऽपि उपमेयायां कीर्तौ उपचारेण सम्बन्धमात्रपरतया तस्य साधारणत्वं द्रष्टव्यम् । **उपमावाचकानामिति** । सादृश्यप्रतिपादकानामित्यर्थः । तेन सादृश्यलाक्षणिकानां सुहृदादिशब्दानामपि सङ्ग्रहः । अत्र कीर्तेर्हंस्युपमया कवेर्वर्ण्यविषयकभावव्यञ्जनात् अलङ्कारेण भावध्वनिः । **गुणदोषाविति** । गुणः अभिज्ञत्वादिः । दोषः अनृतवादित्वादिः । तौ जानन् बुधः । इन्दुक्ष्वेलावुपाददानः भगवानीश्वरः आद्यमिन्दुं शिरसा वहति परं द्वितीयं गरलं कण्ठे स्थापयति कण्ठदेशात्

---

१. सादृश्यप्रतिपादकास्त्रिविधाः वाचका लक्षका व्यञ्जकाश्चेति । ते च काव्यादर्शे दण्डिनोक्ताः । यथा । 'इव वद्वा यथा शब्दाः समाननिभसन्निभाः । तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः ॥१॥ प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः । सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ २ ॥प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः । सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥ ३ ॥ कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिनिधी अपि । सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः ॥ ४॥ समासश्च बहुव्रीहिरशशाङ्कवदनादिषु । स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ५ ॥ आक्रोशत्यवजानाति कदर्थयति निन्दति । विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति ॥६॥ तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति । तेन सार्द्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ७ ॥ तत्पदव्यां पदं धत्ते तस्य कक्ष्यां विगाहते । तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ८ ॥ तस्य चानुकरोतीति शब्दास्सादृश्यसूचकाः ॥' इति॥ अत्र इवादयो वाचकाः। 'स्पर्द्धते' इत्यादयो लक्षकाः। स्पर्धादिधातूनां सादृश्ये सङ्केतितत्वाभावात्। 'तस्य मुष्णाति सौभाग्यं' इत्यादयो व्यञ्जका

अत्र यद्यप्युपमानोपमेययोर्नैकस्साधारणो धर्मः । उपमाने ईश्वरे चन्द्रगरलयोर्ग्रहणमुपादानं, तयोर्मध्ये पूर्वस्य चन्द्रस्य शिरसा श्लाघनं वहनं, उत्तरस्य गरलस्य कण्ठे नियमनं संस्थापनं, उपमेये बुधे गुणदोषयोर्ग्रहणं ज्ञानं, तयोर्मध्ये पूर्वस्य गुणस्य शिरसा श्लाघनं शिरःकम्पेनाभिनन्दनं, उत्तरस्य दोषस्य कण्ठे नियमनं कण्ठादुपरि वाचा अनुद्घाटनमिति भेदात् ।

तथापि चन्द्रगरलयोर्गुणदोषयोश्च बिम्बप्रतिबिम्बभावेनाभेदादुपादान-ज्ञानादीनां गृह्णन्नित्याद्येकशब्दोपादानेनाभेदाध्यवसायाच्च साधारणधर्मतेति पूर्वस्माद्विशेषः ।

वस्तुतोभिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालङ्कारिकसमयः ।

---

बहिर्नापनयति[1] । तद्वत् गुणं शिरसा अभिनन्दन् दोषंश्च कण्ठादुपरि बहिरनुद्घाटयन् भाति । इत्युक्त्या, यथा परमेश्वरः सकलजगदाह्लादिनमिन्दुमुत्तमाङ्गे दधानः निखिलजगदुद्वेगाय प्रवृत्तस्य गरलस्य कण्ठदेशे स्थापनेन जगत्परिपालयन् सर्वोत्तमः । तथा बुधजनोऽपि परकीयं गुणं जानन् वहुधा प्रकटयन् तस्य परस्योपकरोति । परानर्थहेतुं दोषं च अप्रकाशयन् तमनर्थाद्विमोचयन् महापुरुषस्वभावानतिवृत्तेः पुरुषधौरेय इति उपमया बुधजनस्य इतरापेक्षया उत्कर्षप्रतीतेरलङ्कारेण व्यतिरेकध्वनिरिति भावः । नन्वत्र बुधेश्वरयोरुपमानोपमेययोरनुगतैकधर्माभावात् नोपमा संभवतीत्यभिप्रेत्य, शङ्कते—**अत्रेति** । कस्य चिदेकस्य धर्मस्य वास्तवानुगत्यभावेऽपि बिम्बप्रतिबिम्बभावकृताभेदोपजीवनेन गृह्णन्निति श्लेषभित्तिकाभेदाध्यवसायलब्धसांपातिकाभेदेन[2] ज्ञानवहनयोरेकत्वमापाद्य गुणदोषग्रहणस्य उभयसाधारण्यं सम्भवतीत्यभिप्रेत्य, परिहरति—**तथापीति** । बिम्बप्रतिबिम्बभावं लक्षयति—**वस्तुत इति** । **पृथगुपादानमिति** । अत एव धर्मलुप्तायामनुगामिताप्रयुक्तमेव धर्मस्य साधारण्यं न बिम्बप्रतिबिम्बभावादिकृतमपीति । 'मलय इव जगति पाण्डुः वल्मीकसमो नृपोऽम्बिकातनयः । जम्बूनदीव कुन्ती गान्धारी सा हलाहलेव सरित् ॥' इत्यादौ चन्दनद्रुमाणां पाण्डवानां उरगाणां धार्तराष्ट्राणां जाम्बूनदगरलादीनां च न बिम्बप्रतिबिंबभावेन साधारणधर्मता । जगदाह्लादकधर्मवत्त्वस्य (तदुद्वेजकधर्मवत्त्वस्य च)[3] मलयपाण्ड्वाद्युपमानोपमेयानुगतस्य धर्मस्यानुपादानात् धर्मलोप इति

---

इति च बोद्धव्यम् । १. 'बहिर्नार्पयतीति' ग. पाठः । २. सांपातिकाभेदेन—आरोपिताभेदेनेत्यर्थः । ३. 'तदुद्वेजकधर्मवत्त्वस्य च' इत्येतत् क. ख. पुस्तकयोर्न दृश्यते ।

नात्र बिम्बप्रतिबिम्बभावः । न च चन्दनद्रुमपाण्डवादीनां जगदाह्लादकत्वादिकृतसादृश्येन अभेदाध्यवसायसम्भवात् बिम्बप्रतिबिम्बभावेन साधारण्यं किं न स्यादिति वाच्यम् । 'पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन । आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥' इति बिम्बप्रतिबिम्बभावकृतसाधारणधर्मनिर्देशस्थले शब्दोपात्तानां हरिचन्दनबालातपादीनामिव अरुणिमादिकृतसादृश्यमादाय बिम्बप्रतिबिम्बभावेन साधारणधर्मत्वसम्भवेन, तमादाय उपमानिर्वाहात् न अनुगामिधर्मकल्पनया तन्निर्वाहक्लेशस्समाश्रयणीय इति तत्र बिम्बप्रतिबिम्बभावसम्भवेऽपि अत्र चन्दनद्रुमपाण्डवादीनां न शब्देन उपादानमस्ति । येन बिम्बप्रतिबिम्बभावप्रयोजकसादृश्यगवेषणया साधारण्यमध्यवसीयेत । न च मुख्ये सम्भवति अमुख्यकल्पनं न्याय्यमिति जगदाह्लादकारिधर्मवत्त्वस्यानुगामिन एव धर्मस्यानुपादानमिति शब्दोपादाननिबन्धनाबिम्बप्रतिबिम्बभावादेर्धर्मलुप्तायामसम्भवात् न पूर्णायामिव धर्मलुप्तायां बिम्बप्रतिबिम्बभावादिरिति । अनेनैवाभिप्रायेण लुप्तायां तु नैवं भेदाः । तस्यां साधारणधर्मस्यानुगामित्वनियमादिति चित्रमीमांसायां ग्रन्थकृताभिहितम् । एवं च । 'विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषं । अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥' अत्र हि प्रासादास्त्वां स्वात्मना तुल्यं कर्तुं प्रभवन्तीति वाक्यार्थः । ततश्च यथा 'रूपयौवनलावण्यस्पृहणीयतराकृतिः । पुरतो हरिणाक्षीणामेष पुष्पायुधीयति ॥' इति वाचकोपमेयलुप्तोदाहरणे 'एष' इति प्रथमान्तनिर्दिष्टस्य पुष्पायुधमिवाचरतीत्यत्र उपमायामुपमेयत्वान्वयायोग्यत्वात् अर्थलभ्यस्वात्मन उपमेयभाव इति तमादाय स्वात्मानं पुष्पायुधमिवाचरतीति वाक्यार्थनिर्वाहात् स्वात्मन उपमेयस्य लोपात् उपमेयलुप्ता । तथा अत्रापि प्रथमान्तनिर्दिष्टानां प्रासादानां उपमानत्वेन अन्वयायोगात् अर्थलभ्यं स्वात्मन उपमानत्वमादायैव उपमा निर्वाह्येत्युपमानलुप्ता उपमा । विद्युद्वनितादयश्च बिम्बप्रतिबिम्बभावेन साधारणधर्मतया निर्दिष्टाः । एवं, 'स वृत्तचौलश्चलकाकपक्षकैः अमात्यपुत्रैस्सवयोभिरन्वितः । लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥' इत्यत्र यथा हि कश्चित् जलचरः स्वाभिमतं सर्वमादाय स्वीयैस्सह नदीमुखेन समुद्रं प्रविशति, तथा रघुरपि लिपिग्रहणेन वाङ्मयं जगाहे । इत्यर्थप्रतीत्या नदीमुखकरणकसमुद्रप्रवेशकर्तुः कस्य चित् विशिष्यानुपादानात् अत्र उपमानलुप्ता उपमा स्फुटं प्रतीयते । अत्र लिपिग्रहणनदीमुखयोःवाङ्मयसमुद्रयोश्च बिम्बप्रतिबिम्बभावेन साधारणधर्मता दृश्यते । न च 'त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव ।' इत्यत्र, यथा पितुराज्ञया पुरस्तादहं भूमिमत्यजं एवमद्य अपवादभयेन सीतां त्यक्ष्यामीति वाक्यार्थप्रतीत्यनुसारात् एकस्यैव रघुपतेः उपमानोपमेयभाव इति अभिन्नधर्मिकोपमावत्, यथा नदीमुखेन रघुः समुद्रं प्राविशत् तथा लिपिग्रहणेन स एव वाङ्मयं प्रविवेशेत्येकस्यैव रघोरुपमानोपमेयभावप्रतीतेः अभिन्नधर्मिकोपमा, न तूपमानलुप्तेति वक्तुं शक्यम् । तत्र पित्राज्ञया रघुपतेः समुद्रनेमित्यागवत् नदीमुखेन

**[१]वर्ण्योपमानधर्माणामुपमावाचकस्य च ।**
**एकद्वित्र्यनुपादानाद्भिन्ना लुप्तोपमाष्टधा ॥**
**तडिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम ।**
**कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ॥**
**यत्तया मेलनन्तत्र लाभो मे यश्च तद्रतेः ।**
**तदेतत्काकतालीयमवितर्कितसम्भवम् ॥**

उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयोस्त्रयाणां वा प्रतिपादकशब्दा-

---

धुकरेणेव पायंपायं न तृप्यते ॥' इत्यादौ नायकमधुकरयोः बिंबप्रतिबिंबभावापन्नयोरिवशब्दोक्तसादृश्ये प्रतियोगित्वानुयोगित्वाभ्यामन्वीयमानयोरभेदाध्यवसायासंभवात् । अतोऽत्र मधुकरनायकयोस्सादृश्येन साधारणतामाश्रित्य उपमा निर्वाह्येति । एवमुपचारेण साधारणधर्मनिर्देशः, 'उद्भवन्तमुदितार्चिषस्ततो भानुमन्तमिव हेमभूभृतः । पङ्कजैरिव कुमारमीक्षणैर्विस्मयेन विकचैः पपुर्जनाः ॥' इत्यत्र द्रष्टव्यः। विकचत्वस्य मुख्यस्य उपमेयेषु वीक्षणेष्वसम्भवेन तस्य विकचपदस्य प्रसादलाक्षणिकत्वात् । क्वचित् श्लेषेण धर्मनिर्देशः । यथा— 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव ।' अत्र सकलकलमिति श्लेषेण उपात्तयोः कलासाकल्यकलकलशब्दवत्त्वयोः श्लेषभित्तिकाभेदाध्यवसायमूलया भेदे अभेद इत्येवं रूपया अतिशयोक्त्या ऐक्यमापाद्य साधारणतासम्पादनेन उपमानिर्वाहः । क्वचित्समासभेदाश्रयणेन यथा—'तया विवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या । प्रसन्नचेतःसलिलः शिवोऽभूत् संसृज्यमानः शरदेव लोकः ॥' अत्र विवृद्धाननचन्द्रकान्त्येति विशेषणं, आननमेवचन्द्रः आननं चन्द्र इवेति समासभेदाश्रयणेन लब्धार्थद्वयस्याभेदाध्यवसायेन शरदपर्णयोस्साधारणमिति दिक् ॥

इत्थं लक्षितायाः उपमायाः पूर्णालुप्ताभेदेन[३] द्विविधायाः पूर्णारूपभेदं सोदाहरणमभिधाय लुप्तोपमां विभजते—**वर्ण्येति** । अत्र वर्ण्यपदं सादृश्यानुयोगिपरम् । अन्यथा 'त्वत्कीर्तेः पुरतो भाति ज्योत्स्ना ध्वान्तमलीमसा ।' इति अप्रकृतानुयोगिकलुप्तोपमाया असङ्ग्रहप्रसङ्गात् इत्यभिप्रेत्य, वर्ण्यपदं उपमेयपरतया व्याचक्षाणः श्लोकं सोदाहरणं व्याचष्टे—**उपमेयादीनामिति** । अत्र आदिशब्दग्राह्याः उपमानसाधारणधर्मोप-

---

१. अयं लुप्तोपमाविभागः चन्द्रालोके न दृश्यते । कुवलयानन्दकारेण विरच्य संयोजितः ।

२. पूर्णायां अनुगामितावस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावश्लेषोपचारसमासान्तराश्रयणैष्षड्भिरपि साधारणधर्मनिर्देशेन षड्भेदास्संपद्यन्ते । ते चात्र उदाहृताः । क्वचिदेषां यथासम्भवं मिश्रणेनापि बहवो भेदा दृश्यन्ते । ते च विस्तरभिया नोदाहृताः । ते चित्रमीमांसायां द्रष्टव्याः इत्यतः दिक्प्रदर्शनं कृतमिति भावः ३. प्राचीनानां मते तु उपमाविभागः एवं—तथाहि—उपमा द्विविधा, पूर्णा लुप्ता च । तत्र पूर्णा—श्रौती, आर्थी चेति

भावे लुप्तोपमेत्युच्यते । सा चाष्टधा । यथा—वाचकलुप्ता (१) धर्मलुप्ता (२) धर्मवाचकलुप्ता (३) वाचकोपमेयलुप्ता (४) उपमानलुप्ता (५) वाचकोपमानलुप्ता (६) धर्मोपमानलुप्ता (७) धर्मोपमानवा-

---

मावाचकाः । एवमादीनां चतुर्णां शक्त्या निरूढलक्षणया वा प्रतिपादकशब्दाभावे इत्यर्थः । ततश्च 'वर्ण्योपमानधर्माणा'मिति कारिकायां अनुपादानशब्दो योग्यतानुसारेण उपमावाचके अनुच्चारणपरः । अन्यत्राप्रतिपादनपर इति विवृतं भवति । एतेन 'उपमेयादीनां चतुर्णां' मित्यत्र कारिकानुसारेण आदिपदेन उपमावाचकस्य सङ्ग्रहे प्रतिपादकशब्दाभाव इत्यस्यासङ्गतिः । एतद्दोषनिवृत्तये आदिपदस्योपमानपरत्वे मूलाननुरोधः । कारिकायामपि अनुपादानशब्दस्य अप्रयोगपरत्वे वर्ण्योपमेयधर्मेष्वनन्वयप्रसङ्गः । अप्रतिपादनपरत्वे उपमावाचकानन्वयप्रसङ्ग इत्युभयत्र दूषणमलग्नकं वेदितव्यं । उपमेयादीनामिति आदिपदेन कारिकायामुपसर्जनतया निर्दिष्टाया उपमाया एव परामर्शात्, अनुपादानशब्दस्य तन्त्रेण अर्थद्वयपरतया व्याख्यातव्यत्वात् । ततश्च उपमेयाद्यन्यतमप्रतिपादकशब्दशून्यत्वं लुप्तोपमासामान्यलक्षणमुक्तं भवति । अत्र वाचकेति विहाय प्रतिपादकशब्दशून्यत्वोक्त्या चन्द्रसुहृन्मुखमित्यादौ सुहृदादिशब्दस्य सादृश्यवाचकत्वाभावेन न वाचकलुप्तोपमाप्रसङ्गः । सुहृदादिशब्दस्य सादृश्यवाचकत्वाभावेऽपि कविसमयप्रसिद्ध्यनुरोधेन निरूढलक्षणया सादृश्यप्रतिपादकत्वात् । अष्टधेति कारिकोक्तमष्टधात्वं विवेचयति—**साचेत्यादिना** । सर्वत्रात्र लुप्तशब्दो भावसाधनक्तप्रत्ययान्तो

---

द्विधा भवन्ती वाक्यसमासतद्धितगामितया षोढा । लुप्ता च उपमानलुप्ता, धर्मलुप्ता, वाचकलुप्ता, धर्मोपमानलुप्ता, वाचकधर्मलुप्ता, वाचकोपमेयलुप्ता, धर्मोपमानवाचकलुप्तेति तावत्सप्तविधा । तत्रोपमानलुप्ता—वाक्यगा, समासगाचेति द्विविधा । धर्मलुप्ता—पूर्णावदेव विभागवती । किन्तु श्रौती तद्धितगता न सम्भवतीत्यतः धर्मलुप्ता पञ्चविधैव भवति । वाचकलुप्ता—समासगता, कर्मक्यज्गता, आधारक्यज्गता, क्यङ्गता, कर्मणमुल्गता, कर्तृणमुल्गता चेति षड्विधा । केचित्तु वाचकलुप्ता, 'कर्तर्युपमाने' इति णिनावपि दृश्यते, अतः णिनिगतापि सम्भवतीति' वाचकलुप्ता सप्तविधेति वदन्ति । धर्मोपमानलुप्ता—वाक्यगता समासगता चेति द्विविधा । वाचकधर्मलुप्ता क्विब्गता, समासगता चेति द्विविधैव । वाचकोपमेयलुप्ता त्वेकविधा । धर्मोपमानवाचकलुप्ता तु समासगतैकविधा । इति एवं साकल्येनैकोनविंशतिर्लुप्ताभेदाः विंशतिर्लुप्ता भेदा इति च मतद्वयं सिद्धम् । अन्ये तु 'तदेतत्काकतालीयमवितर्कितसम्भवम् ।' इत्यादिषु प्रत्ययार्थोपमायामुपमानलुप्ता सम्भवतीति, उपमानलुप्तायाः त्रैविध्यं, तत्रैव समासार्थोपमायां वाचकोपमानलोपसम्भवात् लुप्ता सामान्यभेदस्य अष्टविधत्वं, अत्रैव 'अवितर्कितसम्भव'मित्यस्याभावे धर्मोपमानलोपसम्भवात् धर्मोपमान-

लोपपरः । ततः अर्शाद्यच्प्रत्ययेन लुप्तशब्दो लोपवत्पर इति लोपवती उपमा लुप्तोपमे-त्यादिरवयवार्थो द्रष्टव्यः । यत्तु 'वदनं मृगशाबाक्षि ? चन्द्रच्छायानुकारि ते ।' इत्यत्र चन्द्रच्छायानुकारीत्यनेन चन्द्रकान्त्यनुसारिकान्तिमत्त्वविवक्षया वदनगतकान्तेरुपमेयभूताया उभयकान्तिसाधारणधर्मस्य चानुपादानात् धर्मोपमेयलुप्तारूपस्य नवमस्य भेदस्यापि सद्भावान्न लुप्ताया अष्टविधत्वनियमः । तथा धर्मलुप्तायामपि क्वचिद्धर्मस्य अंशत उपादानानुपादानकृतोऽपि भेदो दृश्यते । यथा—'दलविततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः । मदचपलचकोरचञ्चुकोटीकबलनतुच्छमिवान्तरान्तराऽभूत् ॥' अत्र तिलमिश्रास्तण्डुलाः तिलतण्डुला इति मध्यमपदलोपिसमासनिष्पन्नात्तिलतण्डुलशब्दात्तिलतण्डुल इवाचरतीत्याचारार्थे क्विपि कृते ततो निष्ठायां तिलतण्डुलितामिति रूपम् । एवं च तण्डुलमृगाङ्करोचिषोरुपमानोपमेययोस्तिलतमसी बिम्बप्रतिबिम्बभावेन साधारणधर्मत्वेन विवक्षिते । तयोस्तिलस्य प्रतिबिम्बस्योपादानमस्ति न तद्बिम्बस्य तमस इति धर्मस्यांशतोऽनुपादानमिति स्पष्टमेवेति, तत्कृतोऽपि भेदो धर्मलुप्तायां द्रष्टव्य इति । तन्न । 'वदनं मृगशाबाक्षी'त्यत्र चन्द्रच्छायानुकारीति नोपमेयलोपः । तत्र छायानुकारिशब्दस्य सदृशार्थकतया उपमेयस्य वदनस्य उपादानेन उपमेयलोपासम्भवात् । न च चन्द्रच्छायानुकारिछायावत्त्वस्य तदर्थतया चन्द्रवदनछाययोरेवोपमानोपमेयभावेन मुखच्छायारूपोपमेयानुपादानादुपमेयलुप्तात्रेति शङ्कनीयं । तथात्वे मुखचन्द्रयोरूपमानोपमेयभावानापत्त्या मुखस्य बिम्बप्रतिबिम्बभावेन साधारणधर्मभावापत्त्या च तस्य प्राधान्येनानन्वयप्रसङ्गात् । न च मुखचन्द्रगतधर्मयोरुपमया तद्धर्मिणोरपि उपमा गम्यत इति न मुखस्य अनन्वयप्रसङ्ग इति

---

लुप्तायास्त्रैविध्यं 'चञ्चापुरुषस्सोयं योऽत्यन्तं विषयवासनाहीनः ।' इत्यत्र स्वहिताकरणरूपस्य धर्मस्यानुपादाने कनो लोपे वाचकधर्मलोपसम्भवात् तस्यास्त्रैविध्यं, चञ्चापुरुषस्सोयं यः स्वहितं नैव जानीते ।' इत्यत्र 'इवेप्रतिकृता'विति कनि 'लुम्मनुष्ये' इति लुपि चञ्चेवेत्यर्थे 'कोकिल इवालपति कोकिलालापिनीत्यत्र 'कर्तर्युपमाने' इति णिनौ च वाचकलोपसम्भवात् वाचकलुप्ताया नवविधत्वं च, निरूप्य लुप्तोपमायाः षड्विंशतिविधत्वमुपवर्णयन्ति । एवं च लुप्ता भेदाः षड्विंशतिरिति तृतीयमपि मतं वर्तते । पूर्णाभेदैष्षड्भिस्सह उपमाभेदाः पञ्चविंशतिः षड्विंशतिः द्वात्रिंशदिति च मतत्रैविध्यं फलितम् । एवंभेदाया उपमाया वस्त्वलङ्काररसरूपाणां प्रधानव्यङ्ग्यानां वस्त्वलङ्कारयोर्वाच्ययोश्च उपस्कारकतया प्रत्येकं पञ्चविधत्वं रसगङ्गाधरकारः अभिदधौ । एवं च प्राचां मते पञ्चविंशतिविधायाः पुनः पञ्चविधत्वे सपादशतं, षड्विंशतिविधायाः त्रिंशदधिकं शतं, द्वात्रिंशद्भेदवादिनां मते षष्ट्युत्तरशतं च भेदास्सम्पद्यन्ते । एतेषां स्वरूपमुदाहरणानि च काव्यप्रकाशरसगङ्गाधरचित्रमीमांसादिषु प्रबन्धेषु द्रष्टव्यानि । किञ्च । उपमायाः न्यूनत्वं, अधिकत्वं, लिङ्गभेदः, वचनभेदः, असादृश्यं, असम्भवः, इति षड्दोषान् केचिन्निगदन्ति । अपरे तु उपमानाप्रसिद्धिमपि दोषत्वेन गणयन्ति । एषां दोषाणामपवादाश्च वर्तन्ते । एते सर्वेऽपि चित्रमीमांसायां ग्रन्थकृता सम्यक्प्रपञ्चिता इत्यलम् ।

चकलुप्ता (८) चेति । तत्रोपमानलोपरहिताश्चत्वारो भेदास्तटिद्गौरीत्यादिश्लोकेन प्रदर्शिताः । तद्वन्तो भेदा उत्तरश्लोकेन दर्शिताः । तत्र तटिद्गौरीत्यत्र वाचकलोपः तटिदिव गौरीत्यर्थे 'उपमानानि सामान्यवचनै'रिति स-

---

शङ्क्यम् । तथात्वे गम्यायां तस्यामुपमेयस्य मुखस्य तत्कान्तेश्चन्द्रकान्तिसादृश्येन बिम्बप्रतिबिम्बभावेन साधारणधर्मतया न धर्मलोपः इति न धर्मोपमेयलोपसम्भवः । नापि धर्मयोरुपमायामुपमेयस्य लोपः । गम्यविशेष्योपमाप्रयोजकबिम्बप्रतिबिम्बभावापन्नसाधारणधर्मभूतयोस्तत्कान्त्योरंशत उपादानानुपादानमात्रस्यैव ततो लाभात् । 'दलविततिभृतां तले तरूणा'मित्यत्र तिलतमसोर्बिम्बप्रतिबिम्बभावकृताभेदाध्यवसायेन एकतायां नोपमानानुपादानसम्भवः । विरोधात् । इह हि मृगाङ्करोचिषि तिलमिश्रतण्डुलोपमा वाक्यार्थः । तत्र तण्डुलोपमायां धावल्यादिः साधारणो धर्मः । 'दलविततिभृतां' इति विशेषणसामर्थ्यलभ्ये तमोरूपे मृगाङ्करोचिर्विशेषणे तिलोपमा । सा पुनरेकदेशे विशेषेण वाच्यतया वर्तत इति एकदेशविवर्तिनी । अत एव 'नेत्रैरिवोत्पलैः पद्मैः मुखैरिव सरःश्रियः । पदेपदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥' इत्यत्र उत्पलादेः नेत्रादिसादृश्यवर्णनात् सरःश्रियां नायिकौपम्यं गम्यत इति एकदेशविवर्तिन्युपमेति मङ्खुकादिभिरभ्युपगतम् । इयांस्तु विशेषः । प्राचीनोदाहरणे विशेषणोपमया विशेष्योपमाया गम्यत्वम् । इह तु विशेष्योपमया विशेषणोपमाया गम्यत्वमिति । यदपि 'त्वं येन तुल्यः स मया न दृष्टः' इत्यत्र नोपमासम्भवः । उपमानस्य विशिष्य बुद्धावनारोहादिति नोपमानलुप्तात्र सम्भवतीति । तदपि न । 'त्वं येन तुल्यस्स तु न त्रिलोक्याम्' इत्यादावुपमाननिषेधेन औपम्याप्रतीतेरुपमालङ्कारासम्भवेऽपि अत्र स्वादृष्टपुरुषे उपमानत्वाभ्यनुज्ञानेन तदौपम्यप्रतीतेर्विशिष्यानुपादानाच्च उपमानलुप्तायास्सम्भवात् । न ह्युपमानस्य विशिष्योपादान एवोपमेति नियमः । 'लिपेर्यथावद्ग्रहणेन वाङ्मयम्' इत्यत्र नदीमुखकरणकसमुद्रप्रवेशकर्तुरुपमानस्य विशिष्यानुपादानेन उपमानापत्तेः । अतो मूलोक्त एव विभागश्श्रेयानिति भावः । **तत्रेति** । उक्ताष्टविधलुप्तोपमास्वित्यर्थः । **उपमानलोपरहिता इति** । वाचकलुप्ता, धर्मलुप्ता, धर्मवाचकलुप्ता, वाचकोपमेयलुप्तेति, चत्वारो भेदा इत्यर्थः । **तद्वन्त इति** । उपमानलोपवन्त इत्यर्थः । **उत्तरश्लोकेनेति** । दर्शिता इति क्रियानुषङ्गः । उदाहरणे वाचकलोपमुपपादयति । **तत्रेति** । उपमानलोपरहितेषु चतुर्ष्वित्यर्थः । **तटिद्गौरीति** । समासपूर्वदशायां तटिदिव गौरीति विग्रहवाक्ये श्रुतस्य इवशब्दस्य सामासेऽनुपादानात् वाचकलोप इत्यर्थः । ननु, विग्रमवाक्ये श्रुतस्य इवशब्दस्य समासे लोपविधायकशास्त्राभावात् कुतो वाचकलोप इत्यत आह—**तटिदिवेति** । तटिदिवेत्यस्मिन्नर्थे 'उपमानानि सामान्यवचनैः' इति सूत्रेण उपमावाचकानि पदानि साधारणधर्मवाचकैः पदैः समस्यन्त इत्यर्थकेन समासविधानात्, तटिच्छब्दार्थगौरीशब्दार्थयोरेव परस्परान्वयेन इवशब्दोपादाने तत्रैव तटिदादिपदार्थान्व-

मासविधायकशास्त्रकृतः । इन्दुतुल्यास्येत्यत्र धर्मलोपः । सत्वैच्छिकः । न शास्त्रकृतः । कान्त्या इन्दुतुल्यास्येत्यपि वक्तुं शक्यत्वात् । कर्पूरन्तीत्यत्र धर्मवाचकलोपः । कर्पूरमिव आचरन्तीत्यर्थे विहितस्य कर्पूरवदानन्दनात्मकाचारार्थकस्य क्विप इवशब्देन सह लोपात् । अत्र धर्मलोप ऐच्छिकः । नयनयोरानन्दकरतया कर्पूरन्तीति तदुपादानस्यापि सम्भवात् । कान्त्या स्मरवधूयन्तीत्यत्र वाचकोपमेयलोपः । अत्र कान्त्येति विशेषणसामर्थ्यात् स्वात्मानं कामवधूमिवाचरन्तीत्यर्थस्य गम्यमानतया, स्वात्मन उपमेयस्य सहोपमावाचकेनानुपादानात् । सत्वैच्छिकः । स्वात्मानं स्मरवधूयन्तीत्युपमेयोपादानस्यापि सम्भवात् । काकतालीयमित्यत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ । तेन काकागमनमिव तालपतनमिव काकतालमिति इवार्थे समासाच्च तद्विषयादिति ज्ञापकात्समासः ।

---

यात् एकार्थीभावलक्षणसामर्थ्याभावेन समासानुपपत्तिप्रसङ्गात्, समासे वाचकस्य इवशब्दस्यानुपादानं समासविधायकशास्त्रनिबन्धनमित्येतावता लोपश्शास्त्रकृत इति भावः । **न शास्त्रकृत इति** । इन्दुतुल्यास्येति बहुव्रीहिसमासानन्तर्भावेन कान्त्यादेस्साधारणधर्मस्य निर्देशसम्भवात् समस्यमानपदार्थान्वयविघटकत्वाभावात् न तदनुपादाननैयत्यम् । अत एव न समासविधायकशास्त्रानुपपत्तिप्रसङ्गः । येन लोपस्तत्कृतः स्यादिति भावः । ननु, स्मरवधूयन्तीत्यत्र कथं वाचकोपमेयलोपः । उपमेयभूतायास्तन्व्या उपादानादित्यत आह—**अत्र कान्त्येति** । तन्व्या उपादानेऽपि न तन्वीपदमुपमेयसमर्पकम् । किंतु स्वात्मानं कामवधूमिव आचरतीत्यर्थपर्यवसानात् द्वितीयान्तस्वात्मपदार्थस्य उपमेयतया तन्निर्देशाभावेन उपमेयलोपसम्भवादुपमेयलोप इति भावः । काकतालीयमित्यत्र उपमानलुप्तादीश्चतुरो भेदान्प्रदर्शयितुमुपक्रमते—**काकतालीयमित्यत्रेति** । **वृत्तिविषय इति** । समासवृत्तिविषय इत्यर्थः । **काकतालसमवेतेति** । लक्षणयेति शेषः । नन्वत्र काकतालमिति समासोऽनुपपन्नः । विधायकशास्त्राभावादित्याशङ्क्य, विग्रहप्रदर्शनपूर्वकं समासमुपपादयति—**तेनेति** । काकागमनमिव तालपतनमिवेति विग्रहवाक्यप्रतिपादितकाकतालसमवेतक्रियासदृशरूपेऽर्थे विवक्षिते काकतालशब्दयोः सुप्सुपेति सूत्रेण सुबन्तं सुबन्तेन समस्यत इत्यर्थकेन समास इत्यर्थः । नन्वेवंविधे विषये समासो भवतीत्यत्र न प्रमाणम् । ईदृशार्थविशेषे समासानुशासनाभावादित्यत आह—**समासाच्चेति** । इवार्थविषयात्समासादिवार्थे छप्रत्ययो भवतीत्यर्थकेन इवेप्रतिकृताविस्यधिकारपठितेन सूत्रेण इवार्थविषयकसमासाभावे अनुपपद्यमानेन इवार्थे समासस्य ज्ञापितत्वात् काकतालमिति समासः उपपद्यत इत्यर्थः । **समास** इत्यतः प्राक् सुप्सुपेति सूत्रत इति शेषः ।

उभयत्रोपमेयं स्वस्य क्वचिद्गमनं तत्रैव रहसि तन्व्या अवस्थानञ्च। तेन स्वस्य तन्व्याश्च समागमः काकतालसमागमसदृश इति फलति। ततः काकतालमिव काकतालीयमिति द्वितीयेऽस्मिन्निवार्थे समासाच्च तद्विषयादिति सूत्रेण इवे प्रतिकृताविल्यधिकारस्थेन छप्रत्ययः। तथा च पतनदलितं तालफलं यथा काकेनोपभुक्तं एवं रहोदर्शनक्षुभितहृदया तन्वी स्वेनोपभुक्तेति तदर्थः। ततश्चात्र काकागमनतालपतनसमागमरूपस्य काककृततालफलोपभोगरूपस्य चोपमानस्यानुपादानात् प्रत्ययार्थोपमायामुपमानलोपः। समासार्थोपमायां वाचकोपमानलोपः। सर्वोऽप्ययं लोपश्छप्रत्ययविधायकशास्त्रकृतः। अवितर्कितसम्भवमिति

---

**उभयत्रेति**। समस्यमानपदार्थयोः काकागमनतालपतनयोरित्यर्थः। नन्वेवं, स्वगमनतन्व्यवस्थानयोः काकागमनतालपतनोपमेयत्वे उपमेयानुपादानादुपमेयलुप्ताप्यत्र किन्न स्यादित्यत आह—**तेनेति**। 'यत्तयामेलन'मिति मेलनस्य स्वस्य तन्व्याश्च सम्बन्धरूपस्वक्रियाद्वययौगपद्यरूपस्य उपमेयस्य निर्देशात् क्रियाद्वयमपि निर्दिष्टमिति नात्रोपमेयस्य लोपसम्भवः। किन्तु मेलनस्य उपमेयत्वेन निर्देशसामर्थ्यात् समासार्थसादृश्यप्रतियोगित्वेन काकागमनतालपतनरूपक्रियाद्वययौगपद्यरूपस्य तत्समागमस्य गम्यमानतया तदौपम्यं मेलने गम्यत इति समासार्थनिष्कर्षः। तदेतदभिप्रेत्याह—**काकतालसमागमसदृश इति फलतीति**। **तत इति**। समासानन्तरमित्यर्थः। ननु, छप्रत्ययेन सादृश्योपादानेऽपि तत्प्रतियोगिन उपमानस्य प्रतीतेः छप्रत्ययार्थोपमा नात्मानं लभत इत्यत आह—**तथाचेति**। 'लाभो मे यश्च तद्रते' रिति तन्वीरतिलाभस्य उपमेयस्य निर्देशादौचित्येन छप्रत्ययार्थसादृश्यप्रतियोगित्वेन काककृततालफलोपभोगस्य गम्यमानतया तदौपम्यं तन्वीरतिलाभे उपमेये उपपद्यत इति प्रत्ययार्थोपमा अत्र सम्भवतीति भावः। एवं काकतालीयशब्दगतप्रकृतिप्रत्ययार्थौ प्रदर्श्य, उपमानलोपसहितान् चतुरो भेदानत्रोपपादयति–**ततश्चेति**। **अत्रेति**। काकतालीयमित्यत्रेत्यर्थः। **वाचकोपमानलोपइति**। यद्यपि छप्रत्ययार्थोपमायां छप्रत्ययस्यैव समासार्थोपमायां समासस्यैव शक्त्या लक्षणया वा उपमाप्रतिपादकतया न वाचकलोपसम्भवः। तथापि समासस्य द्योतकतापक्षमालम्ब्य वाचकलो-

---

१. तथा चाह भगवान् भाष्यकारः–'एवं तर्हि द्वाविवार्थौ। काकागमनमिव तालपतनमिव काकतालं, काकतालमिव काकतालीयम्।' इति। विवृतञ्च कैयटेन–'काकागमनमिवेति। वृत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ। तत्र काकागमनं देवदत्तागमनस्योपमानं तालपतनं दस्यूपनिपातस्य। तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति वधादिः काकतालीयादिशब्दवाच्यः

साधारणधर्मस्यानुपादाने प्रत्ययार्थोपमायां धर्मोपमानलोपः, समासार्थोपमायां धर्मोपमानवाचकलोप इति सूक्ष्मया दृष्ट्यावधारितव्यम् । एतेषामुदाहरणान्तराणि विस्तरभयान्न लिख्यन्ते ॥—

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे उपमाप्रकरणं ॥

---

पाभिधानम् । अत एवास्मिन् पक्षे समासस्य द्योत्यार्थमादायार्थवत्वात् तस्य प्रातिपदिकसंज्ञोपपत्तिरिति समर्थितमर्थवत्सूत्रे । छप्रत्ययादीनां तु वाचकताभ्युपगमान्नवाचकलोपः । ननु, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धतया छप्रत्ययार्थस्य सादृश्यस्य प्रकृत्यर्थे अनन्वयात् कथं वाक्यार्थबोधोपपत्तिः । न च इवार्थविहितस्यापि समासस्य काककृततालफलोपभोगरूपार्थे लक्षणाभ्युपगमेन तस्य प्रतियोगितासम्बन्धेन प्रत्ययार्थे अन्वयसम्भवात् नोक्तव्युत्पत्तिभङ्ग इति वाच्यम् । काककृततालफलोपभोगरूपस्योपमानस्य तन्वीरतिलाभरूपोपमेयनिर्देशसामर्थ्यलभ्यस्य व्यञ्जनाव्यापारेण लाभसम्भवेन समासस्य तल्लक्षकत्वाभ्युपगमस्य गौरवेणायुक्तत्वादिति चेन्न । व्यञ्जनाव्यापारलभ्यस्य तालफलोपभोगरूपस्य उपमानस्य प्रतियोगितासम्बन्धेन अन्वयोपपत्त्या वाक्यार्थबोधसम्भवादुक्तव्युत्पत्तेराकाङ्क्षानिबन्धनतया प्रत्ययार्थस्य प्रकृत समासार्थसाकाङ्क्षत्वाभावेनोक्तव्युत्पत्त्यनभ्युपगमेऽप्यक्षतेः । तदेतदभिप्रेत्याह—**सूक्ष्मयेति** । नन्वन्यैर्ग्रन्थकारैरुक्तानामुपमावान्तरभेदानां प्रदर्शितान्युदाहरणानि कुतो न लिखितानीत्यत आह—**एतेषामिति** । लुप्तोपमावान्तरभेदानामित्यर्थः । तथा चार्थालङ्कारलक्षणलक्ष्यसङ्ग्रहैदंपर्येण प्रवृत्ततया तद्ग्रन्थप्रसक्तेर्नास्माभिर्लिख्यन्त इति भावः । तानि तु वयं प्रदर्शयिष्यामः ॥ 'कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् । अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भतुल्यम् ॥' अत्र कैलासगौरमित्यत्र वाचकलोपः । निकुम्भतुल्यमित्यत्र धर्मलोपः । सत्वैच्छिकः । अतिशयितबलादिना निकुम्भतुल्यमित्यपि वक्तुं शक्यत्वात् ॥ 'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः । यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥' अत्र सुखवशीकृते मनसि सविता विधुरिवाचरति आह्लादकारितया । यामिन्यः दिनवदाचरन्ति प्रकाशसमृद्ध्येति । दुःखवशीकृते मनसि विधुरपि सवितेव सन्तापकारी भवति । तथा दिनानि यामिनीवदप्रकाशमयानि भवन्तीति वाक्यार्थप्रतीतेराचारार्थकस्य क्विपो वाचकस्येवादेश्चानुपादानात् धर्मवाचकलुप्ता ॥ 'रूपयौवनलावण्यस्पृहणीयतराकृतिः । पुरतो हरिणाक्षीणामेष पुष्पायुधीयति ॥' अत्र आत्मानं पुष्पायुधमिवाचरतीत्यर्थप्रतीतेरात्मन उपमेयस्य वाचकस्य च अनुपादानादुपमेयवाचकलुप्ता ॥' सवृत्तचौलश्चलकाकपक्षैरमात्यपुत्रैस्सवयोभिरन्वितः । लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥' इत्यत्र, उपमानलुप्ता प्राकप्र-

---

समासस्ये । इति । १. तत्स्थाने 'अभवत्किं ब्रवीमि ते । इति पाठे इति भावः ।

अथानन्वयः—

**उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ।**

दर्शिता ॥ 'भ्रमन् भृङ्ग! परासुस्त्याः कानने कण्टकाविले । मालतीकुसुमं येन सदृशं तन्न लप्स्यसे ॥' इत्यत्र, धर्मोपमानलुप्ता । 'पुरतो हरिणाक्षीणा' मित्यत्र हरिणस्य अक्षिणी इव आयते अक्षिणी यासां ता इति विग्रहेण हरिणाक्षीरूपोपमानस्य आयतत्वादेर्धर्मस्य सादृश्यवाचकेवादेश्चानुपादानात् धर्मवाचकोपमानलुप्ता । एवं वाचकोपमानलुप्तापि द्रष्टव्या । इयं चोपमा व्यत्यस्तबिम्बप्रतिबिम्बिकापि क्वचिद्दृश्यते । यथा—'पिता समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन । पुत्रस्तथैवाधिकवत्सलेन स तेन पित्रा पितृमान् बभूव ॥' अत्र, यथातथाशब्दवाच्यायां वाक्यार्थभूतायामुपमायां पितापुत्रावुपमानोपमेयभूतौ । तयोरुपमाप्रयोजकसाधारणधर्मतया वस्तुप्रतिवस्तुभावेन विशेषणतया बिम्बप्रतिबिम्बभावकरम्बितेन पुत्रिपितृमच्छब्दाभ्यामुपमानोपमेयविशेषणाभ्यां सम्बन्धार्थकत्वे पुत्रेण पुत्रवान् पित्रा पितृमानिति सम्बन्धस्यावक्तव्यतया व्यर्थतापत्त्या तत्परिहाराय प्राशस्त्यार्थकेनिमतुबन्ताभ्यां तावेव पितापुत्रौ व्यत्यासेन निर्दिष्टौ । तयोः प्राशस्त्योपपादके समाराधनतत्परेण अधिकवत्सलेनेति विशेषणे इति । यथा वा—'यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समासि । तथा लता पल्लविनी सगर्वे शोणाधरायास्सदृशी तवापि ॥' अत्र, शोणाधरत्वत्सदृशी लता स्तबकानतलतासदृशस्तनावनम्रत्वत्समेति वाक्यार्थप्रतीतेः, विशिष्टे वैशिष्ट्यमिति रीत्या विशिष्टवैशिष्ट्यबोधं प्रति विशेष्यतावच्छेदकप्रकारकनिश्चयस्य हेतुतया, लतायां शोणाधरतन्वीसादृश्यस्य विशेष्यतावच्छेदकस्य प्रतीतिः वाक्यार्थभूतोपमाप्रतीतौ हेतुः । तथा स्तबकानतलतासादृश्यविशिष्टतन्वीसाम्यवैशिष्ट्यस्य लतायां वाक्यार्थभूतोपमाप्रतीत्या विषयीकरणात् तत्र स्तबकानतलतासादृश्यप्रतीतिरपि हेतुः । ततश्च स्तबकानतलतासादृश्यस्य शोणाधरतन्वीसादृश्यस्य च उपमानोपमेयविशेषणस्य बिम्बप्रतिबिम्बभावेन साधारणधर्मतया निर्देशः । तयोश्च बिम्बप्रतिबिम्बभावापन्नयोः सादृश्ययोरेकत्र लतासादृश्ये स्तबकानतस्तनावनम्रपदाभ्यां वस्तुप्रतिवस्तुभावेन विशेषणतया बिम्बप्रतिबिम्बभावकरम्बितेन साधारणधर्मनिर्देशः । अपरत्र तन्वीसादृश्ये पल्लवाधरयोर्बिम्बप्रतिबिम्बभावेन शोणाधरपल्लविनीपदाभ्यां साधारणधर्मतया निर्देश इति ईदृक्साधारणधर्मनिबन्धनयोर्द्वयोरुपमयोर्बिम्बप्रतिबिम्बभावेन साधारणधर्मतामालम्ब्य वाक्यार्थभूतोपमाप्रतीतिर्निर्वहणीयेति, वाक्यार्थभूतोपमायामुपमानोपमेयभूतयोस्तन्वीलतयोस्साधारणधर्मभूतोपमाद्वयघटकतया व्यत्यासेन साधारणधर्मकोटिप्रवेश इति स्पष्टम् । एवमन्येऽपि विच्छित्तिविशेषा महाप्रबन्धेष्वन्वेषणीया इत्यलं पल्लवेन ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यामुपमाप्रकरणम् ॥ १ ॥

एवमुपमां निरूप्य अनन्वयं निरूपयितुं तल्लक्षणप्रतिपादिकामालोककारिकां प्रदर्शयति—**उपमानोपमेयत्वमिति** । अत्रानन्वय इति पदं लक्ष्यनिर्देशकं नपुंसकलि-

## इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ॥

एकस्यैव वस्तुन उपमानोपमेयत्ववर्णनमनन्वयः । वर्ण्यमानमपि स्वस्य स्वेन साधर्म्यं नान्वेतीति व्युत्पत्तेः । अनन्वयिनोऽप्यर्थस्याभिधानं सदृशान्तरव्यवच्छेदेनानुपमत्वद्योतनाय । इन्दुरिन्दुरिव श्रीमानित्युक्ते श्रीमत्त्वे चन्द्रस्य नान्यस्सदृशोऽस्तीति सदृशान्तरव्यवच्छेदो लभ्यते । ततश्च स्वस्य स्वेनापि सादृश्यासम्भवादनुपमत्वे पर्यवसानं ॥

यथा वा—

गगनं गगनाकारं सागरस्सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥

---

क्ततया विपरिणतं लक्षणेऽपि विशेषणत्वेन विवक्षितम् । तेन अनन्वयं अन्वयरहितं एकस्य उपमानोपमेयत्वं अनन्वयालङ्कार इति लक्षणं फलितम् । अत्र 'उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् । स तद्दुकूलादविदूरमौलिः बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥' इत्यत्र अभिन्नधर्मिकोपमायां नातिव्याप्तिः । तत्रैकस्यैव शिवस्य उपमानोपमेयत्वेऽपि उत्तमाङ्गनिपतद्गङ्गाविशिष्टेन शिवेन आतपत्रदुकूलाविदूरमौलित्वविशिष्टस्य तस्योपमानोपमेयत्वं नानन्वयि । एकस्य एकधर्मविशिष्टस्य धर्मान्तरविशिष्टेन स्वेनोपमासम्भवात् । अनुगामिनमेकं धर्ममादाय एकस्योपमानोपमेयत्वं वर्ण्यमानं तत्र नान्वेतीति, इन्दुरिन्दुरिव श्रीमानित्युदाहरणम् । अत्र श्रीमत्त्वमनुगामिनमेकं धर्ममादाय इन्दोरिन्दुसादृश्यं वर्ण्यमानं नान्वेतीति अनन्वयि उपमानोपमेयत्वमिति अनन्वय इति कारिकाशयः । श्लोकं व्याचष्टे—**एकस्यैवेति** । अनन्वयशब्दस्यान्वर्थतां प्रतिपादयति—**वर्ण्यमानमपीति** । ननु अनन्वय्यर्थनिबन्धनेन विच्छित्तिविशेषाभावात् काव्यत्वमेवेदृशस्य न स्यादित्यत आह—**अनन्वयिनोऽपीति** । यथा रुद्ररोदनवपोच्छेदनाद्यर्थवादे स्तुतिनिंदाचामृतस्य असदर्थस्य निबन्धनं स्तुतिनिन्दयोरुपयुज्यते । तथैवानन्वयिनोऽपि स्वस्य स्वेन सादृश्यस्य वर्णनात् सादृशान्तरव्यवच्छेदो गम्यते । तेन तस्यानुपमत्वपर्यवसानम् । यथा पांसुदूषिते पयसि कतकरेणुः प्रक्षिप्यमाणो रजोन्तराणि तत्र प्रविलापयन् स्वयमपि पश्चाद्विलीयाम्भसोऽनाविलतां सम्पादयति । एवं कान्तिमत्त्वे विषये इन्दोरिन्दूपमत्वोक्त्या सादृशान्तरव्यवच्छेदप्रतीतौ स्वेनापि स्वस्य सादृश्यासम्भवादनुपम इन्दुरिति पर्यवस्यतीति, नानन्वय्यर्थनिबन्धना काव्यत्वहानिः प्रसज्यत इति भावः । **गगनमिति** । अत्र गगनसागरयोः वैपुल्यगाम्भीर्यादिधर्मेण स्वसादृश्यवर्णनात् वैपुल्यादिविषये तयोरनुपमत्वलाभः । तथा रामरावणयुद्धस्य रोमहर्षणत्वादिधर्मेण स्वसादृश्यवर्णनादनुपमं रामरावणयुद्धमिति पर्यवस्यति । ततश्चात्र प्रकृताप्रकृतगोचरानन्वयबलेन

पूर्वोदाहरणे श्रीमत्त्वस्य धर्मस्योपादानमस्ति। इह तु गगनादिषु वैपुल्यादेर्धर्मस्य तन्नास्तीतिविशेषः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अनन्वयप्रकरणम् ॥ २ ॥

अथोपमेयोपमा—

**पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ।**
**धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥**

द्वयोः पर्यायेणोपमानोपमेयत्वकल्पनं तृतीयसदृशव्यवच्छेदार्थं । धर्मार्थयोर्हि कस्य चित् केन चित् सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदकं फलति ।

---

वैपुल्यगाम्भीर्यविषये यथा गगनसागरावनुपमौ तथा रामरावणयुद्धमपि अनुपममिति उपमा व्यज्यते । तेन च रामरावणयोरनितरसाधारणपराक्रमशालित्वं ध्वन्यत इति अलङ्कारध्वनिवस्तुध्वनी द्रष्टव्यौ । पूर्वोदाहरणादस्य वैलक्षण्यमाह—**पूर्वोदाहरण इति** । तथा च उपात्तानुपात्तधर्मकतया अयमनन्वयो द्विविध इति भावः ॥

॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यामनन्वयप्रकरणम् ॥ २ ॥

उपमेयोपमालक्षणप्रतिपादकं श्लोकमाह—**पर्यायेणेति** । 'द्वयोस्तच्चे' दित्यनेन लक्षणनिर्देशः । पर्यायेण प्रकारान्तरेण तृतीयसदृशव्यवच्छेदेनेति यावत् । तत् उपमानोपमेयत्वम् । तथा च तृतीयसदृशव्यवच्छेदाय द्वयोर्यदुपमानोपमेयत्वं सोपमेयोपमेति फलति । न तु पर्यायेणेत्यस्य क्रमेणेत्यर्थकतया, क्रमेण द्वयोरुपमानोपमेयत्वं उपमेयोपमेति लक्षणं विवक्षितम् । 'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः । भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥' इति परस्परोपमायामतिव्याप्तेः । 'तद्वल्गुना युगपदुन्मिषितेन तावत्सद्यः परस्परतुलामधिरोहतां द्वे । प्रस्पन्दमानपुरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥' इति युगपदुपमेयोपमायामव्याप्तेश्च । अत्र एकदैवोपमानोपमेयत्वनिर्देशेन क्रमेणेत्यंशस्य अभावात् । यथोक्ते तु न दोषः । उक्तपरस्परोपमायां द्वयोरुपमानोपमेयत्ववर्णनेऽपि तस्य तृतीयसदृशव्यवच्छेदफलकत्वाभावात्। कस्य चित् किञ्चिद्धर्ममुपजीव्य केनचित् सादृश्ये अभिहिते तस्यापि तेन धर्मेण तत्सादृश्यस्यार्थसिद्धत्वेऽपि तद्वर्णनादनयोरस्मिन्विषये तृतीयसदृशो नास्तीति फलति । उदाहरणे धर्मस्य पूर्णत्वेन साधारणधर्मेण अर्थसादृश्ये निबद्धे अर्थस्य धर्मसादृश्यस्यार्थसिद्धस्यापि अभिधानाद्धर्मैकत्वे धर्मार्थयोर्न तृतीयः कश्चित्सदृशोऽस्तीति प्रतीतेः । न चैतद्धर्मैक्य इव धर्मभेदेऽपि लभ्यते । केन चिद्धर्मेण कस्य चित् किञ्चित्सादृश्ये निबद्धे धर्मान्तरेण तत्सादृश्यस्यालाभात् । उदाहृत-

---

१. अनन्वयोपमेयोपमादिष्वपि उपमायामिव यथासम्भवं पूर्णत्वलुप्तत्वादिकृता भेदा उन्नेयाः ।

यथा वा—

खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः ।
कुमुदाकारास्ताराः ताराकाराणि कुमुदानि ॥

पूर्वत्र पूर्णश्रीरिति धर्म उपात्तः । इहतु निर्मलत्वादिधर्मो नोपात्त इति भेदः । उदाहरणद्वयेऽपि प्रकृतयोरेवोपमानोपमेयत्वकल्पनम् । राज्ञि धर्मार्थसमृद्धेः शरदि गगनसलिलादिनैर्मल्यस्य च वर्णनीयत्वात् । प्रकृताप्रकृतयोरप्येषा सम्भवति ।

यथा वा—

गिरिरिव गजराजोयं गजराज इवोच्चकैर्विभाति गिरिः ।
निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे उपमेयोपमाप्रकरणम् ॥३॥

---

परस्परोपमायां च न तृतीयसदृशव्यवच्छेदलाभः । व्योम्नो रजोव्याप्तत्वेन भूतलोपमया भूतलस्य तेनैव धर्मेण व्योमसादृश्यस्यार्थतो लाभसम्भवेऽपि मेघाकारैर्गजैर्व्याप्तत्वेन व्योमसादृश्यस्य भूतले अलाभेन तृतीयसदृशव्यवच्छेदाप्रतीतेः । युगपदुपमेयोपमायामपि उक्तलक्षणसत्वेन अव्याप्तिविरहाच्च । न च मंखुकादिभिरत्र पर्यायपदस्य 'पर्यायो यौगपद्याभावः, अत एवात्र वाक्यभेदः' इति वाक्यभेद एवोपमेयोपमोक्तेः कथमेतदिति वाच्यम् । महाकविप्रयोगेषु यौगपद्येऽपि तस्या उपलभ्यमानतया मंखुकाद्युक्तेरुपलक्षणत्वात् । यदि तु तस्या उपलक्षणत्वे न किञ्चित्प्रमाणं, युगपदुपमेयोपमोदाहरणेऽपि परस्परशब्दस्यार्थपर्यालोचनया क्रमेणैव पद्मचक्षुषोरुपमानोपमेयत्वप्रतीतेः, परस्परतुलामित्यतो हि पद्मतुलां चक्षुः चक्षुस्तुलां च पद्ममिति प्रतीतेर्यौगपद्याभावः स्पष्टः । अतो नोक्तोदाहरणे अव्याप्तिः । पर्यायशब्दस्य क्रमार्थकत्वेऽपीति यदि विभाव्यते तदा उक्तपरस्परोपमायामतिव्याप्तिपरिहाराय तृतीयसदृशव्यवच्छेदायेति विशेषणप्रक्षेपेण लक्षणं परिष्करणीयम् । पर्यायेणेति च न लक्षणप्रविष्टम् । वैयर्थ्यात् । स्वरूपकथनमात्रपरं तदिति द्रष्टव्यम् ॥ **खमिव जलमिति** । अत्र नैर्मल्यं साधारणधर्मः । औज्ज्वल्यवर्तुलत्वादिरुत्तरयोस्साधारणो धर्मः । पूर्वोदाहरणादस्य वैलक्षण्यं प्रदर्शयति—**पूर्वत्रेति** । ततश्च धर्मोपादानानुपादानाभ्यामस्याः द्वैविध्यमिति भावः । धर्मस्यानुगामित्ववस्तुप्रतिवस्तुभावाभ्यां निर्देशाद्धर्मोपादानेऽपि द्वैविध्यं सम्भवति । तत्र अनुगामितया धर्मनिर्देश आलोकोदाहरणे व्यक्तः । वस्तुप्रतिवस्तुभावेन यथा— 'सच्छायांभोजवदनास्सच्छायवदनाम्बुजाः । वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः' ॥

॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यामुपमेयोपमाप्रकरणम् ॥३॥

अथ प्रतीपम्—

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥

प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात्प्रतीपम् ॥

यथा वा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयः ते राजहंसा गताः
त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

---

प्रतीपं लक्षयति—**प्रतीपमिति** । न चोपमानस्योपमेयत्वकल्पनमुपमेयोपमायामप्यस्तीति लक्षणस्यातिव्याप्तिरिति वाच्यम् । तृतीयसदृशव्यवच्छेदफलकत्वशून्यत्वे सतीति विवक्षितत्वात् । उपमेयोपमायाः प्रतीपोपमामेलनरूपतया तदंशे प्रतीपसत्त्वेन सङ्ग्राह्यत्वाद्वा । 'त्वल्लोचनसमं पद्मम्' इत्युदाहरणे पद्मस्य लोचनोपमानतया प्रसिद्धस्य लोचनं प्रत्युपमेयत्वकल्पनाल्लक्ष्यलक्षणसङ्गतिः । प्रतीपशब्दस्यान्वर्थतां दर्शयति—**प्रसिद्धेति** । **यत्त्वदिति** । अत्र वर्षर्तुप्रवासिनः कान्ताविरहदूयमानमानसस्य कान्तावयवलोचनमुखादिदर्शनासम्भवेऽपि तत्सदृशेन्दीवरादिदर्शनोद्बोधितसंस्कारोपचीयमानकान्तालोचनादिस्मृतिधारया आत्मानं विनोदयिष्यामीति मन्यमानस्य तन्नेत्रादिसदृशेन्दीवरादिदर्शनप्रतिबन्धेन ततोऽप्यात्मनोविनोदासम्भवमाकलयतो दैवं प्रत्युपालम्भोक्तौ कान्तासादृश्यविनोदमात्रासहत्वं दैवस्य प्रधानभूतो वाक्यार्थः । स च समर्थनसापेक्षतया पादत्रयप्रतिपादितप्रतीपालङ्कारत्रयेण संसृष्टिरूपेण समर्थित इति प्रतीपानुप्राणितं काव्यलिङ्गमत्र तुरीयपादे विवक्षितम् । तेन च विधिं प्रत्यसूयारूपो भावो ध्वन्यत इति भावध्वनिरिति विमर्शनीयम् ॥ अत्रेदं बोध्यम् ॥ उपमायामिवास्मिन् प्रतीपे पूर्णालुप्तायवान्तरभेदास्सम्भवन्तः तत्र तत्र उदाहरणेषु सहृदयैरुन्नेतुं शक्या इति ग्रन्थकृता नोपन्यस्ताः । तत्र मूलोदाहरणे धर्मस्यानुपादानाद्धर्मलुप्तता । 'यत्त्वन्नेत्रे'त्यत्र पूर्णतेति स्फुटावगमात् ॥ त्वल्लोचनायते पद्मं त्वद्वक्त्रति सुधाकरः ।' इत्युत्तरार्धपाठे धर्मवाचकलोपः इत्यादिक-

---

२. चन्द्रालोके तु '**विख्यातस्योपमानस्य यत्र स्यादुपमेयता । इन्दुर्मुखमिवेत्यादौ स्यात्प्रतीपोपमा मता** ॥' इत्येक एव प्रतीपभेदः निरूपितः । इतरे चत्वारो भेदाः प्रकाशकारादिमतानुसारेण ग्रन्थकृता परिकल्पिता इति वेदितव्यम् । देवरकोण्डौगलार्यकृष्णबुधस्तु, प्रतीपालङ्कारमुपमेयोपमायामन्तर्भावयति । तथाहि । **यत्प्रसिद्धोपमानेस्यात् उपमेयत्वकल्पनम्** । प-

**अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ।**
**अलं गर्वेण ते वक्त्र! कान्त्या चन्द्रो भवादृशः ॥**

अत्युत्कृष्टगुणतया वर्ण्यमानस्यान्यत्र स्वसादृश्यमसहमानस्य उपमेयं किञ्चित्प्रदर्श्य, तावता तस्य तिरस्कारो द्वितीयं प्रतीपं पूर्वस्मादपि विच्छित्तिविशेषशालि ॥

यथा वा--

गर्वमसम्भाव्यमिमं लोचनयुगलेन किं वहसि भद्रे! ।
सन्तीदृशानि दिशिदिशि सरस्सु ननु नीलनलिनानि ॥

---

मुन्नेयम् । द्वितीयं प्रतीपमाह--**अन्योपमेयेति** । श्लोकं व्याचष्टे--**अत्युत्कृष्टेति** । ततश्च कारिकायामन्यपदमवर्ण्यपरम् । तेन अवर्ण्यस्य उपमेयस्य लाभेन कल्पनेन अत्युत्कृष्टगुणतया स्वसादृश्यमन्यस्मिन्नसहमानस्य वर्ण्यस्य तिरस्कारः द्वितीयं प्रतीपमिति कारिकार्थो विवृतो भवति । 'अलं गर्वेण' त्युदाहरणे वक्त्रं सर्वोत्कृष्टकान्तिमत्तया स्वसादृश्यगन्धं क्वापि न सहते । तादृशस्य तस्य अवर्ण्यं चन्द्रमुपमेयं परिकल्प्य, अलं गर्वेणेति वक्त्रस्यानादरोक्तेः लक्षणसङ्गतिरिति भावः । उदाहरणान्तरमाह--**गर्वमसम्भाव्यमिति** । अत्र लोचनयुगलस्य इतरासम्भावितगर्ववत्त्वोक्त्या निस्सीमकान्तिमत्त्वनिबन्धनं वस्त्वन्तरे स्वसादृश्यगन्धासहत्वं व्यञ्जितम् । **सन्तीदृशानीति** । लोचनसदृशानीत्यर्थः । बहुवचनेन दिशिदिशीति देशभेदकथनेन नानादेशगतत्रिविधसरस्समुन्मीलितानवधिनीलनलिनानि तत्सदृशानि सन्तीत्युक्त्या लोचनयुगलस्यात्यन्ततिरस्कारो व्यक्त

---

**र्यायेण द्वयोस्तद्वा सोपमेयोपमा द्विधा** ॥ यत्र प्रसिद्धे उपमाने केवलमुपमेयताकल्पनं स्यात् तत्र एका उपमेयोपमा । यत्र द्वयोरुपमानोपमेययोः क्रमेण तदुभयताकल्पनं वा स्यात्तत्र अपरा उपमेयोपमा । आद्या यथा--निशाकरोऽपि मलिनस्सुप्तोत्थितमिवाननम् । कलाशेषेऽपि या लक्ष्मीर्न सा पूर्णेऽपि विद्यते ॥ यथा वा--पुष्पं प्रवालोपहितं यदि स्यात् मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ द्वितीया यथा--धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव स्थितः । कामस्ताविव तौ काम इव गोपालबालके ॥ इति ॥ चन्द्रालोके प्रतीपोपमानन्तरं केचिदुपमाभेदा निरूपिताः । यथा--**उपमाने तु लीलादिपदाढ्ये ललितोपमा । त्वन्नेत्रयुगलं धत्ते लीलां लीलाम्बुजन्मनोः ॥**' इयं ललितोपमा ग्रन्थकृता उत्तरत्र निदर्शनाप्रकरणे पदार्थवृत्तिनिदर्शनात्वेन निरूपयिष्यते । '**अनेकस्यार्थयुग्मस्य सादृश्यं स्तबकोपमा । श्रितोस्मि चरणौ विष्णोर्भृङ्गस्तामरसो यथा ॥**' **स्यात्सम्पूर्णोपमा यत्र द्वयो-**

**वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः ।**
**कः क्रौर्यदर्पस्ते मृत्यो! त्वत्तुल्याः सन्ति हि स्त्रियः ॥**

अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्यावर्ण्यस्य वर्ण्यमुपमेयं परिकल्प्य, तावता तस्य तिरस्कारः पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम् । यथा वा—

अहमेव गुरुस्सुदारुणानामिति हालाहल! मा स्म तात? दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥

---

प्रतीयते । अत्रापि प्रतीपशब्दस्य पूर्ववदेवान्वर्थता ॥ अथ द्वितीयप्रतीपप्रतिद्वन्द्वितया तृतीयप्रतीपप्रतिपादिकामालोककारिकां पठति—**वर्ण्येति** । वर्ण्यस्य उपमेयस्य लाभेनेत्यर्थः । **तथेति** । पूर्वप्रतीपे यथा वर्ण्यस्यानादरस्तथेत्यर्थः । **अन्यस्येति** । अप्रकृतस्येत्यर्थः । कः क्रौर्यदर्पः' इत्युदाहरणे क्रौर्ये स्वसाम्यं क्वचिदप्यसहमानस्य मृत्योस्समानतया स्त्रियो निरूप्य, तावता मृत्युतिरस्कारवर्णनाल्लक्षणसङ्गतिः । पूर्वोक्तप्रतीपवैपरीत्यमस्य प्रतिपादयन् श्लोकं व्याचष्टे—**अत्युत्कृष्टेति** । अस्यैव उदाहरणान्तरमाह—**अहमेवेति** । अत्र हालाहलस्य न दुर्जनवचनोपमानत्वं लोकसिद्धं । साधारणधर्मयोगाभावात् । किन्तु प्रस्तुतदुर्जनदौरात्म्यख्यापनाय हालाहलतुल्यतया निस्सीमपरसन्तापकारिक्रौर्यविवक्षया हालाहलस्य तदुपमानत्वमसम्भाव्यं परिकल्प्य तावता तस्य तिरस्कारप्रतीतेः पूर्वस्माद्विच्छित्तिविशेषो द्रष्टव्यः । पूर्वोक्तप्रतीपद्वयवैधर्म्याच्चास्य प्रतीपत्वम् । न तु प्रसिद्धोपमानोपमेयवैपरीत्यात् । तदेतदाह—पूर्वप्रतीपवैपरीत्येनेति । इति भावः ॥ तुरीयं प्रतीपं लक्षयति—

---

**रपि विधेयता । पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे ॥' इति ॥** ग्रन्थकृता अपह्नुतिप्रकरणे उदाहरिष्यमाणं कल्पितभ्रान्तिपूर्वकमपह्नुतिभेदं दण्डी तत्वाख्यानोपमाख्यमुपमाभेदं मेने— यदाह दण्डी । **न पद्मं मुखमेवेदं न भृंगौ चक्षुषी इमे । इति विस्पष्टसादृश्यात्तत्वाख्यानोपमा मता ॥ इति ॥** देवरकोण्डौगलार्यकृष्णबुधस्तु, अन्यानपि कांश्चिदुपमाभेदानुदाजहार । तथा हि— **वाक्यार्थेनैव वाक्यार्थः को वा यत्रोपमीयते । एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥** यत्र कश्चिद्वाक्यार्थः वाक्यार्थेनैवोपमीयते । एकार्थप्रतिपादक एव शब्दः । वाचकस्तु एको वानेको वा स्थितश्चेत्तत्र वाक्यार्थोपमालङ्कारः द्विधा । अस्य 'दिने दिने सा परिवर्धमाना' इत्यादि कुमारसम्भवस्थं पद्यमुदाहरणम् । मालारूपेणाप्ययमलङ्कारो दृश्यते । **मालावदुपमानानि वाचकाश्च तथा परे । यत्रोच्यन्ते यथा संख्यं तत्र मालोपमा स्मृता ॥** यत्र यथाक्रमं पङ्क्तिशः उपमानानि व्यञ्जकाश्च उच्यन्ते तत्र मालोपमालङ्कारः ।

**वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ।**
**मुधापवादो मुग्धाक्षि! त्वन्मुखाभं किलांबुजम् ॥**

अवर्ण्ये वर्ण्योपमित्यनिष्पातिवचनं पूर्वेभ्य उत्कर्षशालि चतुर्थं प्रतीपम् । उदाहरणे मुधापवादत्वोक्त्या उपमित्यनिष्पत्तिरुद्घाटिता ।

यथा वा—

आकर्णय सरोजाक्षि! वचनीयमिदं भुवि ।
शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते ॥

---

**वर्ण्येनेति** । अन्यस्य अप्रकृतस्य । उपमायाः उपमितिक्रियायाः । सादृश्यबुद्धेरिति यावत् । श्लोकं व्याकुर्वन् पूर्वस्मादस्य विशेषमाह—**अवर्ण्य इति** । **पूर्वेभ्य इति** । पूर्वेषु आद्ययोरवर्ण्यस्य उपमेयत्वकल्पनया तृतीये वर्ण्यस्य उपमेयत्वकल्पनया च उपमितिक्रियानिष्पत्तिरस्ति । अत्र तु सा नेति विशेषः । उदाहरणे अम्बुजे मुखसादृश्यं प्रसञ्जयित्वा तस्य मुधापवादत्वोक्त्या सादृश्याभावो गर्भीकृतः । तेन अनुपमं मुखमिति पर्यवस्यतीति पूर्वेभ्यश्चमत्कृतिविशेषः स्पष्टः । उपमितिक्रियानिष्पत्तिमद्भ्यः पूर्वप्रतीपेभ्योऽपि

---

अस्य 'सुरगज इव दन्तैः' इत्यादि पद्यमुदाहरणम् । इदं रघुवंशे दशमसर्गस्यान्त्यं पद्यम् । **एकमेवोपमानं स्यात् अनेकेवादिवाचकैः । सहोक्तं धर्मतो यत्र सानेकेवोपमा मता ॥** यत्र एकमेवोपमानं अनेकवाचकैस्सह साधर्म्यात्सादृश्यवदुच्यते तत्र अनेकेवोपमालङ्कारः । 'ततः प्रतस्थे कौबेरीम्' इत्यादि पद्यमुदाहरणम् । **स्यादभूतोपमा यत्र गगनोत्थारविन्दवत् । असिद्धे धर्मतस्साम्येऽप्युपमानत्वकल्पनम् ॥** यत्र गगनारविन्दवदसत्यपि साधर्म्यवति वस्तुनि उपमानत्वकल्पनमङ्गीकृतं स्यात्तत्राभूतोपमालङ्कारः । 'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्याद्युदाहरणं । **स्याद्बिम्बप्रतिबिम्बत्वेनोपमानोपमेययोः । सादृश्यं यत्र वाच्यं चेत्तदाख्यानोपमा मता ॥** यत्र बिम्बप्रतिबिम्बभावेनौपम्यं वाच्यं स्यात् तत्र बिम्बप्रतिबिम्बोपमालङ्कारः । अस्य 'पाण्ड्योऽयमंसार्पितलम्बहारः' इत्यादि पद्यमुदाहरणम् । **प्रसिद्धमुपमानं यन्न स्यात्कविसम्मतम् । सा तु नीचोपमेत्याहुरिति लक्षणसम्भवात् ॥** यत्रोपमानं पूर्णोपमालक्षणलक्षितं सत् कविसम्मतिमात्ररहितं चेत् तत्र नीचोपमालङ्कारः । यथा—प्रतीपभूपालमदापहर्ता राजोल्लसन्मौक्तिककण्ठभूषः । वराहयूथान्यनुधावमाना सकण्ठरज्जुस्सरमेव भाति ॥' इति ॥ प्रकाशकारस्तु, शृङ्खलान्याये रोत्तरोत्तरमुपमानोपमेयभाववत्सु 'भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला' । इत्यादिषु रशनोपमाख्यमुपमाभेदमाचख्यौ । चित्रमीमांसायामुपमेयोपमाप्रतीपयोरपि उपमान्तर्भावस्य प्र-

प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते ।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥

उपमेयस्यैवोपमानप्रयोजनधूर्वहत्वेन उपमानकैमर्थ्यमुपमानप्रातिलोम्यात्पञ्चमं प्रतीपं ।

यथा वा—

तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदायदा ।
तनोति भानोः परिवेषकैतवात् तदा विधिः कुण्डलनां विधोरपि ॥

केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेन तदन्तर्भावं मन्यन्ते ।

---

अत एव वैपरीत्यादस्य प्रतीपत्वमनुसन्धेयमिति भावः ॥ पञ्चमं प्रतीपमाह—**प्रतीपमिति** । ननु, उपमानप्रयोजनानां बहूनां सद्भावात् तत्कारणोपमानस्य कथं वैयर्थ्यकथनमित्याशङ्कां निराकुर्वन् श्लोकं व्याचष्टे—**उपमेयस्येति** । तथा च उपमाप्रयोजनानां सर्वेषां उपमेयेनैव सिद्धेस्तत्कैमर्थ्यं कथयितुं शक्यमिति भावः । अत एवास्मिन् प्रतीपशब्दोऽप्यन्वर्थ इत्याह—**उपमानेति** । तत्कैमर्थ्यवर्णनेन तत्प्रतिकूलतयास्य प्रतीपत्वमिति भावः । **तदोजस इति** । अत्र भानुचन्द्रमसोः कार्यस्य प्रतापधवलीकरणादेः नैषधीयौजोयशोभ्यां सततोदिताभ्यां सर्वकालमविच्छेदेन सम्भवात् अतादृशयोर्भानुचन्द्रमसोः कैमर्थ्याभिव्यक्तये स्वतस्सिद्धं परिवेषमपह्नुत्य, विधिकर्तृककुण्डलाक्रिया उत्प्रेक्ष्यते तद्वैयर्थ्येन निमित्तेन इति सापह्नवक्रियास्वरूपोत्प्रेक्षा पञ्चमप्रतीपप्रकारानुप्राणितात्रेति पूर्वोदाहरणाद्विशेषोऽनुसन्धेयः । एवमुपदर्शितेष्वनन्वयादिषु वादिभेदेन मतभेदेनाह—**केचिदिति** । दण्डिप्रभृतय इत्यर्थः । **उपमाविशेषत्वेनेति** । साधर्म्यवर्णनमात्रस्यैव उपमालङ्कारलक्षणत्वं न तु तत्र भेदादिविशेषणगर्भतापि विवक्षणीया । तेनानन्वयस्य उपमेयोपमायाश्च प्रतीपोपमामेलनरूपत्वात् प्रतीपस्याप्रकृताविषयोपमारूपत्वाच्च न पार्थक्यमिति भावः । ग्रन्थकारस्तु, उपमेयोपमाप्रतीपयोः प्रकृताप्रकृतविषयोपमाद्वयत्वाप्रकृतविषयोपमात्वाभ्यां उपमान्तर्भावमुपमितिक्रियानिष्पत्तिमत्त्वात्, अनन्वयस्योपमितिक्रियानिष्पत्तिप्रतिष्ठितत्वविरहाद्बहिर्भावं च चित्रमीमांसायां व्युदपादयदिति तत्रैव तत्प्रपञ्चनं द्रष्टव्यमिति न्यक्कृदङ्गीकृतत्वात् एते उपमाभेदाः पूर्णालुप्तयोर्द्वयोरेवान्तर्भावमश्नुवन्ति, नैते पृथगुदाहार्याः इति च तदनुदाहर्तुर्ग्रन्थकृत आशय इति बोद्धव्यम् । एवं अन्येऽप्युपमावैचित्र्यभेदाः परस्सहस्रं सुधीभिरुन्नेतुं शक्याः । इत्यलमतिविमर्शेन ।

१. अत्र प्रतीपशब्देन तदीयाद्यभेदत्रयमेव गृह्यते । इतरयोरुपमान्तर्भावस्य ग्रन्थकृदनभिप्रेतत्वात् । यतश्चित्रमीमांसायां ग्रन्थकारः उपमालक्षणविचारावसरे । **'व्यापार उपमानाख्यो भवेद्यदि विवक्षितः । क्रियानिष्पत्तिपर्यन्तमुपमालंकृति-**

अन्ये तु, पञ्चमं प्रतीपप्रकारं उपमानाक्षेपरूपत्वादाक्षेपालङ्कारमाहुः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे प्रतीपप्रकरणम् ॥ ४ ॥

अथ रूपकम्—

**विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।**
**रूपकं तत् त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥**

---

भावः । **अन्येत्विति** । रुद्रटादय इत्यर्थः । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु 'आक्षेपो वक्तुमिष्टस्य' इत्याक्षेपस्य वक्ष्यमाणलक्षणस्यात्रासम्भवात् नास्याक्षेपत्वसम्भवः । इदं च तत्रैव स्फुटीकरिष्यत इत्यनुसन्धेयम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां प्रतीपप्रकरणम् ॥ ४ ॥

'एवं साधर्म्ये त्रयः प्रकाराः । भेदप्राधान्यं दीपकतुल्ययोगितादिषु । अभेदप्राधान्यं रूपकातिशयोक्त्यादिषु । भेदाभेदयोस्साम्ये उपमा' इति सर्वस्वोक्तेः भेदाभेदगर्भानुपमादीनलङ्कारान्प्रदर्श्य, अभेदगर्भानलङ्कारान्वक्तुं तेषु प्रथमं रूपकं लक्षयति— **विषयीति** । विषयिणः उपमानस्य ये अभेदताद्रूप्ये तयोः रञ्जनमिति तद्द्वन्द्वगर्भषष्ठीतत्पुरुषः । षष्ठ्यर्थश्च सम्बन्धो विषयिता । तथा च विषय्यभेदताद्रूप्यान्यतरविषयिताकबोधविषयत्वं यत् विषयस्य तद्रूपकम् । रञ्जनविषयीभूतविषय्यभेदताद्रूप्यान्यतरद्रूपक-

---

**स्तु सा** ॥ उपमानव्यापारः उपमितिक्रियानिष्पादको व्यापारः । सादृश्यवर्णना । सा उपमितिक्रियानिष्पत्तिपर्यन्तं विवक्षिताचेदुपमालङ्कार इत्यर्थः ।' इति उपमासामान्यलक्षणमुक्त्वा, 'मुखेन निष्कलङ्केन' इत्यादि व्यतिरेके 'आकर्णय सरोजाक्षि' इत्यादि तुरीयप्रतीपे अनन्वये च उपमितिक्रियानिष्पत्तेरभावमुपन्यस्य अस्य लक्षणस्यातिव्याप्तिं परिहरन् उपमितिक्रियानिष्पत्तिमत् 'गर्वमसम्भाव्यमिमम्' इत्यादितुरीयप्रतीपमुपमेयोपमा चेत्युभयमपि सङ्ग्राह्यमेवेति न तद्व्यापनं लक्षणस्य दोषः' इत्यादिना उपमेयोपमायाः प्रकृताप्रकृतोपमाद्वयरूपतया प्रतीपस्याप्रकृतविषयोपमारूपतया च नोपमातः पार्थक्यमिति न्यरूपयत् । एवं च उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमुपमासामान्यलक्षणमनुसन्धेयम् । उपमितिक्रियानिष्पत्तिरुपमेयोपमायां प्रतीपाद्यभेदत्रये च अस्ति । अन्त्यभेदद्वये अनन्वये च नेति विवेकः । रसगङ्गाधरकारस्तु, प्रतीपाद्यभेदत्रयस्योपमान्तर्भावमाचष्टे । इतरयोर्भेदयोस्तुरीयस्य अनुक्तवैधर्म्ये व्यतिरेके पञ्चमस्य केषांचिन्मते आक्षेपे च अन्तर्भावं, तस्याक्षेपत्वमनङ्गीकुर्वतां प्राचां मते प्रतीपत्वं च अभिप्रैति ॥

१. चन्द्रालोके तु— **'यत्रोपमानचित्रेण सर्वथाप्युपरज्यते । उपमेयमयी भित्तिस्तत्र रूपकमिष्यते ॥ समानधर्मयुक्साध्यारोपात्सोपाधिरूपकम् । उत्सिक्तक्षितिभृल्लक्ष्यपक्षच्छेदपुरन्दरः ॥'** साधारणधर्मविशिष्टोप-

अयं हि धूर्जटिस्साक्षाद्येन दग्धाः पुरः क्षणात् ।
अयमास्ते विना शम्भुस्तार्तीयीकं विलोचनम् ॥
शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ।
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥
साध्वीयमपरा लक्ष्मीरसुधासागरोदिता ।
अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥

---

मिति यावत् । न चैवमतिशयोक्तावतिव्याप्तिः । निरुक्तरञ्जनस्य विषयितावच्छेदकतावच्छिन्नत्वेन विवक्षणीयत्वात् । 'पश्य नीलोत्पलद्वन्द्वा'देति वक्ष्यमाणतदुदाहरणे नीलोत्पलद्वन्द्वशराभेदबुद्धोः नेत्रकटाक्षगोचरयोः नेत्रत्वकटाक्षत्वरूपविषयतावच्छेदकावच्छिन्नत्वाभावात् । अत एव 'नेदं मुखं किन्तु शशाङ्कबिम्बम्' इत्यपह्नुतौ विषयतावच्छेदकमुखादेस्संसर्गितया विषये निषिध्यमानतया निरुक्तरञ्जनस्य तदवच्छिन्नत्वाभावान्नातिव्याप्तिः । न चैवमपि 'यद्दातुस्सौम्यते'ति वक्ष्यमाणासम्भवद्वस्तुसम्बन्धनिबन्धने अतिव्याप्तिः । विषयीभूतैन्दवाकलङ्कताभेदरञ्जनस्य दातृत्वसौम्यतात्वरूपविषयतावच्छेदकावच्छिन्नत्वादिति वाच्यम् । बिम्बप्रतिबिम्बभावापन्नधर्मवैशिष्ट्यविषयतानैयत्यराहित्यस्यापि रञ्जने विशेषणत्वात् । दातृसौम्यतादौ ऐन्दवाकलङ्कताभेदरञ्जनस्य सौम्यताकलङ्कतयोर्विषयविषयिणोर्बिम्बप्रतिबिम्बभावापन्नेन्दुदातृवैशिष्ट्यविषयत्वनैयत्यसत्त्वेन तद्वैधुर्याभावात् । न च तथापि तादृशवैशिष्ट्यराहित्यमेव विशेषणमास्ताम् । न तु नैयत्यमपि तत्र निवेशनीयम् । तावतैव क्वचिदपि बिम्बप्रतिबिम्बभावशून्ये रूपके लक्षणसद्भावान्निदर्शनायां सर्वत्र बिम्बप्रतिबिम्बभावसत्वात् न तद्वैशिष्ट्यराहित्यमिति नातिप्रसङ्ग इति वाच्यम् । सर्वत्र रूपके बिम्बप्रतिबिम्बभावाभावेऽपि क्वचित् 'व्योमानोकहपुष्पगुच्छमलिभिस्सञ्छाद्यमानोदरं पश्यैतच्छशिनस्सुधासहचरं बिम्बं कलङ्काङ्कितम् ॥' तथा—स्वधाकृतं यत्तनयैः पितृभ्यः श्रद्धापवित्रं तिलमिश्रमम्भः । चन्द्रं पितृस्थानतयोपतस्थे तदङ्करोचिःखचिता सुधैव ॥' इत्यादौ चन्द्रबिम्बसुधयोः कलङ्काङ्करोचिर्विशिष्टयोर्भ्रमरगर्भितव्योमतरुकुसुमत्वातिल-

---

मानस्य यत्रारोप इत्यर्थः । **'पृथक्कथितसादृश्यं द्वयं सादृश्यरूपकम् । उल्लसत्पञ्चशाखस्ते राजते भुजभूरुहः ॥ स्यादंगयष्टिरित्येवंविधमाभासरूपकम् । अंगयष्टिधनुर्वल्लीत्यादिरूपितरूपकम् ॥'** इति रूपकविभागोऽस्ति ।

१. अस्यार्धस्य पूर्वार्धम् 'कन्दर्पद्विपकर्णकम्बु मलिनैर्दानाम्बुभिर्लाञ्छितं संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः ।' इत्येतदत्र नोदाहृतम् । इदं पद्यं सर्वस्वटीकायां विमर्शिन्यामुदाहृतम् । **कन्दर्पद्विपेति** । सर्वत्र षष्ठीतत्पुरुषः । कम्बु शंखः । 'शंखः स्यात्कम्बुरस्त्रियाम्' इत्यमरवचनान्नपुंसकत्वमपि । कलं रमणीयम् ।

विषयि उपमानभूतं पद्मादि । विषयस्तदुपमेयभूतं वर्णनीयं मुखादि । विषयिणो रूपेण विषयस्य रञ्जनं रूपकम् । अन्यरूपेण रूपवत्त्वकरणात् । तच्च क्वचित्प्रसिद्धविषय्यभेदे पर्यवसितम् । क्वचिद्भेदे प्रतीयमान एव तदाद्यधर्मारोपमात्रे पर्यवसितम् । ततश्च, रूपकं तावत् द्विविधम् । अभेदरूपकं ताद्रूप्यरूपकं चेति । द्विविधमपि प्रत्येकं त्रिविधम् । प्रसिद्धविषय्याधिक्यवर्णनेन तन्न्यूनत्ववर्णनेन अनुभयोक्त्या च । एवं रूपकं षड्विधम् ॥ 'अयं ही' त्यादिसार्धश्लोकेनाभेदरूपकाणि । 'अस्या मुखेन्दुने' त्यादिसार्धश्लोकेन ताद्रूप्यरूपकाणि । आधिक्यन्यूनत्वानुभयोक्त्युद्देशक्रमप्रातिलोम्येनोदाहृतानि । 'येन दग्धा, इति विशेषणेन वर्णनीये राज्ञि प्रसिद्धशि-

---

मिश्राम्भस्त्वरूपणे बिम्बप्रतिबिम्बभावापन्नकलङ्कभ्रमराङ्कराचिस्तिलवैशिष्ट्यविषयकत्वसत्त्वेन तद्राहित्याभावेनाव्याप्त्यापत्तेः । नियमविवक्षणे च तदभावस्य सर्वत्र सत्त्वान्नाव्याप्तिः । न वातिव्याप्तिः । यद्वा । तादृशधर्मवैशिष्ट्याविषयताशून्यरञ्जनवृत्त्यवच्छेद्यतानिरूपितविषयतासम्बन्धावच्छिन्नरञ्जनावच्छेदकताविशिष्टाभेदताद्रूप्यान्यतरवृत्त्यलङ्कारविभाजकधर्मवत्त्वं विवक्षणीयम् । तेन नोक्ताव्याप्त्यतिव्याप्ती । तादृशरूपकत्वस्य रूपके सत्त्वात् । निदर्शनात्वस्य च निरुक्तरञ्जनावच्छेदकत्वविशिष्टाभेदताद्रूप्यान्यतरवृत्तित्वाभावात् । एतेन, 'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते । उपरञ्जकतामेति विषयी रूपकं तदा ॥' इति चित्रमीमांसायां ग्रन्थकृदुक्तं लक्षणमपि बिम्बवैशिष्ट्यनियमराहित्यगर्भतया तादृगुपाधिमत्त्वघटिततया वा सङ्गमनीयम् । अन्यथा उक्तदोषप्रसङ्गात् । अतो रसगङ्गाधरोक्तिर्नादर्तव्येति दिक् ॥ श्लोकं व्याचष्टे—**विषयीति** । **रूपेणेति** । तृतीयार्थो विषयता । तथा च विषयिरूपप्रकारकं विषयविशेष्यकं ज्ञानं रञ्जनमिति भावः । यद्यपि रूपकवाक्ये न रञ्जनं प्रतिपाद्यम् । अपि तु रूपकवाक्यात्तादृशबोधो भवति । न च स्वरूपसतस्तस्यालङ्कारत्वं युक्तम् । सर्वत्र वर्ण्यमानस्यैवालङ्कारत्वात् । तथापि तादृशरञ्जनविषयीभूतं अभेदताद्रूप्यान्यतरदिह रूपकमिति हृदयम् । रूपकशब्दावयवव्युत्पत्तिं प्रदर्शयति—**अन्यरूपेणेति** । विषयिधर्मेणेत्यर्थः । तत्त्रिधेत्याद्यंशं व्याचष्टे—**तच्चेति** । चस्त्वर्थः । **क्व चिदिति** । यत्र न विषयविषयिणोर्भेदप्रत्ययः तत्र प्रसिद्धविषयभेदस्यैव सामानाधिकरण्यात्प्रतीतेरभेदपर्यन्तता । **क्व चिदिति** । यत्र भेदनिर्देश इत्यर्थः । तत्र प्रसिद्धविषय्यभेदबोधासम्भवेन तद्धर्मारोपस्यैव विवक्षितत्वादिति भावः । फलितमाह—**ततश्चेति** । द्वयोरपि प्रत्येकं त्रैविध्यात् षड्विधत्वमिति भावः । ननु, 'आधिक्यन्यूनत्वानुभयोक्तिभि' रिति विभागवाक्ये आधिक्यस्य प्रथममुक्तेरधिकाभेदरूपकमेव प्रथममुदाहर्तुमुचितम् । न त्वनुभयाभेदरूपकमित्याशङ्क्य, उदाहरणश्लोकान् लक्ष्यानुसारेण तेषु योजयति—**अयं हीत्यादीति** । अत्र अयमिति वर्णनीयं राजानं निर्दिश्य शम्भुरिति शम्भुपदेन

वाभेदानुरञ्जनात् शिवस्य पूर्वावस्थातो वर्णनीयराजभावावस्थायां न्यून-त्वाधिक्ययोरवर्णनाच्च अनुभयाभेदरूपकमाद्यम् । तृतीयलोचनप्रहाणोक्त्या पूर्वावस्थातो न्यूनताप्रदर्शनान्न्यूनाभेदरूपकं द्वितीयम् । न्यूनत्ववर्णनमप्य-भेददार्ढ्यापादकत्वाच्चमत्कारि । विषमदृष्टित्वपरित्यागेन जगद्रक्षकत्वोक्त्या शिवस्य पूर्वावस्थातो वर्णनीयराजभावावस्थायां उत्कर्षविभावनादधिकाभे-दरूपकं तृतीयं । एवमुत्तरेषु ताद्रूप्यरूपकोदाहरणेष्वपि क्रमेणानुभय-न्यूनाधिकभावा उन्नेयाः । अनेनैव क्रमेणोदाहरणान्तराणि ॥

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वाः
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।

---

तत्सामानाधिकरण्यादभेदप्रत्ययः । साक्षादिति पदेन भेदकधर्मानिर्देशादनुभयोक्तिस्सूचिता । तेन पुरदहनकर्तृशिवसादृश्यं वर्णनीये राज्ञि गम्यते । न च येनेति यच्छब्दस्य तच्छब्द-साकाङ्क्षत्वात्तदनुपादानात् न्यूनत्वं दोषः । उत्तरवाक्यगतयच्छब्दस्य पूर्ववाक्ये तच्छब्दो-पादानं विनापि निराकाङ्क्षत्वात् । 'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधि-के । उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥' इत्यत्र द्वितीयपादगत-यच्छब्दस्य उत्तरवाक्यगतत्वेन पूर्ववाक्ये तच्छब्दोपादानं विनैव निराकाङ्क्षत्वेन न न्यून-पदत्वमिति दोषोल्लासः काव्यप्रकाशादौ क्षुण्ण इति भावः । **द्वितीयमिति** । 'अयमा-स्ते' इत्यत्रेति शेषः । ननु, उपमेयस्य न्यूनत्वोक्तौ प्रकृतापकर्षपर्यवसानात् न चमत्कारि-तेत्यत आह—**न्यूनत्ववर्णनमपीति** । जगदवनकृते जगत्संहारकृत्तार्तीयीकलोचनप्र-हाणं कार्यानुगुण्यादुचितमिति तृतीयलोचनशून्यस्साक्षाच्छम्भुरेवायमिति अभेददृढीकरणात् न न्यूनत्ववर्णनं चमत्कारविरोधीति भावः । **विषमेति** । यद्यपि विषमदृष्टित्यागः 'शम्भुर्विश्व'मित्युदाहरणे न शब्दात्प्रतीयते । समदृष्टितास्वीकारस्यैव तेनावगमात् । तथा पि विषमदृष्टित्यागं विना समदृष्टितास्वीकारस्यानुपपद्यमानतया तेनाक्षेपात्तस्य प्रतीति-रिति तात्पर्यम् । ताद्रूप्यरूपकेऽप्यवान्तरभेदाः अभेदरूपकन्यायेन ज्ञातव्या इत्याह—**एव-मिति** । **उन्नेया** इति । अयमभिसन्धिः । 'अस्या मुखेन्दुने' त्यत्र मुखस्य न प्रसिद्ध-चन्द्राभेदप्रतीतिस्सम्भवति । प्रसिद्धेन्दोः कैमर्थ्यवर्णनेन मुखेन्दोस्ततो भेदप्रतीतेः । तेन इन्दुगतसाधारणधर्मस्य इन्दुत्वस्य मुखे उपरञ्जनमात्रम् । प्रसिद्धचन्द्रात् न्यूनत्वाधिक्ययो-रवर्णनाच्चानुभयताद्रूप्यरूपकम् । 'साध्वीयमपरे' त्यत्र इयमिति कां चन नायिकां निर्दि-श्य, अपरलक्ष्मीत्वोक्त्या प्रसिद्धलक्ष्मीतोभेदाविष्करणात् सुधासागरोदितत्ववैकल्याच्च न्यूनता-द्रूप्यरूपकम् । 'अयं कलङ्किन' इत्यत्र प्रसिद्धचन्द्रात् कण्ठतो व्यतिरेकप्रतिपादनेन प्रसिद्धच-न्द्रकलङ्कित्वविशेषणेन मुखचन्द्रे कलङ्कवैधुर्यप्रतीत्या आधिक्यवर्णनात् अधिकताद्रूप्यरूपक-मिति क्रमेणानुसन्धेयम् । स्वयमेषामुदाहरणान्तराण्याह—**अनेनैवेति** । **चन्द्रज्योत्स्ने-**

एको वक्ति प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भगवन्? को हतस्तत्र पूर्वम् ॥

अत्र स त्वमित्यनेन यः कंसकैटभयोर्हन्ता गरुडध्वजः तत्तादात्म्यं वर्णनीयस्य राज्ञः प्रतिपाद्य, तं प्रति कंसकैटभवधयोः पौर्वापर्यप्रश्नव्याजेन तत्तादात्म्यदृढीकरणात् पूर्वावस्थात् उत्कर्षापकर्षयोरविभावनाच्चानुभयाभेदरूपकम् ।

वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च ।
तासु तेष्वप्यनासक्तस्साक्षाद्भर्गो नराकृतिः ॥

अत्र साक्षादिति विशेषणेन विरक्तस्य प्रसिद्धशिवतादात्म्यमुपदर्श्य, नराकृतिरिति दिव्यमूर्तिवैकल्यप्रतिपादनान्न्यूनाभेदरूपकम् ।

त्वय्यागते किमिति वेपत एष सिन्धुः
त्वं सेतुमन्थकृदतः किमसौ बिभेति ।
द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य
त्वां राजपुङ्गव! निषेवत एव लक्ष्मीः ॥

अत्र 'त्वं सेतुमन्थकृ'दिति सेतोरमृतमन्थनस्य च कर्त्रा पुरुषोत्तमेन सह वर्णनीयस्य तादात्म्यमुक्त्वा, तथापि त्वदागमनं सेतुबन्धनाय वा अमृतमन्थनाय वेति समुद्रेण न भेतव्यम् । द्वीपान्तराणामपि त्वद्वशंवदत्वेन पूर्ववत् द्वीपान्तरे जेतव्याभावात् । प्राप्तलक्ष्मीकत्वेन च बन्धनमन्थनप्रस-

---

ति । अत्र यद्यपि चन्द्रपदमनर्थकम् । ज्योत्स्नायाश्चन्द्रं विना अन्यत्रासम्भवात् । तथापि चन्द्रोदयकालिकत्वं ज्योत्स्नायां व्यञ्जयितुम् । तदपि प्राभातिकज्योत्स्नया न तादृक्पुलिनविशदिमेति वैशद्यातिशयव्यक्तये । **सिद्धयूनोरिति** । त्रिदिवे आकाशगङ्गासैकते न तथा रामणीयकमिति तदपहाय भुवमवतीर्णयोस्सिद्धयूनोस्सरयूसैकते वादोक्त्या तस्य ततोऽपि रमणीयतातिशयव्यञ्जनात् । उदाहरणे लक्षणमनुगमयति—**अत्र स त्वमिति** । स इति प्रकृतपरामर्शिना तच्छब्देन मधुकैटभहन्तुः प्रत्यवमर्शादिति भावः । द्वितीयमुदाहरति—**वेधा इति** । भ्रमोऽत्र मोहः । ब्रह्मसृष्टिविषयेषु न क्वापि तादृशमोहराहित्यमिति तत्सृष्टिगन्धानभिभूततया तदुभयमोहाविदूरता शिव एवेति तत्तादात्म्यारो-

क्त्यभावाच्चेति पूर्वावस्थात उत्कर्षविभावनादधिकाभेदरूपकम् ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

अत्र 'अपरश्शीतांशु,रित्यनेन वक्त्रेन्दोः प्रसिद्धचन्द्राद्भेदमाविष्कृत्य तस्य च प्रसिद्धचन्द्रकार्यकारित्वमात्रप्रतिपादनेन उत्कर्षापकर्षयोरप्रदर्शनात् अनुभयताद्रूप्यरूपकम् ।

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अफाललोचनश्शंभुः भगवान् बादरायणः ॥

अत्र हर्यादावपर इति विशेषणात् त्रिष्वपि ताद्रूप्यमात्रविवक्षा विभाविता चतुर्वदनत्वादिवैकल्यं चोक्तमिति न्यूनताद्रूप्यरूपकम् । इदं विशेषोक्त्यु-

---

पस्साक्षादित्यनेन गर्भीकृतः । **पूर्वावस्थात इति** । पुरुषोत्तमभावावस्थात इत्यर्थः । **उत्कर्षेति** । 'द्वीपान्तरेऽपी'त्युत्तरार्धेन उत्कर्षोक्तेरित्यर्थः । **किं पद्मस्येति** । 'अत्रापरश्शीतांशु'रिति प्रसिद्धचन्द्रभेदं मुखात्मकचन्द्रे प्रतिपाद्य, प्रसिद्धचन्द्रकार्याणां पद्मकान्तिविघटकत्वादीनां मुखात्मकचन्द्रेणैव सिद्धेः प्रसिद्धचन्द्रः अकिञ्चित्कर इति तस्य कैमर्थ्योक्तेः, पञ्चमप्रतीपप्रकारः प्राधान्येन विवक्षितः । 'वक्त्रेन्दा'विति सामानाधिकरण्यावगतं रूपकं तदङ्गमिति तयोरङ्गाङ्गिभावसङ्करो द्रष्टव्यः । लक्ष्ये लक्षणं योजयति—**अत्रेति** । ननु, 'अचतुर्वदन' इति श्लोके 'द्विबाहुरपरो हरि'रिति हरावपर इति विशेषणात् प्रसिद्धहरिभेदप्रतीतेः चतुर्भुजत्वादिवैकल्यवर्णनाच्च न्यूनताद्रूप्यरूपकसम्भवेऽपि प्रथमतृतीयपादयोः ब्रह्मशम्भुभेदानुक्तेस्सामानाधिकरण्येन ब्रह्मशिवाभेदस्य भगवति बादरायणे चतुर्वदनत्वादिपूर्वावस्थातो न्यूनत्वस्य च प्रतिपादनात् 'अयमास्ते विना शम्भु'रित्यत्रेव न्यूनाभेदरूपकमेवेति कथं ताद्रूप्यरूपकमित्यत आह—**अत्रेति** । हर्यादाविति । अपर इति विशेषणं प्रथमतृतीयपादयोरपि सम्बध्यत इति सर्वत्र ताद्रूप्यविवक्षणात् न्यूनताद्रूप्यरूपकाणि त्रीण्यत्रेत्यर्थः । यद्यपि अपर इति विशेषणस्य पूर्वोत्तरयोरननुकर्षेण ताद्रूप्यरूपकासम्भवेऽपि न्यूनाभेदरूपकासम्भवात्तयोः द्वितीयपादोक्तताद्रूप्यरूपकस्य च संसृष्टिरिति वक्तुं शक्यम् । तथापि प्रायपाठेन सजातीयरूपकत्रयसंसृष्टिरेव कविविवक्षितेति तन्निर्वाहाय पूर्वोत्तरवाक्ययोरपर इत्यस्यानुकर्ष इति हृदयम् । अत्र वामनमतमाह—**इद-**

दाहरणमिति वामनमतम् । यदाह—'**एकगुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिः**' इति ।

किमसुभिर्गलितैर्जड! मन्यसे मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥

अत्र दमयन्तीकृतचन्द्रोपालम्भे प्रसिद्धचन्द्रो न निर्याणकालिकमनःप्रवेशश्रुतितात्पर्यविषयः । किन्तु, नलमुखचन्द्र एवेति ततोऽस्याधिक्यप्रतिपादनादधिकताद्रूप्यरूपकम् । रूपकस्य सावयवत्वनिरवयत्वादि भेदप्रपञ्चनं

---

मिति । **एकगुणहानाविति** । चतुर्वदनत्वादेर्गुणस्य हान्युक्तेरिति भावः । **किमसुभिरिति** । अत्र जडपदेन विधुं प्रति असूयात्मकस्सञ्चारिभावो व्यज्यत इति भावध्वनिः । वियोगिनीनां मादृशामसुभिर्गलितैस्तव किं फलं स्यात् । 'मृतानां मनश्चन्द्रमसं प्रविशती'त्याम्नायवचनस्य महामहोपाध्यायेन मन्मथेन नलमुखेन्दुपरत्वेन व्याकरणात्तन्मनसां त्वयि प्रवेशाशापिशाची अकिञ्चित्करीति न तवेष्टसिद्धिरिति इयता निरवधिना कालेन त्रिभुवनवर्तिनिरवधिवियोगिनीजनमारणसमासादितदुरन्तदुरितसन्ततिर्नाद्यापि मतो व्यापारान्निवर्तसे । अत एव त्वादृशपापिष्ठावलोकने सूर्यावलोकनं युक्तमिति मन्यमानाः पतत्रिणोऽपि रथाङ्गनामानः सौरावलोकनसस्पृहा इति वस्तुध्वनिः । अस्य जडपदद्योत्यासूयाध्वनेश्चाङ्गाङ्गिभावसङ्करः । एतत्परिपोषितश्च प्रबन्धव्यङ्ग्यो विप्रलम्भशृङ्गाररसध्वनिः दमयन्त्यालम्बनश्चन्द्रिकोद्दीपितः प्रधानभूतः कविविवक्षितः । अत्र नलमुखेन्दुपदप्रतिपादितं रूपकमनुगुणतामापाद्यते इति श्लोकतात्पर्यम् । अधिकताद्रूप्यरूपकमुपपादयति—**अत्र दमयन्तीति** । अत्रेदं वक्तव्यम् । मंखुकमम्मटभामहप्रभृतयः प्राचीनाः प्रबन्धारः नैवं रूपकस्य भेदानदर्शयन् । तेषामयं भावः । ताद्रूप्यरूपकं नाभेदरूपकादतिरिच्यते । ताद्रूप्यं हि तादात्म्यमेव न ततोऽन्यत् । तत्तु तद्वृत्तिरसाधारणो धर्म इति सर्वत्रैव रूपके विषय्यसाधारणधर्मवत्त्वप्रतीतेरभेदताद्रूप्यरूपकयोः परस्परव्यावृत्तधर्माभावेन भेदानुपपत्तेः । न च ताद्रूप्यरूपके प्रसिद्धचन्द्रभेदोक्त्या नाभेदप्रतिपत्तिसम्भव इति वाच्यम् । प्रसिद्धविषय्यभेदप्रतिपत्त्यसम्भवेऽपि कविकल्पितविषय्यभेदप्रतिपत्तिर्भवेदेव । अन्यथा 'अस्यामुखेन्दुने'त्यादौ मुखेन्दुनेति सामानाधिकरण्यानुपपत्तिप्रसङ्गात् एकविधमेव रूपकं युक्तम् । यदपि तत्र न्यूनत्वाधिक्यादिकृतभेदत्रैविध्यकथनं तदपि अतिशयोक्त्याद्यलङ्कारान्तरसाधारणम् । नात्रैवासाधारण्येनोदाहरणमर्हति । स्वयमेव सुधीभिरुन्नेतुं शक्यत्वात् । किञ्च । न्यूनत्वाधिक्ययोर्व्यतिरेकालङ्कारापत्त्या न रूपकसम्भव इति दिक् । ननु, मंखुकादिभिस्सावयवनिरवयवादयो भेदाः रूपकस्य प्रदर्शिताः । ते कथं परित्यक्ता इत्यत आह—**रूपकस्येति** । इत्थं चित्रमीमांसायामुप-

3428

तु, चित्रमीमांसायां द्रष्टव्यम् ।

इति श्रीमदप्पय्यदीक्षितकृतौ कुवलयानन्दे रूपकप्रकरणम् ॥ ५ ॥

---

पादितम् । रूपकं तावत्त्रिविधम् । निरवयवं सावयवं परम्परितं चेति । आद्यं केवलं मालं चेति द्विविधम् । द्वितीयं समस्तवस्तुविषयं एकदेशविवर्तीति च द्विविधम् । परम्परितं तु, श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधं सत् केवलमालाभेदेन चतुर्विधम् । एवमष्टविधो रूपकालङ्कारः । क्रमेणोदाहरणानि । 'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि ! नास्मि दूये । उद्यत्कठोरपुलकांकुरकण्टकाग्रैः यत्खिद्यते तव पदं ननु ! सा व्यथा मे ॥' अत्र, पुलकांकुरे कण्टकाग्रत्वरूपणात् तद्धर्मिणां च रूपकाभावात् आरोप्यमाणस्यैक्याच्च केवलं निरवयवम् । यथा वा—कविसार्वभौमसमरपुङ्गवदीक्षितानाम् । 'सङ्के भृशं क्रोशति षट्पदानां कुहूरवाधायिषु कोकिलेषु । अपह्नुवानो धृतिमध्वगानां समीरचोरश्शनकैश्चचार ॥' अत्र, समीरे चोरत्वरूपणं केवलं निरवयवम् ।१। 'लङ्काभिव्यातिधाटीचटुलरघुवरोद्दामदोर्धाममार्गः त्रैलोक्यग्रासजाग्रद्दशवदनयशोरोधविष्कम्भकाण्डः । सेतुर्वस्सन्तनोतु श्रियमुभयनदीबान्धवोपान्तलीलालोलत्कल्लोलमल्लद्विपयुगलसमीकाभेटीमध्यभित्तिः ॥' इदमपि तेषामेव । अत्र, एकस्मिन्सेतौ अधिष्ठाने दोर्धाममार्गत्वदशवदनयशोरोधविष्कम्भकाण्डत्वसमीकाभेटीमध्यभित्तित्वानामनेकेषामारोप्यमाणतया मालानिरवयवम् । पूर्वस्मादत्रायं विशेषः । पूर्वार्धे निरवयवमालारूपकम् । उत्तरार्द्धे पूर्वापरसमुद्रतरङ्गयोर्हस्तित्वारोपः सेतौ तत्समराभेटीमध्यभित्तित्वारोपं प्रति हेतुरित्युभयोः सञ्जातपरम्परत्वाद्विषयविषयिणोः श्लिष्टशब्देनाप्रतिपादनाच्चाश्लिष्टशब्दनिबन्धनं केवलपरम्परितम् । पूर्वार्द्धगतनिरवयवमालारूपकस्यास्य च संसृष्टिः ।२। 'ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् । द्वीपात् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥' अत्र, रजन्यां कापालिकीत्वरूपणस्य तदवयवानां ज्योत्स्नाचन्द्रादीनां पृथग्भस्मत्वादिरूपणात् समस्तेष्ववयवावयविषु रूपकस्य शाब्दतया समस्तवस्तुविषयं सावयवरूपकम् । यथावा—भगवन्तरायसचिवस्य । 'सुरवर्त्मपुटे कराग्नितप्तं दिनकृन्मण्डलजातरूपगोलम् । सहसा समयस्सुवर्णकारः परिनिर्वापयति स्म पश्चिमाब्धौ ॥३।' एकदेशविवर्ति यथा—समरपुङ्गवदीक्षितानाम् । 'अस्ताद्रिश्टङ्गादतिमात्रतुङ्गादात्माधिनाथं पतयालुमब्धौ । द्रष्टुं नलिन्यो धृतभीतिभारा व्यामीलयन्नीरजलोचनानि ॥' अत्र, कमलेषु लोचनत्वरूपणस्य शाब्दत्वेन नलिनीषु द्रष्ट्रीत्वारोपस्य गम्यतया एकदेशे विशेषेण वाच्यतया सावयवरूपकं वर्तत इत्येकदेशविव-

---

१. विद्यानाथादयस्तु—अष्टविधस्यापि रूपकस्य वाक्यसमासगतत्वेन प्रत्येकं द्वैविध्ये षोडशविधत्वमुदाहरन्ति । रशनारूपकादयो भेदाः वैचित्र्याभावाश्नलक्षिता इति प्रकाशकारः । उपमायामिव रूपकेऽपि । बहवो भेदास्सुधीभिरुन्नेयाः । तथा चोक्तं काव्यालोके । अपर्यन्तो विकल्पानां रूपकोपमयोर्यतः । दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ इति । २. अस्मि—अ-

र्ति सावयवरूपकम् ।४। 'अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते देव! सद्वंशमुक्तारत्नं न कैर्भवान् ॥' अत्र, सद्वंश एव समीचीनो वंशो वेणुरिति कुले वेणुत्वारोपं प्रति राज्ञि मौक्तिकत्वारोपः कारणमित्युभयोः सञ्जातपरम्परत्वात् वंशशब्दश्लेषाच्च श्लिष्टशब्दनिबन्धनं केवलपरम्परितरूपकम् ।५। 'विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्रद्युते! दुर्गामार्गणनीललोहित! समित्स्वीकारवैश्वानर! । सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो! साम्राज्यं वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥' अत्र, विदुषां मानसमन्तःकरणमेव मानसं सरः तत्र हंसेति एकं सम्बोधनम् । वैरिकमलायाः रिपुलक्ष्म्याः सङ्कोचः यो ह्रासः स एव कमलानां असङ्कोचः विकासनं तत्र दीप्रद्युते सूर्येति द्वितीयसम्बोधनार्थः । दुर्गाणां गिरिवनादिरूपाणां स्वतस्सिद्धतया अमार्गणमेव दुर्गायाः पार्वत्याः मार्गणं अन्वेषणं तत्र नीललोहित! परमेश्वरेति तृतीयसम्बोधनार्थः । समितो युद्धस्य स्वीकार एव समिधामिन्धनानां स्वीकारः तत्र वैश्वानरेति तुरीयसम्बोधनार्थः । सत्येषु प्रीतिकरणमेव सतीदेव्यामप्रीतिविधानं अविश्वासस्य करणं तत्र दक्ष! दक्षप्रजापते! इति पञ्चमसम्बोधनार्थः । विजये शत्रुपराजये विषये प्राग्भावः अभीतया पुरोभवनमेव विजयस्यार्जुनस्य प्राग्भावः ज्येष्ठता तत्र भीम! भीमसेनेति षष्ठसम्बोधनार्थः । अत्र, वर्णनीये राज्ञि हंसत्वरूपणं विद्वन्मानसे मानससरस्त्वारोपणं प्रति, नीललोहितत्वरूपणं वैरिलक्ष्मीसङ्कोचे कमलसङ्कोचाभावत्वरूपणं प्रति, वैश्वानरत्वरूपणं युद्धस्वीकारे इन्धनस्वीकारत्वरूपणं प्रति, दक्षत्वरूपणं सत्ये प्रीतिविधाने सतीदेव्यामप्रीतिविधानत्वरूपणं प्रति, भीमसेनत्वारोपणं विजयोत्कर्षे अर्जुनज्येष्ठत्वरूपणंप्रति च, हेतुरिति उत्तरोत्तररूपकस्य पूर्वपूर्वरूपकहेतुत्वात्मकपरम्परासद्भावात् मानसकमलासङ्कोचादिशब्दानां श्लिष्टतया एकस्मिन् राज्ञि बहूनामारोपाच्च श्लिष्टशब्दनिबन्धनं मालापरम्परितरूपकम् ।६। 'पर्यङ्को राज्यलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गः सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः । भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्त्यानदानाम्बुपट्टः खड्गः क्ष्मासौविदल्लस्समिति विजयते मालवाखण्डलस्य ॥' अत्र, वर्णनीयराजकरवाले पर्यङ्कत्वादिरूपणं राजलक्ष्मीपौरुषादौ नायिकात्वाब्धित्वाद्यारोपं प्रति निमित्तम् । श्लेषविरहाच्चाश्लिष्टशब्दनिबन्धनं मालापरम्परितम् ।७। अत्रापरो विशेषः । राज्यलक्ष्म्या नायिकात्वरूपणस्य गम्यत्वात् क्ष्मायामवरोधत्वरूपणस्य च गम्यतया एकदेशविवर्ति रूपकम् ॥ 'यामि मनोवाक्कायैः शरणं करुणात्मकं जगन्नाथ! । जन्मजरामरणार्णवतरणतरण्यं तवाङ्घ्रियुगम् ॥' अत्र, भगवदङ्घ्रियुगे नौकात्वारोपणं जन्मजरामरणक्लेशे अर्णवत्वरूपणं प्रति हेतुः । श्लिष्टविरहाच्चाश्लिष्टशब्दनिबन्धनं केवलपरम्परितम् ।८। इत्यष्टविधो रूपकालङ्कारः ॥ एते च भेदाः उपमायामपि वक्तुं शक्या इति चित्रमीमांसायां ग्रन्थकारः प्रत्यपादयत् । तदुदाहरणानि तत्रैव द्रष्टव्यानि ॥ अत्रेदमवधेयम् ॥ परम्परितरूपके उत्तररूपकस्य पूर्वरूपकं प्रति हेतुत्वं मंखुकादयोऽभिदधुः । मम्मटादयस्तु, पूर्वरूपकस्य उत्तररूपकं प्रति हेतुत्वमाहुः । यथाहुः—'एवमारोपणनिमित्तो हंसत्वाद्यारोपः' इति । तेषामयं भावः ।

---

ह्रमित्यर्थः ।'दून:' इति ख. पाठः । १.' स्वतश्शूरतया अनपेक्षणमेव ' इति ख. पाठः ।

अथ परिणामः—

**परिणामः क्रियार्थश्चेद्विषयी विषयात्मना।**
**प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥**

यत्र आरोप्यमाणो विषयी किञ्चित्कार्योपयोगित्वेन निबध्यमानः स्वतस्तस्य तदुपयोगित्वासम्भवात् प्रकृतात्मतापरिणतिमपेक्षते तत्र परिणामालङ्कारः। अत्रोदाहरणं प्रसन्नेनेति । अत्र.ह्यब्जस्य वीक्षणोपयोगित्वं निबध्यते न तु दृशः। मयूरव्यंसकादिसमासेनोत्तरपदार्थप्राधान्यात् । न चोपमितसमासाश्रयणेन दृगब्जमिवेति पूर्वपदार्थप्राधान्यमस्त्विति वाच्यम्। 'प्रसन्नेने'ति सामान्यधर्मप्रयोगात्। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति तदप्रयोग एवोपमितसमासानुशासनात् । अब्जस्य वीक्षणोपयोगित्वं न स्वात्मना सम्भवति । अतस्तस्य प्रकृतदृगात्मतापरिणत्यपेक्षणात् परिणामालङ्कारः ।

---

'विद्वन्मानसहंसे'त्यादौ विद्वन्मानसेति श्लेषस्य प्राथमिकतया तन्मूलकार्थद्वयाभेदाध्यवसायोपजीविरूपकस्य प्रथमप्रतीत्या तद्बुद्धेरुत्तररूपकबुद्धिं प्रति हेतुत्वं युक्तमिति दिक् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां रूपकप्रकरणम् ॥ ५ ॥

परिणामं लक्षयति—**परिणाम इति** । श्लोकं व्याचष्टे—**यत्रेति** । आरोप्यमाणस्य विषयिणो विषयात्मतया निबध्यमानकार्योपयोगित्वं यत्र, तत्र परिणामः । स्वतो विषयिणः क्रियोपयोगित्वासम्भवेन विषयात्मना परिणतेः परिणामसञ्ज्ञाया अन्वर्थता । उदाहरणं व्याचष्टे—**अत्र हीति** । 'प्रसन्नेने'त्यत्र अब्जस्य 'दृगब्जेनेति' तृतीयया प्रतिपाद्यमानवीक्षणक्रियाकरणत्वेन अन्वयो वाच्यः । न तु दृशः । तस्या अब्जविशेषणत्वात् । दृगब्जमिति हि मयूरव्यंसकादिसमासः । स चोत्तरपदार्थप्रधानः । न चोपमितसमासेन राघवशार्दूल इत्यादाविवात्रापि पूर्वपदार्थस्य दृशः प्राधान्येन करणत्वान्वयोऽस्त्विति वाच्यम् । तस्य साधारणधर्माप्रयोग एवानुशिष्टत्वात् । अत्र च 'प्रसन्नेने'ति प्रसादस्य साधारणधर्मस्य उपादानात् । अतोऽब्जस्यैव वीक्षणक्रि-

---

१. चन्द्रालोके तु, '**परिणामोऽनयोर्यस्मिन्नभेदः पर्यवस्यति । कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ**' ॥ इत्युक्तं । पर्यवस्यति क्रियान्वयेन भवतीत्यर्थः । अत्र मौनस्य दानक्रियान्वय उत्तरात्मनैव । न स्वात्मनेति भावः । अयं परिणामालङ्कारः '**तद्रूपकमभेदो य उपमानोपमेययोः** ।' इति रूपकलक्षणं लक्षयता प्रकाशकारेण रूपके ऽन्तर्भावितः । एवं च प्राचां प्रकाशकृदा-

यथा वा—

> तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीयः
> तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ।
> व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
> कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥

अत्रारोप्यमाण आतरः सौमित्रिमैत्रीरूपतापत्त्या गुहोपकारलक्षणकार्योपयोगी । न स्वात्मना । गुहस्य रघुनाथप्रसादैकापेक्षित्वेन वेतनार्थित्वाभावादिति परिणामालङ्कारः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे परिणामप्रकरणम् ॥ ६॥

अथ उल्लेखः—

> **[1]बहुभिर्बहुधोल्लेखात् एकस्योल्लेख इष्यते ।**
> **स्त्रीभिः कामोऽर्थिभिस्स्वर्द्रुः कालश्शत्रुभिरैक्षि सः ॥**

---

याकरणत्वान्वयः । स च तस्य स्वतो वीक्षणक्रियाकरणत्वासम्भवादनुपपद्यमानस्तस्य त्रिषयात्मतापत्तिमपेक्षत इति परिणाम इति भावः । अयं चात्र रूपकाद्विशेषः । रूपके प्रकृतं अप्रकृतरूपापन्नं भवति । परिणामे तु अप्रकृतं कार्यानुरोधेन प्रकृतरूपापन्नं भवतीति । अत्रैव उदाहरणान्तरमाह—**तीर्त्वेति** । लक्ष्ये लक्षणं योजयति—**अत्रेति** । **सौमित्रिमैत्रीमयमिति** । सौमित्रिमैत्रीरूपमित्यर्थात् सौमित्रिमैत्रीरूपतया परिणतस्यैवातरस्य उपकृतवानिति उपकृतशब्दोक्तप्रकृतक्रियाहेतुत्वमिति परिणाम इत्यर्थः ॥ इदं सामानाधिकरण्येन परिणामे उदाहरणम् । वैयधिकरण्येनाप्यसौ सम्भवति । यथा—'अथ पक्तिमतामुपेयिवद्भिः सरसैर्वक्रपथाश्रितैर्वचोभिः । क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरङ्गमाद्यैः ॥' अत्र, राजसङ्घटने उपायनमपेक्षितम् । तच्चोपायनं अत्र वचोरूपमिति वचोभिरिति तृतीयया तादात्म्यार्थिकया अवगतम् । ततश्चात्रारोप्यमाणस्य वचसः उपायनात्मतापत्त्या राजसङ्घटनरूपकार्योपयोगित्वमिति परिणामः । विषयविषयिणोर्भिन्नविभक्तिकत्वाच्च वैयधिकरण्यमिति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां परिणामप्रकरणम् ॥ ६ ॥

अथोल्लेखं लक्षयति—**बहुभिरिति** । बहुभिर्ग्रहीतृभिः बहुरूपतया एकस्य न-

---

दीनां मते परिणामः रूपकभेदएव । न भिन्न इति राद्धान्तः । तत्प्रपञ्चस्तु, काव्यप्रकाशे तट्टीकासु च द्रष्टव्यः । १. काव्यप्रकाशे '**प्रस्तुतस्य यदन्यत्वम्**' इति अतिशयोक्तिभेदलक्षणनिरूपणावसरे 'यच्च तदेवान्यत्वेनाध्यवसीयते सा अपरा-

यत्र नानाविधधर्मयोग्येकमेव वस्तु तत्तद्धर्मयोगरूपनिमित्तभेदादनेकेन ग्रहीत्रा अनेकधोल्लिख्यते तत्रोल्लेखालङ्कारः । अनेकधोल्लेखने रुच्यर्थित्व! भयादिकं यथार्हं प्रयोजकं । रुचिरभिरतिः । अर्थित्वं लिप्सा । स्त्रीभिरित्याद्युदाहरणं । अत्रैक एव राजा सौन्दर्यवितरणपराक्रमशाली स्त्रीभिरर्थिभिः प्रत्यर्थिभिश्च रूच्यर्थित्वभयैः कामकल्पतरुकालरूपो दृष्टः ॥

यथा वा —

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ।
यथास्थितश्च बालाभिः दृष्टश्शौरिस्सकौतुकम् ॥

---

स्तुनः उल्लेखादनुसन्धानादुल्लेखालङ्कार इत्यर्थः । श्लोकं व्याचष्टे—**यत्रेति** । नानाविधधर्मशालिनि एकस्मिन् वस्तुनि ग्रहीतॄणां बहूनां बहुरूपतया ग्रहणमुल्लेख इत्यर्थः । 'धावन्त्यब्जधिया भृङ्गाश्चकोराः शशिबुद्धितः । सखि! त्वद्वदनं वीक्ष्य स्मेरं मधुरताभृतम् ।' इत्यादौ एकस्मिन्नानने स्मितचन्द्रिकाधरमाधुर्यादिनानाधर्मशालिनि बहूनां चकोरादीनामनेकधा चन्द्रत्वकमलत्वादिना ग्रहणमस्तीति तत्रातिव्याप्तिरिति न शङ्कनीयम् । तस्य शुद्धोल्लेखत्वाभावेऽपि भ्रान्तिसङ्कीर्णतया लक्ष्यत्वात् । अनेकेषु मुखचन्द्रादिषु बहूनां मधुपादीनां कमलत्वादिभ्रान्तिसमुदायेऽतिव्याप्तिः । अत **एकं वस्त्विति** । एकधर्मिकनानाग्रहीतृकैकधाभ्रान्तावतिव्याप्तिवारणाय **अनेकधेति** । अनेकप्रकारोल्लेखनं निर्निमित्तं न सम्भवतीति तत्र निमित्तं रुच्यादिकम् । रुचिस्सार्वकालिकीच्छा । सैवाभिरतिशब्देनापि व्यपदिश्यते । अर्थित्वं तात्कालिकीच्छा । सैव लिप्साशब्देनोच्यते । भयादिकमित्यादिपदेन व्युत्पत्त्यादिकं गृह्यते । उदाहरणं व्याचष्टे—**स्त्रीभिरित्यादीति** । एकस्य राज्ञो नानारूपत्वग्रहणोपयोगिनानाविधधर्मवत्त्वं प्रदर्शयति—**सौन्दर्येति** । सौन्दर्यशालितया तदभिलाषिणीभिः स्त्रीभिः कामत्वेन, वितरणशालितया कादाचित्कार्थापेक्षावद्भिः अर्थिभिः स्वर्द्रुमत्वेन, पराक्रमशालितया भयशालिभिः प्रत्यर्थिभिः कालरूपत्वेन, गृहीतो वर्णितः । अतोऽसावुल्लेख इति भावः । अत्रैवोदाहरणान्तरमाह—**गजत्राते-**

---

तिशयोक्तिः ।' इति भेदकातिशयोक्तिर्निरूपिता । उद्योतकारस्तु ' प्रस्तुतस्य यदन्यत्वम्' इत्यस्य ' प्रस्तुतस्य अन्यवस्तुत्वेनाध्यवसायः इत्यप्यर्थः ' इति अर्थान्तरं परिकल्प्य, ' स्त्रीभिः कामः ' ' गुरुर्वचसि ' इत्यादीन्लक्ष्यत्वेन निरूप्य ' एतेन ईदृशेषु विषयेषु उल्लेखालङ्कारोऽयमतिरिक्त इति केषाञ्चिदुक्तिः परास्ता । ' इत्यन्तेनातिशयोक्तावुल्लेखस्यान्तर्भावः प्रकाशकृदभिप्रेत इति व्याचख्यौ । सुधासागरकारेण भीमसेनार्येणाप्येवमेव व्याख्यातम् । ' गजत्रातेति वृद्धाभिः ' ' अकृशं कुचयोः ' इत्यादिस्थले तु अध्यवसानाभावान्नायमलङ्कारः न चापि तत्र कोऽप्यलङ्कारः इति च ' अलङ्काराभावः उद्योते निरूपितः ॥

अत्र यस्तथाभीतं भक्तं गजं त्वरया त्रायते स्म सोऽयमादिपुरुषोत्तम इति, वृद्धाभिस्संसारभीत्या तदभयार्थिनीभिः कृष्णो मधुरां पुरीं प्रविशन् दृष्टः । यस्तथा चञ्चलत्वेन प्रसिद्धायाः श्रियोऽपि कामोपचारवैदग्ध्येन नित्यवल्लभस्सोऽयं दिव्ययुवेति, युवतिसमूहैस्सोत्कण्ठैर्दृष्टः । बालाभिस्तु, बाह्यरूपवेषालङ्कारदर्शनमात्रलालसाभिः यथावस्थितवेषादियुक्तो दृष्ट इति बहुधोल्लेखः । पूर्वः कामत्वाद्यारोपरूपकसङ्कीर्णः । अयं तु, शुद्ध इति भेदः ॥

---

ति । श्लोकं व्याचष्टे—**अत्र य इति** । **तथाभीतमिति** । बहुवर्षगणमतिकरुणं विलपन्नपि रक्षणासामर्थ्येन स्वजनैः परजनैश्च परित्यक्ततया रक्षकविरहादतिकातरं तथाभीतमित्यर्थः । तथाविधगजत्रातृतया संसाराभयाभिलाषिणीभिर्वृद्धाभिः कृष्णो दृष्टः । श्रीकान्त इति तरुणीभिः अतिचपललक्ष्मीवाल्लभ्येन निरतिशयसौन्दर्यवैदग्ध्यशालितया तदुत्कण्ठिताभिर्दृष्टः । बालाभिस्तु, उक्ताभिलाषद्वयवैधुर्यात् यथावस्थितवेषादियुक्तो दृष्ट इत्यत्रानेकधोल्लेखे संसाराभयार्थित्वोत्कण्ठाकृतकुतूहलहेलावलोकनवैयग्र्यादि यथायथं प्रयोजकमिति भावः । उदाहरणयोर्भेदमाह—**पूर्व इति** । पूर्वोदाहरणे कामत्वस्वर्द्रुमत्वादेर्वर्णनीये राज्ञि वस्तुतोऽभावेन तदारोपादुल्लेखस्य रूपकस्य च एकवाचकानुप्रवेशाख्यसङ्करशालितया रूपकसङ्कीर्णः । 'गजत्राते'त्यत्र तु, गजत्रातृत्वश्रीकान्तत्वयथावस्थितवेषशालित्वानां वस्तुतो भगवति सद्भावाद्रूपकासम्भवेन शुद्ध उल्लेख इति उदाहरणयोर्भेद इति भावः । अत्रेदं विचारणीयम् । नानाग्रहीतृकैकधर्मिकनानारूपग्रहणमुल्लेख इति उल्लेखस्वरूपं फलितम् । न चात्र रूपकादिसङ्कीर्णता सम्भवति । रूपकं हि वर्णनाविषयीभूतविषयविषय्यभेदात्मकम् । न च 'स्त्रीभिः काम' इत्युदाहरणे वर्णनीये राज्ञि कामाभेदः प्रतिपाद्यते । तद्बोधकविषयविषयिवाचकपदसामानाधिकरण्याभावात् कामपदोपस्थाप्यस्यार्थस्य 'दृष्ट' इति द्रष्ट्रुपसर्जनत्वेन वर्णनीयान्वयाभावात् । 'स काम ऐक्षी'ति हि वाक्यात् कामाभेददृष्टिविषयता तच्छब्दवाच्ये प्रतीयते । न चाभेदस्याशब्दार्थस्य विषयतया दर्शनानन्वय इति वाच्यम् । तस्य स्वरूपात्मकत्वे प्रातिपदिकार्थानतिरिक्ततया 'प्रातिपदिकार्थे प्रथमा' इत्यनुशासनबलात् प्रथमया प्रातिपदिकेन च प्रतिपादनात्, तस्यातिरिक्तत्वे प्रथमाविभक्तेस्तल्लक्षकत्वात् । यद्वा । प्रकारिता प्रथमार्थः । तस्यां च प्रातिपदिकार्थस्य स्वनिष्ठप्रकारतानिरूपितत्वं संसर्गः । तथा च कामनिष्ठप्रकारतानिरूपितप्रकारिताश्रयदर्शनविषयः स इति वाक्यार्थबोधपर्यवसानात्, न प्रस्तुते धर्मिणि कामादेरभेदसंसर्गेणान्वय इति कुतोऽत्र रूपकम् । येन तत्सङ्करः स्यादुल्लेखस्य । अत एव भ्रान्तिमदलङ्कारसङ्करोऽपि परास्तः । अनाहार्यनिश्चयरूपारोपस्यैव वर्ण्यमानस्य भ्रान्तिमदलङ्कारत्वसम्प्रतिपत्तेः । न च 'धावन्त्यब्जधिया भृङ्गा' इति प्रागुदाहृते उदाह-

**एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ।**
**गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मश्शरासने ॥**

ग्रहीतृभेदाभावेऽपि विषयभेदाद्बहुधोल्लेखेऽप्यसावुल्लेखः । उदाहरणं श्लेषसङ्कीर्णं । वचोविषये महान् पटुरित्यादिवत् बृहस्पतिरित्याद्यर्थान्तरस्यापि क्रोडीकरणात् ।

शुद्धो यथा—

अकृशं कुचयोः कृशं विलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे ।
अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालिभागधेयं ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे उल्लेखप्रकरणम् ॥ ७ ॥

---

रणे धावनक्रियापर्यन्तस्यानाहार्यारोपस्यैव निबन्धनादनाहार्यारोपरूपभ्रान्तिमदलङ्कारसङ्करस्सम्भवतीति वाच्यम् । तस्य भ्रान्तिमदलङ्कारत्वेनोल्लेखत्वासम्प्रतिपत्तेः । न चेदृशस्थले भ्रान्तिमदलङ्कारसङ्करो लक्षणद्वयसमावेशादिति वाच्यम् । 'कपाले मार्जारः पय इति करान् लेढि शशिनः तरुच्छिद्रप्रोतान् बिसमिति करीन्द्रः कलयति । रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥' इत्युदाहरणे शुद्धभ्रान्तिमदलङ्कारस्यैव सर्वैरपि ग्रन्थकारैरुदाहृतत्वात् भ्रान्तिमदलङ्कारस्यात्रोल्लेखसङ्करायोगात् । अतः ' स्त्रीभिः काम' इत्यत्र ग्रहीतृभेदनिबन्धनैकधर्मिकानेकधाग्रहणात्मकोल्लेखश्चारुतावहत्वादलङ्कार एव । तच्च ग्रहणं क्वचिदाहार्यारोपरूपं क्वचिदनारोपरूपमित्येव तस्य द्वैविध्यम् । अनाहार्यतथाविधग्रहणवर्णने तु भ्रान्तिमानेवेति युक्तं प्रतीमः ॥ अस्यैव भेदान्तरमाह—**एकेनेति** ॥ ग्रहीतृभेदाभावेऽप्यत्र एकधर्मिकानेकधाग्रहणवर्णनेन विच्छित्तिविशेषसद्भावादस्य तद्भेदता । न चैकस्यैकेन ग्रहीत्रा परस्परविरुद्धानेकरूपग्रहणे विच्छित्तिविशेषाभावः । विषयैक्ये तथात्वेऽपि विषयभेदे तत्सम्भवात् । 'गुरुर्वचसि पृथुरुरसि विशालो मनसी'त्यादौ प्रकृते च तथैवानुभवादिति भावः । **उदाहरणमिति**—गुरुशब्दश्लेषमहिम्ना वचोविषये महानित्यर्थस्यैव बृहस्पत्याद्यभेदस्य प्रतीतेः । न च तर्हि श्लेष एवेति युक्तम् । अनेकधाग्रहणकृतविच्छित्तिविशेषसद्भावेन तयोस्सङ्करोपपत्तेरिति भावः । शुद्धमुदाहरति—**अकृशमिति** ॥ अत्र श्लेषसाभावात् शुद्ध इत्यर्थः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां उल्लेखप्रकरणम् ॥७॥

---

१. अयं द्वितीयः उल्लेखभेदः चन्द्रालोके न दृश्यते । किं तु मूलकृदुक्त एव ।
२. इदं भासकवेः पद्यमिति शार्ङ्गधरपद्धतौ स्पष्टम् ॥ ३. विप्लवयतीति पाठान्तरम् ।

अथ स्मृतिमद्भ्रान्तिमत्ससन्देहाः—

**स्यात् स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयम् ।**

**पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥**

**अयं प्रमत्तो मधुपस्त्वन्मुखं वेत्ति पङ्कजम्।**

**पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥**

स्मृतिभ्रान्तिसन्देहैः सादृश्यान्निबध्यमानैः स्मृतिमान् भ्रान्तिमान् सस-

---

ग्रहणप्रसङ्गात् ग्रहणविशेषरूपस्मरणाद्यलङ्कारान् लक्षयति—**स्यादिति** । स्मृतिभ्रान्तिसन्देहैः शब्दतः प्रतीयमानैरित्यर्थः । श्लोकं व्याचष्टे—**स्मृतीति** । सादृश्यादिति पञ्चमी हेतौ । ततः निबध्यमानत्वे सति सादृश्यहेतुकस्मृतिभ्रान्तिसन्देहत्वं तत्तदलङ्कारत्वमिति फलितम् । अत्र सादृश्यहेतुकत्वानुक्तौ चिन्तामूलकस्मृतेरगर्भादिमूलकभ्रान्तेस्तादृशसन्देहस्याप्यलङ्कारत्वापत्तिः । 'स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् । ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥' 'दामोदरकराघातचूर्णिताशेषवक्षसा । दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्थलम् ॥' 'चेलाञ्चलं न्यस्य कुचाञ्चले मामालोकयन्ती नयनाञ्चलेन । इतो गता सा क्व गता न जाने गेहं गता वा हृदयं गता वा ॥' 'सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ।' इत्यादौ चिन्तार्तिवितर्कादिमूलकानां स्मृतिभ्रान्तिसन्देहानां निबन्धनेऽपि तत्कृतविच्छित्तिविशेषाभावादत एव एतेषां सादृश्यमूलालङ्कारप्रस्तावे निरूपणमित्युदाहृतानां स्मृत्यादीनामलक्ष्यत्वमिति तद्वारणार्थं विशेषणोपादानं लक्षणे युक्तमेवेति भावः । अत्र स्मृतौ सादृश्यहेतुकत्वं सदृशदर्शनोद्बुद्धसंस्कारप्रयोज्यत्वम् । तच्च बुद्धसंस्कारजन्ये स्मरणे तादृशस्मरणोद्बुद्धसंस्कारजन्यस्मरणे च साधारणम् । तेन वक्ष्यमाणोदाहरणद्वयसाधारण्यम् । वस्तुतस्तु, सदृशदर्शनोद्बुद्धसंस्कारजन्यत्वमेव लाघवाद्युक्तम् । वक्ष्यमाणद्वितीयोदाहरणे जलादुत्तरन्त्या नायिकाया दर्शनेन तत्सदृशलक्ष्मीस्मृतिं व्यङ्ग्यामादायैव स्मरणालङ्कारोपपत्त्या लक्ष्मीस्मरणोद्बुद्धसंस्कारजन्यजलनिधिमन्थनस्मरणस्यानलङ्कारत्वेऽपि क्षतिविरहात् । भ्रान्तिश्च विपर्ययरूपा विवक्षिता । तेन ससन्देहे नातिव्याप्तिः। न वा, 'अत्र मन्मथमिवातिसुन्दरं[1] दानवारिमिव दिव्यतेजसम् । शैलराजमिव धैर्यशालिनं वेद्मि वेङ्कटपतिं महीपतिम्' ॥ इत्यत्रातिव्याप्तिः । अत्र प्रकृतवस्तुगोचरयथार्थनिश्चयस्यैव वर्णनात् । यत्तु, रूपके अतिव्याप्तिवारणाय अनाहार्यत्वमप्यारोपविशेषणमिति वदन्ति प्राञ्चः । तदयुक्तम् । निबध्यमानभ्रान्तित्वरूपतल्लक्षणस्यानुभूयमानाभेदात्मके रूपके उक्तिसम्भवाभावात् । यदि तु रूपकपदं तद्बुद्धिपरं, ततश्च रूपकबुद्धौ भ्रान्तित्वम-

---

१. शम्बरारिमिव चातिसुन्दरम् ' इति - ग - पाठः ॥

न्देह इति स्मृत्यादिपदाङ्कितमलङ्कारत्रयं भवति । तच्च क्रमेणोदाहृतम् ।
यथा वा—

दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥

पूर्वत्र स्मृतिमदुदाहरणे सदृशस्यैव स्मृतिः । अत्र सदृशलक्ष्मीस्मृतिपूर्वकं तत्सम्बन्धिनो जलनिधिमन्थनस्यापि स्मृतिरिति भेदः ।

पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ।

---

त्वादतिव्याप्तिरिति तथाप्ययुक्तमेव । निबध्यमानभ्रान्तितत्वस्यैव भ्रान्त्यलङ्कारलक्षणतया तत्र भ्रान्तिनिबन्धनविरहेणातिव्याप्तिविरहात्। कविसम्मतसादृश्यहेतुकसन्देहत्वं न यथाश्रुतं ससन्देहलक्षणं युक्तम्। सम्भावनारूपायामुत्प्रेक्षायामतिव्याप्तेः । न च सम्भावनान्यतादृशसन्देहत्वमिति विवक्षितम् । 'अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभिः दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः । स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥' इत्यत्राव्याप्तिप्रसङ्गात् । न च अनाहार्यसन्देहस्यैव ससन्देहलक्षणतया नोक्तदोष इति वाच्यम्। अत्रापि चकितत्वादिकार्यनिबन्धनानुरोधेन नैल्यौन्नत्यादिकृताद्रिशृङ्गसम्भावनस्यानाहार्यतया उक्तदोषानिस्तारात् । तथापि कविसम्मतसादृश्यहेतुकाहार्यसम्भावनान्यसन्देहत्वस्यैव ससन्देहलक्षणत्वं विवक्षितम्। आहार्यत्वविशिष्टसम्भावनाभेदात्मकत्वं विशिष्टाभावरूपम् । तच्च सम्भावनात्वसत्त्वेऽपि आहार्यत्वरूपविशेषणविरहात् 'अद्रेः शृङ्ग' मित्यादौ आहार्यत्वसत्त्वेऽपि सम्भावनात्वविरहात् 'जीवनग्रहणे नम्रा' इति वक्ष्यमाणकविकल्पितससन्देहालङ्कारे चानुगतमिति न क्वाप्यव्याप्तिरतिव्याप्तिर्वेति स्मृत्यादिलक्षणत्रयं सुस्थम् ॥ **तच्चेति**। स्मृतिमदादीत्यर्थः ।'पङ्कजं पश्यत' इति स्मृत्यलङ्कारस्योदाहरणं। तत्र 'गाहत' इत्यनेन लक्षणया स्मृतिप्रतिपादनात्तस्यास्सदृशपङ्कजदर्शनोद्बुद्धसंस्कारजन्यतया लक्षणानुगतिः।'अयं प्रमत्तो मधुप' इति भ्रान्तिमदलङ्कारः ।'प्रमत्तमधुप' इत्युक्त्या मधुपारवश्यान्मुखे पङ्कजभ्रान्तेरत्र प्रतीतेः। अत एव तस्या अनाहार्यत्वमपि ।'पङ्कजं वा सुधांशुर्वे'ति ससन्देहः । वाकारेण परस्परविरुद्धतया प्रतीयमानकोटिद्वयपरामर्शात्सन्देहप्रतीतेः । 'अस्माकं तु न निर्णय' इत्यनिर्णयोक्तेः शुद्धोऽयं सन्देह इति भावः । तेषामेवोदाहरणान्तराण्याह—**दिव्यानामिति**। पूर्वस्मादत्र विशेषमाह—**पूर्वेति**। पूर्वोदाहरणे सदृशकर्मिका स्मृतिः । अत्र नायिकादर्शनोद्बुद्धसंस्कारजन्यलक्ष्मीस्मृतिपूर्वकं तत्सम्बन्धिनो जलनिधिमन्थनस्यापि स्मृतिरित्यर्थः । लक्ष्मीस्मृतेरनिबन्धनेऽपि तां विना जलनिधिमन्थनस्मृतेरसम्भवेन तेन तस्या गम्यतया स्मृतिमदलङ्कारोपपत्तिः । **पलाशकुसुमेति**। अत्र शुकतुण्डपतनालिजिघृक्षारूपकार्यनिबन्धनं भ्रान्त्योरनाहार्यत्वसूचना-

सोऽपि जम्बूफलभ्रान्त्या तमलिं हर्तुमिच्छति ॥

अत्रान्योऽन्यविषयभ्रान्तिनिबन्धनः पूर्वोदाहरणाद्विशेषः ।

जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः ।
किं कनिष्ठाः किमु ज्येष्ठाः घटीयन्त्रस्य दुर्जनाः ॥

पूर्वोदाहृतसन्देहः प्रसिद्धकोटिकः । अयं तु कल्पितकोटिक इति भेदः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे स्मृतिमद्भ्रान्तिमत्ससन्देहप्रकरणानि॥८।९।१०॥

---

-र्थमिति द्रष्टव्यम् । इह परस्परविषयकभ्रान्तिनिबन्धनेन विच्छित्तिविशेषसद्भावात् पूर्ववैल-क्षण्यमित्याह—**अत्रेति** । 'जीवनग्रहणे' इत्यत्र मूलोदाहरणाद्विशेषमाह—**पूर्वोदाहृतेति** । पङ्कजत्वसुधांशुत्वकोटिर्हि लोकप्रसिद्धा । घटीयन्त्रज्येष्ठत्वकनिष्ठत्वयोः कविक-ल्पिततया तत्सन्देहस्याप्रसिद्धकोटिकतया संशयस्य स्वतःसम्भविकोटिकत्वकविकल्पितको-टिकत्वकृतमपि द्वैविध्यमस्तीत्यभिप्रायः । एते च ध्वन्यमाना अपि सम्भवन्ति । यथा—सौमित्रे! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते चण्डांशोर्निशि का कथा रघुपते! चन्द्रोऽयमुन्मीलति । वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः क्वासि प्रेयसि! हा कुरङ्गनयने! चन्द्रानने! जानकि! ॥ अत्र 'धत्ते कुरङ्गं यत' इति चन्द्रत्वव्याप्यकुरङ्गवत्त्वेन चन्द्रत्वावगतेरनुमानालङ्कारविधया निबन्धनात्कुरङ्गचन्द्रयोर्लिङ्गलैङ्गिकयोर्ज्ञानात्त-त्सम्बन्धिकुरङ्गनयनस्मृतिपूर्वकसीतानयनस्मृतेश्चन्द्रसदृशसीतामुखस्मृतेश्च ध्वनिः । अथैव प्र-थमपादे सौमित्रिं प्रति चण्डांशूदयनिबन्धनतापोपशमोपायतरुतलसमाश्रयणनियोजनप्रती-तेः चन्द्रे लौहित्यतापकरत्वादिना सादृश्याच्चण्डांशुताभ्रान्तिरनाहार्या व्यज्यत इति भ्रा-न्तिमदलङ्कारध्वनिः । अनयोश्चाङ्गाङ्गिभावसङ्करः । ततः सीतालम्बनश्चन्द्रोदयोद्दीपितस्ता-पादिनानुभावितः स्मृत्यादिना पोषितश्च विप्रलम्भरसो ध्वन्यत इति विप्रलम्भध्वनिरिति । 'कस्तूरिकातिलकमालि[1] विधाय सायं स्मेरानना सपदि शीलय सौधमौलिम् । प्रौढिं भजन्तु कुमुदानि मुदामुदारमुल्लासयन्तु परितो हरितो मुखानि ॥' इति पण्डितरायपद्ये कस्तूरिकातिलकपरिष्कृतसौधाधिरूढनायिकावदने चन्द्रभ्रान्त्या चन्द्रोदयकालिककुमुदवि-कासहरिदङ्गनामुखोल्लासादिसम्भववर्णनेन चन्द्रभ्रान्तेरनाहार्याया ध्वनिः । 'कापिशायनसु-गन्धि विघूर्णन्नुन्मदोऽधिशयितुं समशेत । फुल्लदृष्टि वदनं दयितानामब्जचारु चषकं च षडंघ्रिः ॥' इत्यत्र अनयोः किमाधिशेतव्यमिति वाच्यसंशयेन किं मुखं किं चषकमिति संशयस्य गम्यमानतया संशयालङ्कारध्वनिरिति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां स्मृतिमद्भ्रान्तिमत्ससन्देहप्रकरणानि॥८।९।१०॥

---

१. 'तिलकमाशु' इति पाठान्तरम् ।

अथ अपह्नुतिः—

**शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ।**
**नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥**

वर्णनीये वस्तुनि तत्सदृशधर्मारोपफलकस्तदीयधर्मनिह्नवः कविमतिविकासोत्प्रेक्षितधर्मान्तरस्यापि वा निह्नवः शुद्धापह्नुतिः । यथा चन्द्रे वियन्नदीपुण्डरीकत्वारोपफलकस्तदीयधर्मस्य चन्द्रत्वस्यापह्नवः ।

यथा वा—

अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कति चिच्च सञ्जगदिरे भूच्छायमैच्छन्परे ।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥

---

अपह्नुतिं निरूपयति — **शुद्धेति** ।अन्यस्य विषय्यसाधारणधर्मस्यारोपार्थो धर्मनिह्नवः विषयतावच्छेदकधर्मस्य तदन्यस्य विषयगतोत्प्रेक्षिकधर्मस्य वा निषेधः नञादिना छलादिशब्देन वा यत्र वर्ण्यते तत्रासौ शुद्धापह्नव इत्यर्थः । श्लोकं व्याचष्टे—**वर्णनीये इति। तत्सदृशेति** । वर्णनीयवस्तुसदृशस्य यो धर्मस्तदारोपफलक इत्यर्थः । ततश्च सादृश्यहेतुकविषय्यारोपफलकविषयतावच्छेदकधर्मनिषेधोऽपह्नव इति फलितम् । अत्र विषयतावच्छेदकधर्मनिषेधमात्रोपादाने 'नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ।' इत्याक्षेपे 'नाहं दूती'ति दूतीत्वनिषेधसद्भावेन तत्रातिव्याप्तिः। अतो विषय्यारोपफलक इति । तत्र निषेधस्यारोपफलकत्वाभावात् । अन्यारोपफलकवर्णनमात्रोक्तौ 'मुखं चन्द्रः' इति रूपकेऽतिव्याप्तिः। अतो विशेष्योपादानम् । 'न पञ्चविशिखः कामः किन्त्वसंख्यशिलीमुखः।' इत्यतिशयोक्तौ विषयतावच्छेदकपञ्चशिलीमुखत्वनिषेधस्य असंख्यशिलीमुखत्वारोपफलकतया तत्रातिव्याप्तिः। अतस्सादृश्यहेतुकेत्यारोपविशेषणम् । न च पर्यस्तापह्नुतौ 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्।' इत्यत्र प्रेयसीमुखे सुधांशुत्वारोपफलकविषयतावच्छेदकप्रेयसीमुखत्वनिषेधाभावादव्याप्तिरिति शङ्क्यम् । अस्य शुद्धापह्नवलक्षणत्वेन पर्यस्तापह्नवादीनामलक्ष्यत्वात् । अत एव शुद्धापह्नव इत्येव लक्ष्यनिर्देशं कृतवान्ग्रन्थकारः । श्लोकं व्याचष्टे—**यथा चन्द्रे इति** । निगदव्याख्यातमेतत् । स्वयमुदाहरणान्तरमाह—**अंकमिति।** नन्वत्र कलङ्कत्वादिनिषेधस्य नञादिभिरप्रतीतेः जलनिधिपङ्कत्वादीनां विषयतावच्छेदकधर्मत्वाभावाच्च कथमत्र लक्षणसङ्गतिरित्याशङ्क्य, लक्षणमुपपादयन् पूर्वस्माद्वैलक्षण्यमाह—

---

१. चन्द्रालोके तु '**अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः**।' इति पाठः।

अत्रौत्प्रेक्षिकधर्माणामप्यपह्नवः परपक्षत्वोपन्यासादर्थसिद्धः ॥

**स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः ।**
**नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः ॥**

अत्र चन्द्र एव तीव्रत्वनैशत्वयुक्तिभ्यां चन्द्रत्वसूर्यत्वापह्नवो बडवानलत्वारोपार्थः ।

यथा वा—

मन्थानभूमिधरमूलशिलासहस्रसङ्घट्टनव्रणकिणः स्फुरतीन्दुमध्ये ।
छायामृगश्शशक इत्यतिपामरोक्तिस्तेषां कथंचिदपि तत्र हि न प्रसक्तिः ॥

अत्र चन्द्रमध्ये मन्थनकालिकमन्दराशिलासङ्घट्टनव्रणकिणस्यैव छायादीनां सम्भवो नास्तीति छायात्वाद्यपह्नवः पामरवचनत्वोपन्यासेनाविष्कृतः ॥

**अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः ।**
**नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखं ॥**

---

**अत्रेति** । केऽपीत्यादिना परपक्षत्वोपन्यासेन कलङ्कस्य स्वतस्सम्भविनो जलनिधिपङ्कादेश्च कविप्रतिभाकल्पितस्य द्विविधस्याप्यपह्नवोऽर्थसिद्ध इति नोक्तदोष इत्यर्थः ॥ अस्यैव भेदान्तरमाह — **स एवेति** । स्पष्टं । नेन्दुरित्युदाहरणं व्याचष्टे— **अत्रेति**। उदाहरणान्तरमाह — **मन्थानेति** । अत्र लक्षणमुपपादयति — **अत्रेति** । नन्वत्र छायादिनिषेधो न शब्दतः प्रतीयत इत्याशङ्क्याह — **छायात्वादीति** ॥ पर्यस्तापह्नुतिं लक्षयति — **अन्यत्रेति** । श्लोकं व्याचक्षाणो लक्षणमुपपादयति— **स इति** ।

---

१. चन्द्रालोके '**पर्यस्तापह्नुतिर्यत्र धर्ममात्रं निषिध्यते** ।' इति पाठः । इदमत्राकलनीयम् । रसगङ्गाधरकारः 'नायमपह्नुतेर्भेदो वक्तुं युक्तः, अपह्नुतिसामान्यलक्षणानाक्रांतत्वात् ।' इत्यादिना काव्यप्रकाशाद्युक्तापह्नुतिलक्षणानाक्रांतत्वमुपपादयन् 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ।' इत्यत्र दृढारोपं रूपकमेव भवितुमर्हति, नापह्नुतिः । उपमेयतोपमानतावच्छेदकयोः निष्प्रत्यूहं भानात् । तदुक्तं विमर्शिन्याम्—"न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते ।' अत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाणत्वात् दृढारोपं रूपकमेव, नापह्नुतिः ।' इत्याचष्ट । मर्मप्रकाशकारो नागोजिभट्टस्तु 'इदं चिंत्यम् । 'नेदं मुखं चंद्रः' इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखनिषेधकस्य चंद्रारोपदार्ढ्यसम्पादकत्वस्य वक्तुं शक्यत्वेनानुभवसिद्धत्वेन च अपह्नुतिमात्रस्योच्छेदापत्तेः । यदि तु निषेधपूर्वकारोपे चमत्कृतिविशेषस्यानुभवसिद्धत्वादलङ्कारान्तरत्वं, तर्हि प्रकृतेऽपि तुल्यम् ।' इति व्याचख्यौ । एवं च पर्यस्तापह्नुतिस्थले दृढारोप

यत्र क्वचिद्वस्तुनि तदीयधर्मनिह्नवः अन्यत्र वर्णनीये वस्तुनि तस्य धर्मस्यारोपार्थः पर्यस्तापह्नुतिः । यथा चन्द्रे चन्द्रत्वनिह्नवो वर्णनीये मुखे तदारोपार्थः ।

यथा वा—

हालाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्वते ।
निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः ॥

पूर्वोदाहरणे हेतूक्तिर्नास्ति । अत्र तु सास्तीति विशेषः । ततश्च पूर्वापह्नुतिवदत्रापि द्वैविध्यमपि द्रष्टव्यम् ॥

**भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे ।**
**तापं करोति सोत्कम्पं ज्वरः किं न सखि ? स्मरः ॥**

अत्र 'तापं करोती'ति स्मरवृत्तान्ते कथिते तस्य ज्वरसाधारण्यादृजुबुद्ध्या सख्या 'ज्वरः कि'मिति पृष्टे 'न सखि ? स्मर' इति तत्त्वोक्त्या भ्रान्तिवारणं कृतम् ।

यथा वा—

नागरिक ? समधिकोन्नतिरिह महिषः कोऽयमुभयतःपुच्छः ।

---

मूलगततच्छब्द इत्यर्थः । इतः प्रभृति द्रष्टव्यमित्यन्तं निगदेनैव विशदम् । अत्रेदमवधेयम् । न पर्यस्तापह्नुतिः परिसंख्यातोऽतिरिच्यते । 'किं भूषणं सुदृढमत्र यशो न रत्नम्' इति प्रसिद्धतदुदाहरणे रत्ने भूषणत्वनिषेधस्य वर्णनीययशसि भूषणत्वारोपार्थतया पर्यस्तापह्नुतिलक्षणस्यावैकल्यात् । न च पर्यस्तापह्नुत्या परिसंख्याया एव गतार्थतेति वाच्यम् । तस्या उत्तरत्र पार्थक्येन वक्ष्यमाणत्वात् । अत एव प्राचीनाः न पर्यस्तापह्नुतिमुदाजह्रुरिति ॥ भ्रान्तापह्नुतिं लक्षयति — **भ्रान्तापह्नुतिरिति** । अन्यस्य वस्तुनः शङ्कायां भ्रान्तौ सत्यामिति शेषः । अन्यशङ्कापरिपन्थिवैधर्म्योक्त्या तस्याः भ्रान्तेर्वारणं भ्रान्तापह्नुतिः । अत एव भ्रान्तापह्नुतिरिति भ्रान्तस्य भ्रमस्यापह्नुतिः प्रतिषेध इत्यर्थयोगादन्वर्थं नामेति भावः । उदाहरणं व्याकुर्वन् लक्षणं लक्ष्येऽनुगमयति —**अत्रेति** । वैदग्ध्ये हि विरहिण्या नायिकाया अतिपरिचयाद्विरहवेदनामवगच्छन्त्यास्सख्याः स्मरकर्तृकस्ताप इति निर्णयेन 'ज्वरः कि'मिति प्रश्नानुपपत्तेः ऋजुबुद्ध्येत्युक्तम्—**नागरिकेति** । अत्र पूर्वार्द्धे उभयतःपुच्छमहिषत्वभ्रान्तिरुपन्यस्ता । उत्तरार्द्धेन तन्नि-

---

रूपकं परिसंख्येति च मतद्वैविध्यमस्तीति बोध्यम् । अयमपह्नुतिप्रभेदः रत्नाकरकारादीनां मतानुसारेण निरूपित इति ज्ञेयम् ।१. भावे क्तः इति बोध्यम् ।

न हि न हि करिकलभोऽसौ शुण्डादण्डोऽयमस्य न तु पुच्छम् ॥

इदं सम्भवत्भ्रान्तिपूर्विकायां भ्रान्तापह्नुतावुदाहरणम् ।

कल्पितभ्रान्तिपूर्वा यथा—

जटा नेयं वेणीकृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर ! किं मां प्रहरसि ॥

अत्र कल्पितभ्रान्तिर्जटानेयमित्यादिनिषेधमात्रोन्नेया । पूर्ववत् प्रश्नाभावात् । दण्डीत्वत्र तत्वाख्यानोपमेत्युपमाभेदं मेने ।

यदाह—

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्वाख्यानोपमा मता ॥ इति ॥

**छेका[1]पह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे ।**
**प्रजल्पन्मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥**

---

षेध इति स्पष्टो लक्षणानुगमः । विशिष्टगोचरभ्रान्तेः विशेषणविशेष्योभयगोचरतया उत्तरार्द्धे तदुभयभ्रान्तिनिरसनं पूर्वस्माद्विच्छित्तिविशेषशालीत्युदाहरणान्तराभिधानतात्पर्यम् । भ्रान्तेस्स्वतस्सम्भवित्वकविकल्पितत्वाभ्यामस्या द्वैविध्यमभिप्रेत्याह— **इदमिति** । कविकल्पितभ्रान्तिमुदाहरति — **जटा नेयमिति** । नन्वत्र भ्रान्तेरप्रतिपादनात् नेयं भ्रान्तापह्नुतिर्युक्तेत्यत आह — **अत्रेति** । 'जटा नेय'मित्यादिनिषेधानां प्रसक्तिपूर्वकत्वादुपनिबद्धैर्निषेधैर्जटादिप्रसक्तेरुन्नयनात् युक्तैव भ्रान्तापह्नुतिरित्यर्थः ॥ इमामुपमाभेदतयोपमान्तर्भूतां दण्डी प्रत्यपादयदित्याह — **दण्डीत्त्विति** । तदीयकारिकोदाहरणेनोपमाभेदतां स्पष्टयति — **न पद्ममिति** । अत्र पद्मत्वनिषेधाक्षीतपद्मत्वप्रसक्तिप्रयोजकपद्मसादृश्यसद्भावात् मुखमेवेति तत्वकथनाच्च तत्वाख्यानोपमेति तदभिप्रायः ॥ छेकापह्नुतिं लक्षयति — **छेकेति** । **तथ्यनिह्नवे इति** । यथार्थस्य निषेधे सतीत्यर्थः ।

---

१ इदमत्रावधेयम् । व्याजोक्तिं नाम अलङ्कारं पृथगनङ्गीकुर्वन्तस्तस्याः अपह्नुतावन्तर्भावमाचक्षाणाः उद्भटादयस्तु—सादृश्यव्यक्तये अपह्नववदपह्नवाय सादृश्यमप्यपह्नुत्यलङ्कारं वदन्ति ।यदाहुः—'**सादृश्यव्यक्तये यत्रापह्नवोसावपह्नुतिः । अपह्नवाय सादृश्यं यत्रास्त्येषाप्यपह्नुतिः** ॥' इति । ये तु 'उद्भिन्नवस्तुनिगूहनं व्याजोक्ति'रिति व्याजो-

कस्य चित् कञ्चित् प्रति रहस्योक्तावन्येन श्रुतायां स्वोक्तेस्तात्पर्यान्तरवर्णनेन तथ्यनिह्नवे छेकापह्नुतिः । यथा नायिकया नर्मसखीं प्रति 'प्रजल्पन्मत्पदे लग्न' इति स्वनायकवृत्तान्ते निवेद्यमाने तदाकर्ण्य 'कान्तः कि'मिति शङ्कितवतीं अन्यां प्रति न हि नूपुर इति निह्नवः ।

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किं मिलितो न हि न हि सखि ! हैमनः पवनः ॥

इदमर्थयोजनया तथ्यनिह्नवे उदाहरणम् ।

शब्दयोजनया यथा—

पद्मे! त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले
नीले? मुह्यति किं करोमि महि! तैः क्रीतोऽस्मि ते विभ्रमैः ।
इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया
कृष्णस्तत्परमेव तद्व्यपदिशन् क्रीडाविटः पातु वः ॥

---

**स्वोक्तेरिति** ।। स्वोक्तेराभिप्रायिकार्थप्रश्नपूर्वकं लज्जाभयादितोऽर्थान्तरपरत्वपरिकल्पनेनाभिप्रेतार्थनिह्नवे सति छेकापह्नुतिः ! अत एव छेकाः विदग्धाः तत्प्रियापह्नुतिरिति छेकापह्नुतिपदमन्वर्थमिति भावः । **अर्थयोजनयेति** । अनभिप्रेतार्थान्तरकल्पनेनेत्यर्थः । **शब्दयोजनयेति** । अविवक्षितार्थपरशब्दान्तरघटनयेत्यर्थः । तात्त्विकार्थनिह्नव इत्यर्थः। तथा च नानार्थस्य शब्दस्य स्वाभिप्रेतार्थबोधनाय प्रयुक्तस्य भयादिना विवक्षितार्थान्तरशब्दनिह्नवपूर्वं कल्पनेन वास्तवार्थनिह्नवो यथेत्यर्थः । पद्मे! नीले! महि! इति लक्ष्मीनीलामहीः सम्बोध्य तद्वृत्तान्तवर्णनपूर्वकं तासु कृष्णस्यानुरागं विदितवत्या क्रुद्धया राधया न्यक्कृतो भगवान् प्राक् प्रयुक्तं सम्बोधनतयाऽभिप्रेतं पदद्वयं नयनकुन्तलपदसामानाधिकरण्येन द्विवचनाद्वितीयाविभक्तिसप्तम्यन्ततया 'महि!' इति सम्बोधनपदं च तृतीयान्तमहितपदैकदेशतया योजयन् राधां समाधत्तेति प्रतिपादनाल्लक्षणसङ्गतिर्द्रष्टव्या ।

---

क्त्यलङ्कारं पृथगिच्छन्ति तेषां मते प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्य यत्राविवक्षा तत्र व्याजोक्तिः यत्र तद्विवक्षा तत्रापह्नुतिरिति व्यवस्था । दण्डी तु अपह्नुतेः सादृश्यमूलत्वमनादृत्य किञ्चिदपह्नुत्य कस्य चित् प्रदर्शनमात्रमपह्नुतिरिति लक्षयित्वा उदाजहार । 'अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् । न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामतः इत्यादि ॥' ग्रन्थकारस्तु, छेकापह्नुतौ वचनस्य अन्यथा नयनेनापह्नवः व्याजोक्तौ आकारस्य हेत्वन्तरवर्णनेन गोपनमिति अनयोर्भेदं मूल एव वक्ष्यति ॥ १. हेमन्तशब्दात्तत्रभव इत्यर्थे 'सर्वत्राण्तलोपश्च' इत्यणि तलोपे च हैमनशब्दनिष्पत्तिर्बोध्या ।

सर्वमिदं विषयान्तरयोजने उदाहरणम् ।

विषयैक्येऽप्यवस्थाभेदेन योजने यथा—

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया ।
पतिं बुध्वा सखि? ततः प्रबुद्धास्मीत्यपूरयत् ॥

**कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः ।**
**निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥**

अत्रासत्यत्वाभिधायिना कैतवपदेन नेमे कान्ताकटाक्षाः किं तु स्मरनाराचा इत्यपह्नवः प्रतीयते ॥

यथा वा—

रिक्तेषु वारिकथया विपिनोदरेषु मध्याह्नजृम्भितमहातपतापतप्ताः ।
स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अपह्नुतिप्रकरणम् ॥ ११ ॥

अथ उत्प्रेक्षा—

**सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ।**[1]

---

**सर्वमिति** । उक्तमुदाहरणत्रयमित्यर्थः । **विषयान्तरेति** । स्वानभिप्रेतार्थान्तरपरत्व इत्यर्थः । एतदुपलक्षणमित्यभिप्रेत्य विषयैक्येऽपि छेकापह्नुतिमुदाहरति—**विषयैक्येऽपीति** । वदन्तीति विवक्षितजारवृत्तान्तं पत्यौ सखीभ्रान्त्या निगदितवत्या नायिकया पतिधीजनितभयविह्वलया तद्वृत्तान्तपरवाक्यस्य स्वप्नावस्थागततद्वृत्तान्तपरत्वं सखि! ततः प्रबुद्धास्मीति शेषपूरणेन व्यक्तीकृतम् । अत्र नायिकाविवक्षितजारवृत्तान्तस्य यथार्थभूतजागरावस्थागतत्वनिह्नवोऽर्थसिद्ध इति लक्षणं योजनीयम् ॥ कैतवापह्नुतिं लक्षयति—**कैतवेति** । निह्नुतेरिति षष्ठ्यर्थो विषयविषयिभावः । ततश्चासत्यत्वाभिधायिव्याजादिपदैर्निषेधाभिव्यक्तावित्यर्थः । लक्ष्ये लक्षणमुपपादयति—**अत्रेति** । शेषं स्पष्टम् । मंखुकादयस्तु, शुद्धापह्नुतिमेव नञादिपदप्रयोगे भिन्नवाक्यगतत्वेन छलादिपदप्रयोगे एकवाक्यगतत्वेनेति द्विविधमुदाहरन्तः कैतवापह्नुतिं भेदेन व्याचक्षते । अत्र सर्वास्वप्यपह्नुतिषु निषेधस्यानुगमादपह्नुतित्वं साधारणमित्यपह्नुतिशब्दोऽपि साधारण इति ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अपह्नुतिप्रकरणम् ॥११॥

उत्प्रेक्षां लक्षयति—**सम्भावनेति** । श्लोके वस्तुपदमप्रकृतवस्तुपरम् । तथा

---

१. चन्द्रालोके तु '**उत्प्रेक्षोन्नीयते यत्र हेत्वादिर्निह्नुतिं विना** ।' **त्वन्मुख-**

उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे ॥
धूमस्तोमं तमश्शङ्के कोकीविरहशुष्मणाम् ।
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥
रक्तौ तवांघ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् ।
त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥
मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ।
प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ॥

अन्यधर्मसम्बन्धनिमित्तेन अन्यस्यान्यतादात्म्यसम्भावनमुत्प्रेक्षा । सा

---

च अप्रकृतवस्तुहेतुफलात्मना प्रकृतवस्तुहेतुफलानां सम्भावना उत्कटकोटिकसंशयः उत्प्रेक्षेत्यर्थः। तां विभजते—**उक्तेति**। आस्पदं विषयः। तथा च उक्तविषया अनुक्तविषयेति आद्या द्विविधा। सिद्धासिद्धविषयत्वेन परयोर्हेतुफलोत्प्रेक्षयोः प्रत्येकं द्वैविध्यात् षड्विधोत्प्रेक्षेत्यर्थः। 'धूमस्तोम'मित्यादीनि क्रमेण तेषामुदाहरणानि। नन्वप्रकृतवस्त्वात्मना सम्भावनम्, 'अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजयप्रह्वीभूतसुरासुराणि भवतो भूमेस्सुता शृण्वती। पत्यौ द्वेषकषायितेन मनसा स्निग्धा मयि स्यास्यति स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम् ॥' इत्यत्र चाञ्चल्यव्याप्तेन स्त्रीत्वेन हेतुना चाञ्चल्यसंभावनादतिव्याप्तम्। न चेयमुत्प्रेक्षा। विच्छित्तिविशेषाभावात्। तथा—'यद्यनुष्णो भवेद्वह्निर्यद्यशीतं भवेज्जलम्। मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक् ॥' इत्यत्रातिव्याप्तिः। वह्निजलादेरनुष्णत्वाशीतत्वादिना सम्भावनात्। 'सर्वातिशायिसौन्दर्यं शङ्के सत्यवतो मुखम्। येन सा मृगशावाक्षी गायत्री तरलीकृता ॥' इत्यत्रातिव्याप्तिश्च। तत्र सत्यवन्मुखे सर्वातिशायिसौन्दर्यवत्तादात्म्यसम्भावनात्। तथा—'विरक्तसन्ध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते। शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥' इत्यत्रातिव्याप्तिः। तत्र भरते प्रत्युद्गतवस्त्वात्मना सम्भावनस्य सत्त्वात्। किं च 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः। असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥' इत्यादिधर्मोत्प्रेक्षायामव्याप्तिः। तत्र तमसि लेपनादिसंसर्गोत्प्रेक्षायां वस्त्वन्तरात्मना संभावनाविरहात्। अतः अयुक्तमेवेदं लक्षणमित्याशङ्क्य, मूलोक्तमेव लक्षणमपेक्षितविशेषणपूरणेन परिष्कुर्वन् श्लोकं व्याचष्टे—**अन्यधर्मेति**। अन्यधर्मसंबंधनिमित्तका(१न्यधर्मिका)न्यता-

---

श्रीकृते नूनं पद्मैर्वैरायते शशी ॥ इवादिकपदाभावे गूढोत्प्रेक्षां प्रचक्षते। त्वत्कीर्तिविभ्रमभ्रान्ता विवेश स्वर्गनिम्नगाम् ॥ इति पाठः। १. 'अन्यधर्मिके' त्येतत् ख.पुस्तके नास्ति।

दात्म्यसम्भावनमुत्प्रेक्षेति लक्षणमिह विवक्षितम् । अस्ति चेदं 'धूमस्तोममि'ति लक्ष्ये । तमसि कोकाङ्गनाहृदयगतविरहानलप्रभवधूमतादात्म्यसम्भावनस्य नैल्यदृष्टिरोधकत्वादिधूमधर्मसंबन्धेन निमित्तेन प्रतीयमानत्वात् । 'रक्तौ तवांघ्री मृदुला'विति हेतूत्प्रेक्षायां स्वाभाविकचरणगतारुणिम्नो भूविन्यासप्रभवारुणिमत्वेन संभावनं भूविक्षेपजन्यारुणिमशालिगतमृदुलत्वादिधर्मसम्बन्धादिनिमित्तमस्तीति लक्षणानुगतिः । 'मध्यः किमि'ति फलोत्प्रेक्षायामपि वलित्रयसम्बन्धस्य स्वाभाविकस्य कनकदामकृतकुचधृत्यर्थमध्यबन्धत्वेन सम्भावनं मध्यगतवलित्रयसम्बन्धनिमित्तकं प्रतीयत इत्यस्ति लक्षणानुगतिः 'यद्यनुष्णो भवेद्वह्नि'रित्यादौ अनुष्णत्वादिसम्भावनस्य न किञ्चिन्निमित्तम् । तत्र रघुपतेस्त्रैकालिकानृतवादित्वाभावप्रतिपादनाय वह्न्यादावनुष्णत्वसम्भावनस्य दृष्टान्ततया तदसम्भवित्वप्रतिपादनमात्रपरस्यैव विवक्षितत्वात् । 'सर्वातिशायिसौन्दर्य'मित्यत्रापि सत्यवन्मुखे सर्वातिशायिसौन्दर्यसम्भावनस्य गायत्रीहृदयतारल्यकारकत्वरूपस्वधर्मसम्बन्धनिमित्ततया अन्यधर्मसम्बन्धनिमित्तकत्वाभावान्नातिव्याप्तिः । 'अस्मद्विक्रमचेष्टितानी'त्यत्रापि चापल्यसहचरितस्त्रीकत्वादिधर्मस्य स्त्र्यन्तरसाधारणतया अन्यधर्मस्य सीतागतचापल्यसम्भावननिमित्तत्वेऽपि धर्मस्य सहृदयहृदयाह्लादिनो विवक्षितत्वान्नातिव्याप्तिः 'विरक्तसन्ध्याकपिश'मित्यत्रापि नातिव्याप्तिः । अत्र अन्यत्र प्रत्युद्गन्तरि दृष्टस्य रजोव्याप्तिरूपधर्मस्य भरतप्रत्युद्गतत्वसम्भावने निमित्तत्वेऽपि तस्य यथार्थतया अनाहार्यत्वेन लक्षणे आहार्यसम्भावनस्य विवक्षितत्वात् । 'लिम्पतीवेति' धर्मोत्प्रेक्षायां लक्षणानुगमस्य ग्रन्थकृतैवाग्रे प्रदर्शयिष्यमाणतया न तदव्यापनं दोष इति मूलोक्तलक्षणं सुस्थमेवेति भावः । न च तथापि 'आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् । सुजातपुष्पस्तबकावनम्रा सञ्चारिणी पल्लविनी लतेव ॥' इत्यत्र देव्यां लतातादात्म्यसम्भावनरूपायामुत्प्रेक्षायामव्याप्तिः । तत्र विषयिलताधर्मस्य स्तबकपल्लवादिसम्बन्धस्य देव्यामभावादिति वाच्यम् । धर्मस्योपमायामिवानुगामित्वबिम्बप्रतिबिम्बभावादिकृतावान्तरभेदशालिनोऽत्र विवक्षितत्वात् । स्तनावर्जितत्वस्तबकावनम्रत्वयोर्वस्तुप्रतिवस्तुभावेन साम्पादिकतादात्म्यनिबन्धनसाधारण्यसद्भावेन वासःपल्लवयोर्बिम्बप्रतिबिम्बभावकृतसाधारण्याच्चान्यधर्मसम्बन्धोपपत्तेः । न च तथाऽपि 'भूयस्तराणि यदमूनि तमस्विनीषु ज्योत्स्नासु च प्रविरलानि ततः प्रतीमः । सन्ध्यानलेन भृशमम्बरमूषिकायामावर्तितैरुडुभिरेव कृतोऽयमिन्दुः ॥' इत्यत्र चन्द्रस्य सन्ध्यानलावर्तिताम्बरमूषामध्यगततारकानिकरनिर्मितत्वोत्प्रेक्षायां तत्तत्पक्षनिशागतताराविरलत्वादेर्धर्मस्य विषये कथञ्चिदपि सम्बन्धाभावेनाव्याप्तिरिति वाच्यम् । तत्र तारकाविरलत्वाविरलत्वानुविधायिवृद्धिह्रासशालित्वस्य चन्द्रसंब-

---

१. मूषैव मूषिका । स्वार्थे कः । मूषा—तैजसा । 'तैजसावर्तनी मूषे'त्यमरः । अग्नौ सुवर्णादिद्रवीकरणसाधनभूतः पात्रविशेष इति यावत् । सुवर्णादि यस्मिन् पात्रे निक्षिप्य द्रवीक्रियते तत् पात्रं मूषेत्युच्यते । द्राविड्यां "कुहे" इति तस्य व्यवहारः ।

च वस्तुहेतुफलात्मतागोचरत्वेन त्रिविधा । अत्र वस्तुनः कस्य चिद्वस्त्वन्तरतादात्म्यसम्भावना प्रथमा स्वरूपोत्प्रेक्षेत्युच्यते । अहेतोर्हेतुभावेनाफलस्य फलत्वेनोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षेत्युच्यते । अत्र आद्या स्वरूपोत्प्रेक्षा उक्तविषया अनुक्तविषया चेति द्विविधा । परे हेतुफलोत्प्रेक्षे सिद्धविषया असिद्धविषया चेति प्रत्येकं द्विविधे । एवं षण्णामुत्प्रेक्षाणां 'धूमस्तोम'मित्यादीनि क्रमेणोदाहरणानि । रजनीमुखे सर्वत्र विसृत्वरस्य तमसो नैल्यदृष्टि-

---

धसद्भावात् । न च तथाऽपि '[1]अस्यां मुनीनामपि मोहमूहे भृगुर्महान्यत्कुचशैलशीली । नानारदाह्लादि मुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥' इत्यत्र भृग्वादिमुनिषु दमयन्तीगोचरमोहोत्प्रेक्षायां निमित्तभूतकुचपरिशीलनादेर्मुनिगतत्वाभावेनान्यधर्मसम्बन्धाभावादव्याप्तिरिति वाच्यम् । भृग्वादिशब्दस्य श्लेषेण भृगुमुनितटरूपार्थद्वयस्य श्लेषभित्तिकाभेदाध्यवसायेन कुचपरिशीलनादिनिमित्तसम्बन्धस्य भृग्वादिमुनिगतत्वसम्भवात् । एवमन्यधर्मत्वमपि न वास्तवं विवक्षितम् । तथात्वे 'अस्या दौहृदशालिन्या मुखमापाण्डरप्रभम् । सत्यं राजेति मन्येऽथ यद्भुवं भोक्तुमिच्छति ॥' इत्यत्र तन्वीमुखे चन्द्रतादात्म्योत्प्रेक्षायां भूभोजनेच्छा निमित्तम् । तस्याः विषयीभूततन्वीसम्बन्धसत्वेऽपि चन्द्रगतत्वाभावेनान्यधर्मत्वस्य वास्तवस्याभावात् । किं तु वास्तवं साम्पादिकं वाऽन्यधर्मत्वं विवक्षितम् । प्रकृते च भूभोजनेच्छायाः राजशब्दश्लेषनिबन्धननृपाभेदाध्यवसायेन विषयिधर्मत्वोपपत्तिरिति दिक् । **तत्रेति** । उत्प्रेक्षायामित्यर्थः । स्वरूपोत्प्रेक्षादिशब्दानां विषयमाह—**वस्तुन इत्यादि** । **उक्तविषयेति** । मूले कारिकायामास्पदशब्दस्य विषयपरतया व्याख्यातत्वात् स्वरूपोत्प्रेक्षायाः उक्तविषयत्वानुक्तविषयत्वकृतं द्वैविध्यमित्यर्थः । उदाहरणेषु लक्षणं योजयति—**रजनीमुख इति** । विरहानलं सम्भावयितुं 'प्रियाविघटिते'ति कोकाङ्गनाविशेषणम् । सर्वतःप्रसृमरे तमसि देशवि-

---

१. इदं पद्यं नैषधचरिते सप्तमसर्गस्थम् । अनेन नलः दमयंतीं वर्णयति— 'अस्यामिति । अस्यां दमयंत्यां मुनीनामपि मोहं भ्रान्तिं आसक्तिमिति यावत् । ऊहे तर्कयामि । उत्प्रेक्षा । कुतः यद्यस्मात् महान् अधिकः भृगुः प्रपातः मुनिविशेषश्च । 'प्रपातस्तु तटो भृगु'रित्यमरः । यस्याः कुचावेव शैलौ शीलयति परिचिनोतीति तच्छीली । मुखं नानाप्रकारैः रदैर्दन्तैराह्लादयतीति तत्तथोक्तम् । अन्यत्र नारदमुनिं आह्लादयतीति नारदाह्लादि । तन्न भवतीति अनारदाह्लादि । तन्नेति नानारदाह्लादि इत्यर्थः । महाभाः महाप्रभः । रतसर्गयोग्यः सुरतसम्पादनार्हः । अन्यत्र महाभारतस्य इतिहासस्य सर्गे निर्माणे योग्यः क्षमः । व्यासः विस्तारो द्वैपायनश्च । श्रितौ ऊरू सक्थिनी येन सः श्रितोरुः । 'सक्थि क्लीबे पुमानूरु'रित्यमरः । अत्र श्लेषमूलया मुनिमोहोत्प्रेक्षया मुनयस्त्वस्यां

प्रतिरोधकत्वादिधर्मसम्बन्धेन गम्यमानेन निमित्तेन सद्यः प्रियविघटितसर्वदेशस्थितकोकाङ्गनाहृदुपगतप्रज्वलिष्यद्विरहानलधूमस्तोमतादात्म्यसम्भावना स्वरूपोत्प्रेक्षा तमसो विषयस्योपादानादुक्तविषया। तमोव्यापनस्य नभःप्रभृतिभूपर्यन्तसकलवस्तुसान्द्रमलिनीकरणेन निमित्तेन तमःकर्तृकलेपनतादात्म्योत्प्रेक्षा नभःकर्तृकाञ्जनवर्षणतादात्म्योत्प्रेक्षा च अनुक्तविषया स्वरूपोत्प्रेक्षा। उभयत्रापि विषयभूततमोव्यापनस्य अनुपादानात्। नन्वत्र तमसो व्यापनेन निमित्तेन लेपनकर्तृतादात्म्योत्प्रेक्षा, नभसो भूपर्यन्तं गाढनीलिमव्याप्तत्वेन निमित्तेनाञ्जनवर्षणकर्तृतादात्म्योत्प्रेक्षा चेति उत्प्रेक्षाद्वयमुक्तविषयमेवास्तु। मैवं। लिम्पतिवर्षतीत्याख्यातयोः कर्तृवाचकत्वेऽपि 'भावप्रधानमाख्यात'मिति स्मृतेर्धात्वर्थक्रियाया एव प्राधान्येन तदुपसर्जनत्वेना-

---

शेषस्थितकोकाङ्गनाविरहानलधूमस्तोमतादात्म्योत्प्रेक्षणं न सम्भवतीति 'सर्वदेशस्थिते'ति। प्रदीप्ते विरहानले धूमस्तोमासम्भवेन 'प्रज्वलिष्य'दिति विरहानलविशेषणमिति भावः। द्वितीयस्वरूपोत्प्रेक्षायां लक्षणानुगमनं दर्शयति — **व्यापनस्येति** । तमोगतस्य व्यापनस्येत्यर्थः। **सान्द्रमलिनीकरणेनेति** । नीरन्ध्रनैल्यापादनेनेत्यर्थः। **तमःकर्तृकेति** । आख्यातोपस्थिते कर्तरि तमसस्तादात्म्येनान्वये कर्तुर्धात्वर्थे लेपने अनन्वयात् तस्य इवशब्दार्थे सम्भावने तस्य च विषयतया व्यापने अन्वयात् तमःकर्तृकलेपनसम्भावनाविषयो नभःकर्तृकाञ्जनवर्षणसम्भावनाविषयो व्यापनमिति वाक्यार्थबोधपर्यवसानात्। विषयस्य व्यापनस्यानुपादानेन एते द्वे अपि अनुक्तविषये इति भावः। नन्वत्रोभयत्रापि 'लिम्पति वर्षती'ति धात्वर्थलेपनवर्षणयोः आख्यातोपात्ते कर्तरि विशेषणत्वेनान्वयमभ्युपेत्य कर्तुरिवशब्दार्थे सम्भावने अन्वयेन लेपनाञ्जनवर्षणकर्तृतादात्म्यमेवोत्प्रेक्ष्यताम्। ततश्च तमोनभसोर्विषययोरुपादानादुक्तविषयतालाभात्तमोनभसोः प्रथमान्तपदोपस्थितयोर्मुख्यविशेष्यतया प्रथमान्तविशेष्यकबोधोऽपि तान्त्रिकसम्प्रतिपन्न उपपादितो भवति। 'धूमस्तोम'मित्यादौ प्रथमान्तविशेष्यकबोधस्य तत्रापि सम्प्रतिपन्नतया तद्वैरूप्यसम्भवाच्चेत्यभिप्रेत्य शङ्कते — **नन्विति** । **उक्तविषयमिति** । तादात्म्योत्प्रेक्षाविषययोस्तमोनभसोरुपादानादुक्तविषयमित्यर्थः। **लिम्पतिवर्षतीति** । 'लः कर्मणि च' इति सूत्रानुसारेणाख्यातस्य कर्त्रादिशक्ततया प्रकृते लिम्पतिवर्षत्याख्याताभ्यां कर्तुरुपस्थितावपीत्यर्थः। **भावेति** । इयं हि यास्कस्मृतिः। अत्र भावशब्दो धात्वर्थपरः। 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते।' इति वैयाकरणोक्तेः। भावो धात्वर्थः प्रधानं विशेष्यं यस्य तदाख्यातमिति स्मृत्यर्थपर्यवसानाद्धात्वर्थभूतलेपनवर्षणक्रिययोरेव विशेष्यत्वेनेत्यर्थः। **तदुपसर्जनत्वेनेति** । धात्वर्थोपसर्जन-

मुह्यन्ति, किमुतान्ये इति वस्तु व्यज्यते। इति ॥

न्वितस्य कर्तुरुत्प्रेक्षणीयतया अन्यत्रान्वयासम्भवात् ।

---

त्वेनेत्यर्थः । **उत्प्रेक्षणीयतयेति** । उत्प्रेक्षाविषयतयेत्यर्थः । **अन्यत्रेति** । इवादिशब्दार्थभूतसम्भावनायामित्यर्थः । अयमभिसन्धिः । निरुक्तस्मृतिबलेन धात्वर्थप्राधान्यव्यवस्थितौ तत्राख्यातार्थकर्तुर्विशेषणत्वेनान्वयः । प्रत्ययार्थप्राधान्यस्मृतेस्तद्धितादिषु सावकाशत्वात् । तस्मिंश्च कर्तरि प्रथमान्तपदार्थस्याभेदेनान्वयात् 'तमो लिम्पती'ति पदद्वयसमभिव्याहारे तमःकर्तृकं लेपनमिति लेपनविशेष्यकबोधोदयात् न लेपनस्य कर्तर्युपसर्जनत्वेनान्वयो व्युत्पत्तिसिद्ध इति लेपनादिकर्तुस्तादात्म्यसंसर्गावच्छिन्नविषयतया सम्भावनान्वयासम्भवेन तमोनभसोः न लेपनादिकर्तृतादात्म्योत्प्रेक्षा युक्ता । किं तु उक्तरीत्या तमःकर्तृकलेपनस्य निरुक्तसम्बन्धेन सम्भावनायामन्वयः । तस्य व्यापने विषये इति तमोनभःकर्तृकलेपनाञ्जनवर्षणसम्भावनाविषयो व्यापनमिति परिनिष्ठितवाक्यार्थबोधपर्यवसानादनुक्तविषयं स्वरूपोत्प्रेक्षाद्वयमेव युक्तम् । एतेन 'व्यापने लेपनतादात्म्यमुत्प्रेक्षणीयमिति युज्यते । व्यापनस्याशाब्दतया अनुपस्थिते तत्र तदसम्भवात् । न च 'कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम् । सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥' इत्याद्यतिशयोक्तौ कमलादिपदस्येव 'लिम्पती'त्यत्रापि लक्षणया धातोर्लेपनपरत्वादुत्प्रेक्षासम्भवः । तथा सति व्यापनस्यैव लिम्पतिशब्दार्थतया तत्संसर्गस्यैवोत्प्रेक्षणीयतापत्तया व्यापने लेपनतादात्म्योत्प्रेक्षाया असम्भवात् । न वा वस्तुतस्तत्सम्भवः । तमसि व्यापनस्य वस्तुतस्सिद्धत्वेनानुत्प्रेक्षणीयत्वात् 'अन्यतादात्म्यसम्भावन'मिति लक्षणस्य तत्रातिव्याप्त्यापत्तेश्च तमसि लेपनस्य निश्चितत्वेन सम्भावनाविषयत्वायोगाच्चे'ति निरस्तम् । 'लिम्पती' त्यत्र व्यापने लाक्षणिकत्वेऽपि वाच्यलक्ष्ययोरेकपदोपस्थाप्यतया श्लेष इवाभेदाध्यवसायस्य सिद्धान्तसम्प्रतिपन्नतया तादृशाध्यवसायविषयीभूतलेपनतादात्म्यस्य सम्भावनायामन्वयसम्भवेनोत्प्रेक्षणीयत्वोपपत्तेः । न च व्यापने लेपनतादात्म्यस्य निश्चितत्वेन सम्भावनाविषयत्वायोग इति वाच्यम् । लक्षणयोपस्थिते तटादौ मुख्यार्थाभेदो व्यञ्जनव्यापारेण प्रतीयत इति हि सिद्धान्तः । ततश्च व्यञ्जनावृत्त्युपस्थितस्य तस्य सम्भावने इवादिशब्दोपस्थाप्ये अन्वये अनुपपत्त्यभावात् । अन्यथा संशयोदाहरणे तत्तत्पदोपस्थितस्य कोटिद्वयस्य निश्चितत्वेन सन्देहे अन्वयासम्भवेन सन्देहालङ्कारस्य दुर्वचत्वापत्तेः । न च तमसि लेपनसंसर्गसम्भावनस्यापि चमत्कारकारितया धातोर्व्यापनलक्षणामङ्गीकृत्योक्तप्रणाड्याश्रयणमयुक्तमिति वाच्यम् । तत्पक्षेऽपि व्यापनस्य निमित्तस्य गम्यतामादायैव सम्भावनस्य निर्वहणीयतया सर्वत्रावैरूप्यायान्यतादात्म्यसम्भावने पर्यवसानस्योचितत्वात् । तदा सकलवस्तुसान्द्रमलिनीकरणस्य विच्छित्तिविशेषशालिनो धर्मस्य लाभात् । न चार्थिकार्थमादाय लक्षणोपपादने तमसि लेपनकर्तृतादात्म्यसम्भावनमादायैव कुतो न लक्षणोपपादनसम्भव इति वाच्यम् । तथा सति लेपनस्य कर्तर्युपसर्जनत्वापत्त्या आख्यातस्य भावप्राधान्यस्यानुशासनसिद्धस्य भङ्गापत्तेः । न चाख्यातस्य भावप्राधान्यमसिद्धम् । तस्य सकलवैयाकरणसम्प्रतिपन्नत्वादित्यलमधिकेन ॥

अत एव [¹आख्यातार्थस्य कर्तुः क्रियोपसर्जनत्वेन अन्यत्रान्वयासम्भवादेव] अस्योपमायामुपमानतयान्वयोऽपि दण्डिना निराकृतः । 'कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे । स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥ इति ॥' केचित्तु, तमोनभसोर्विषययोः तत्कर्तृकलेपनवर्षणस्वरूपधर्मोत्प्रेक्षेत्याहुः ।

---

**अतएवेति** । आख्यातस्य कर्तृप्राधान्यादेवेत्यर्थः । **क्रियोपसर्जनत्वेनेति** । विशेष्यतासम्बंधेनाख्यातार्थनिष्ठप्रकारताशालिबोधत्वावच्छिन्नं प्रति विषयतया धातुजन्योपस्थितिर्हेतुरिति कार्यकारणभावबलेन क्रियायामेव तस्योपसर्जनत्वेन इवशब्दार्थे अन्वयासम्भवादिति भावः । **कर्तेति** । 'लिम्पतीवे'त्यत्र लेपनकर्तुरिवशब्दार्थे सादृश्ये उपमानत्वेनान्वयसम्भवादुपमैवात्र किं न स्यादित्याशङ्कोत्तरत्वेन श्लोकोऽयमवतारितः । कर्ता यद्युपमानं स्यात्तदेयं शङ्का युज्यते । न चेदं सम्भवति । तत्र हेतुः न्यग्भूत इत्यादिः । असौ कर्ता क्रियापदे तिङन्ते न्यग्भूतः क्रियोपसर्जनभूत इत्यर्थः । न्यग्भूततामेवोत्तरार्धेनोपपादयति — **स्वक्रियेति** । अन्यक्रियाभिन्नं व्यपेक्षितुमाकाङ्क्षितुं नालम् । तथा च इवशब्दार्थस्सम्भावनं सादृश्यं वा अस्तु । उभयथाऽपि न तत्र कर्तुरन्वय इति उपमा न युक्तेति श्लोकतात्पर्यम् । प्रथमान्तविशेष्यकबोधानुसारिणां मतमाह — **केचित्त्विति** । तमोनभसोरुपात्तयोर्लेपनवर्षणक्रियासंसर्ग उत्प्रेक्ष्यते । सम्बन्धश्चाधारतैव । सा चाख्यातार्थः । तस्यास्सम्भावने अन्वयः । तथा च तमोनभसी लेपनाञ्जनवर्षणाधारतासम्भावनविषयाविति वाक्यार्थपर्यवसानात् धर्मोत्प्रेक्षा युक्ता । न चैवमाख्यातस्य भावप्राधान्यभङ्गप्रसङ्गः । 'भावप्रधान'मिति निरुक्तस्यार्थान्तरपरतया धात्वर्थमुख्यविशेष्यतायां तात्पर्याभावस्यास्माभिः स्वकृतसिद्धान्तचन्द्रिका²प्रसादे निपुणतरमुपपादितत्वादिति दिक् । **तत्कर्तृकेति** । तमोनभःकर्तृकेत्यर्थः । इदं च प्रौढिवादेन । न हि तमोनभसोर्विषययोः कर्तर्यन्वयः, पुनर्मुख्यविशेष्यत्वेनान्वय इति वारद्वयमन्वयो युक्तः । प्राग्व्याख्यातरीत्यास्मिन्पक्षे लेपनाद्याश्रयताया एवोत्प्रेक्षणीयत्वात् । कर्तुराख्यातार्थत्वाभावेन तमोनभसोरभेदेन तत्रान्वयायोगाच्च । न चास्मिन्पक्षे 'अन्यतादात्म्यसम्भावनमुत्प्रेक्षा' इति लक्षणस्य 'लिम्पतीवे'त्यत्राव्याप्तिरिति वाच्यम् । 'अन्यतादात्म्यसंभावन'मित्यस्य हि अन्यतादात्म्यस्यान्यत्वस्य संभावनं तर्कणमित्यर्थादन्यत्वस्यान्यप्रकारस्य सम्भावनमुत्प्रेक्षा । स च प्रकारो धर्म्युत्प्रेक्षायां विषयीभूतधर्म्यन्तरं, धर्मोत्प्रेक्षायामुत्प्रेक्षणीयतया अभिमतो धर्म इति सर्वत्रान्यप्रकारसम्भावनस्यानुगतत्वेनोक्तदोषाप्रसक्तेः । अत्र पक्षे उक्तानुक्तस्वरूपोत्प्रेक्षायामुक्तानुक्तविषयतया द्वैविध्यासम्भवाद्धर्मधर्मिगोचरतया द्वैविध्य-

---

१. 'आख्यातार्थस्य' इत्यारभ्य 'अन्वयासंभवादेवे'त्यंतस्य व्याख्यानग्रंथस्य केषुचिन्मूलपुस्तकेषु विलेखनं प्रामादिकमिति चंद्रिकाकारेणोक्तम् । रसिकरञ्जन्यां तु मूलत्वेन व्याख्यातस्स इति स एव पाठोऽत्रादृतः । २. 'प्रासादे' इति. क. पाठः ।

तन्मते स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा चेत्येवं द्वैविध्यं द्रष्टव्यम् । चरणयोः स्वतःसिद्धे रक्तिमनि वस्तुतो विक्षेपणं न हेतुरिति अहेतोस्तस्य हेतुत्वेन सम्भावना हेतूत्प्रेक्षा । विक्षेपणस्य विषयस्य सत्त्वात्सिद्धविषया । चन्द्रपद्मविरोधे स्वभाविके नायिकावदनकान्तिप्रेप्सा न हेतुरिति तत्र तद्धेतुत्वसम्भावना हेतूत्प्रेक्षा । वस्तुतस्तदिच्छाया अभावादसिद्धविषया । मध्यः स्वयमेव कुचौ धरति, न तु कनकदामबद्धत्वेनाध्यवसिताया वलित्रयशालिताया बलादिति मध्यकर्तृककुचधृतेस्तत्फलत्वेनोत्प्रेक्षा सिद्धविष-

---

मुन्नेयमित्याह । **तन्मत इति ।** न च 'अपर इव पाकशासन' इत्यादावपरविशेषणान्वयानुरोधेन प्रसिद्धपाकशासनतादात्म्यसंभावनादव्याप्तिः । प्रसिद्धतादात्म्यसंभावनासंभवेऽपि कविकल्पितापरपाकशासनतादात्म्यसंभावनस्य संभवात् । यत्तु, पाकशासनत्वस्य धर्मस्यैव सांसर्गिकतया तत्रोत्प्रेक्षणमिति तन्न । 'पाकशासन' इति सामानाधिकरण्यनिर्देशानुपपत्तेः । सामानाधिकरण्यनिर्देशो हि धर्मिणोस्तादात्म्ये लिङ्गम् । न च 'प्राप्याभिषेकमेतस्मिन्प्रतितिष्ठासति द्विषाम् । चकंपे लोक्यमानार्था भयविह्वलितेव भूः ॥' इत्यत्र, सामानाधिकरण्यनिर्देशसत्त्वेऽपि भयविह्वलितत्वादिधर्मस्यैवोत्प्रेक्षेति सर्वस्वकारादिभिरुक्तमिति वाच्यम् । विह्वलितादिशब्दानां धर्मवाचकत्वस्य लोचनकारादिसंमतत्वात् । अत एव 'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना तव मुखे तरलायताक्षि! । क्षोभं प्रयाति न मनागपि तेन मन्ये प्रव्यक्तमेव जडराशिरयं पयोधिः ॥' इति श्लोकव्याख्यायां जडपदस्य जाड्यपरता, 'जडादयः शब्दा भावप्रधाना' इत्युक्तमिति वदता लोचनकारेण द्वितीयोद्योते व्यक्तमुमपादिता । तन्न्यायेन विह्वलितादिशब्दानामपि धर्मपरतया धर्मोत्प्रेक्षा सत्यपि सामानाधिकरण्यनिर्देशे घटते । जातिशब्देषु तथा व्युत्पत्तेरभावात् सामानाधिकरण्यनिर्देशमुल्लङ्घ्य धर्मोत्प्रेक्षापरत्वकल्पनमयुक्तम् । यदि पुनर्जातिवाचकेषु जातिरेव वाच्या, जातिव्यक्त्योरभेदाच्च सामानाधिकरण्यनिर्देशोपपत्तिरिति मीमांसकपक्षोऽनुरुध्यते तदा अस्तु धर्मोत्प्रेक्षा, ततः किं ते म आगतमपगतं वा । अस्मिन्नपि मते कारिकैवं योज्या । 'वस्तुहेतुफलात्मना' इति तृतीया प्रकारितायाम् । तथा च वस्तुहेतुफलस्वरुपप्रकारिका संभावना उत्प्रेक्षेति हेतुफलोत्प्रेक्षयोर्लक्षणं योजयन्नुत्तरं श्लोकद्वयं व्याचष्टे— **चरणयोरिति** । **हेतुत्वेनेति** । 'विक्षेपणा'दिति पञ्चम्या हेतुत्वप्रतिपादनेन ध्रुवशब्दार्थे संभावने अन्वयादित्यर्थः । **चन्द्रेति** । चन्द्रपद्मयोः स्वस्वकान्तिद्वारा एककालावस्थानविरहरूपविरोध इत्यर्थः । **तत्रापीति** । नायिकावदनकान्तिप्रेप्सायामित्यर्थः । 'त्वन्मुखाभेच्छये'ति हेतुतृतीयोक्तस्य हेतुत्वस्य नूनंशब्दद्योतिते संभावने अन्वयादिति भावः । **तत्फलत्वेनेति** । कनकदामबन्धत्वाध्यवसितवलित्रयशालिताफलत्वेनेत्यर्थः । 'धृत्यै' इति चतुर्थ्या तादर्थ्यप्रतिपादिकया फलत्वोक्त्या तस्य किंशब्दोक्तवितर्के अन्वयादेषा फलोत्प्रेक्षेत्यभिप्रायः । कामिनीचर-

या फलोत्प्रेक्षा । जलजस्य जलावस्थितेरुदवासतपस्त्वेनाध्यवसितायाः कामिनीचरणसायुज्यप्राप्तिर्न फलमिति तस्या गगनकुसुमायमानायास्तपःफलत्वेनोत्प्रेक्षणात् असिद्धविषया फलोत्प्रेक्षा। अनेनैव क्रमेणोदाहरणान्तराणि॥

'बालेन्दुवक्राण्यविकसभावाद्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥'

अत्रपलाशमुकुलानां वक्रत्वलोहितत्वसम्बन्धेन निमित्तेन सद्यःकृतनखक्षततादात्म्यसम्भावना उक्तविषया स्वरूपोत्प्रेक्षा। पूर्वोदाहरणे निमित्तभूतधर्मसम्बन्धो गम्यः। इह तूपात्त इति भेदः। नन्विवशब्दस्य सादृश्यपरत्वेन प्रसिद्धतरत्वादुपमैवास्तु। लिम्पतीवेत्युदाहरणे लेपनकर्तुरुपमानत्वार्हस्य क्रियोपसर्जनत्ववदिह नखक्षतानामन्योपसर्जनत्वस्योपमाबाधकस्याभावात्। इति चेदुच्यते। उपमाया यत्र क्वचित् स्थितैरपि नखक्षतैः सह वक्तुं शक्यतया वसन्तनायकसमागतवनस्थलीसम्बन्धित्वविशेषणानपेक्षत्वा-

---

णसायुज्यप्राप्तिरूपं फलं जलजोदकावस्थितेर्न फलत्वयोग्यमिति 'तोये तपस्यतीति' उदवासतपस्त्वेनाध्यवसायः फलत्वसंभावनोपयोगितया निबद्धः। पूर्वोदारणेऽपि दामबन्धस्यैव धृतिः फलमिति तत्फलत्वसंभावनायै वलित्रयशालितायाः दामबन्धत्वाध्यवसाय उपनिबद्धः। **बालेन्दुवक्राणीति**। अत्र बालेन्दुवक्राणीति वाचकलुप्तोपमा। न च उपमाने इन्दौ बालविशेषणस्य उपमेयेषु पलाशमुकुलेषु तत्प्रतिविशेषणानिर्देशादुपमानस्याधिक्यं दोषः। तस्य वक्रत्वरूपसाधारणधर्मवत्तासंपादनार्थत्वेनाधिक्यस्यादोषत्वात्। इतरथा वक्रत्वानुपपत्तेः। 'अविकासभावा'दित्युपमेयविशेषणस्याप्युपमेये धर्मसंभावनार्थत्वामिति न वैयर्थ्यम्। उत्तरार्धे 'वसन्तेने'ति पुल्लिङ्गोपस्कृतेन 'वनस्थलीना'मिति स्त्रीलिङ्गोपस्कारेण 'सद्यस्समागताना'मिति विशेषणसाम्येनाप्रस्तुतनायकसमागतनायिकावृत्तान्तप्रतीत्या समासोक्तेरुत्थितेस्तदनुप्राणिता नखक्षततादात्म्यसंभावनरूपोत्प्रेक्षेति तयोरुपमायाश्चाङ्गाङ्गिभावसङ्करः। प्रबन्धव्यङ्ग्यदेव्यालम्बनभगवद्गतरतिलक्षणसञ्चारिभावोद्दीपनविभाववर्णनारूपतया अस्या उत्प्रेक्षायाः शृङ्गाररसाङ्गता। पूर्वोदाहरणादस्य वैलक्षण्यमाह— **पूर्वेति**। तत्र निमित्तस्य नैल्यादेरनुपादानान्निमित्तभूतधर्मो गम्यः। इह तु वक्रत्वादिरुपात्त इति भावः। नन्विवशब्दस्य सादृश्यपरतामालंब्य नखक्षतोपमाभ्युपगमे 'लिंपतीवे'त्यत्रापि इवशब्दसत्वादुपमापत्तिरित्यत आह— **लिम्पतीवेति**। अत्र, लेपनकर्तुरुपमानत्वयोग्यत्वेऽपि इवशब्दार्थसादृश्यान्वयविरोधिनः क्रियोपसर्जनत्वस्योपमाबाधकस्य सत्वादुपमाऽसंभवेऽपि इह तादृशबाधकाभावादुपमा युक्तेत्यर्थः। **यत्र क्वचिदिति**। कामिनीकुचकलशादावित्यर्थः।

दिह तदुपादानं पलाशमुकुलानां नखक्षततादात्म्यसम्भावनायामिवशब्द-मवस्थापयति । तथात्व एव तद्विशेषणसाफल्यात् । अस्ति च सम्भावनायामपि इवशब्दः दूरे तिष्ठन् देवदत्त इवाभातीति ।

'पिनष्टीव तरङ्गाग्रैस्समुद्रः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥'

अत्र तरङ्गाग्रैः फेनचन्दनस्य प्रेरणं पेषणतयोत्प्रेक्ष्यते । समुद्रादुत्थितस्य चन्द्रस्य प्रथमं समुद्रपूरे प्रसृतानां कराणां दिक्षु व्यापनं च समुद्रोपान्तफेनचन्दनकृतलेपनत्वेनोत्प्रेक्ष्यते । उभयत्र क्रमेण समुद्रपूरप्रान्तगतफेनचन्दनपुञ्जीभवनं दिशां धवलीकरणं च निमित्तमिति फेनचन्दनप्रेरणकिरणव्यापनयोर्विषययोरनुपादानादनुक्तविषये स्वरूपोत्प्रेक्षे । येषां तूपात्तयोः समुद्रचन्द्रयोरेव तत्कर्तृकपेषणलेपनरूपधर्मोत्प्रेक्षेति मतम्, तेषां मते पूर्वोदाहरणे धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षा । इह तु धर्मिणि धर्मसंसर्गोत्प्रेक्षेति भेदोऽवगन्तव्यः ।

'रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः ।
भूमौ प्रतापयशसी सृष्टवान् सततोदिते ॥'

रात्रौ रवेर्दिवा चन्द्रस्य चाभावस्सन्नपि प्रतापयशसोः सर्गे न हेतुरिति, तस्य तद्धेतुत्वसम्भावना सिद्धविषया हेतूत्प्रेक्षा ।

'विवस्वतानायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् ।

---

**तथात्व एवेति** । इवशब्दस्य संभावनापरत्व एवेत्यर्थः । तथा च 'लिंपतीवे'त्यत्रेवात्रापि तादात्म्यसंभावनोपयुक्तविशेषणविन्यासस्यैव उपमाबाधकस्य सत्त्वान्नोपमा युज्यत इति भावः। **पिनष्टीवेति** । अत्र 'फेनचन्दन'मिति फेने चन्दनत्वरूपणात्तरङ्गाग्रेषु करत्वस्य समुद्रे पेषणकर्तृपुरुषत्वरूपणस्य गम्यतया एकदेशविवर्ति रूपकम् । तदुत्थापिता च फेनचन्दनप्रेरणे समुद्रकर्तृकपेषणतादात्म्योत्प्रेक्षेति तयोरङ्गाङ्गिभावसङ्करः । उत्तरार्धेऽपि 'दिगङ्गना'इति दिशामङ्गनात्वरूपणादिन्दौ लेपनकर्तृपुरुषत्वस्य रूपणस्य गम्यमानतया एकदेशविवर्ति रूपकम् ।तदनुगृहीता च इन्दुकर्तृकलेपनतादात्म्योत्प्रेक्षा दिक्षु करव्यापन इति तयोरङ्गाङ्गिभावसङ्करः । पूर्वार्धगतसङ्करोपजीवनेनास्योत्थितेः पूर्वोत्तरार्धगतयोरनयोस्सङ्करयोरङ्गाङ्गिभावसङ्करः । अत्रैवोदाहरणे संसर्गोत्प्रेक्षावादिनां केषाञ्चिन्मतेनोत्प्रेक्षां योजयति —**येषामिति** । **विवस्वतेति** । अत्र स्वकिरणैस्सह जनलोचनानां नयनस्य हेतुत्वेनान्ध्यं प्रत्यु-

गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥'

अत्र विवस्वता कृतं स्वकिरणैस्सह जनलोचनानां नयनमसदेव रात्रावान्ध्यं प्रति हेतुत्वेनोत्प्रेक्ष्यत इति असिद्धविषया हेतूत्प्रेक्षा ।

'पूरं विधुर्वर्धयितुं पयोधेः शङ्केऽयमेणाङ्कमणिं कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगे सशोककोकी नयने कियन्ति ॥'

अत्र चन्द्रेण कृतं समुद्रस्य बृम्हणं सदेव तथा तेन कृतस्य चन्द्रकान्तद्रावणस्य कोकाङ्गनाबाष्पस्रावणस्य च फलत्वेनोत्प्रेक्ष्यत इति सिद्धविषया फलोत्प्रेक्षा ।

'रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥'

---

त्प्रेक्षा । सा च गम्या । व्यञ्जकेवादिशब्दाभावात् । जनलोचननयनक्रियासंसर्गो भास्वति इवशब्देनोत्प्रेक्ष्यत इति पूर्वार्धे नयनक्रियोत्प्रेक्षा वाच्या । तत्रापनीयमानस्वगोसहस्रसङ्कीर्णता निमित्तम् । तथा च सङ्कीर्णत्वेन निमित्तेन स्वपरगवीविवेको विवस्वतो नाभूदिति प्रतीतेस्सामान्यालङ्कारो व्यङ्ग्यः । 'स्वगोसहस्रेण सम'मित्यत्र सहोक्त्यलङ्कारः । अस्य च सामान्यालङ्कारस्य च एकवाचकानुप्रवेशसङ्करः । सोऽपि गोशब्दश्लेषानुप्राणित इति तयोरङ्गाङ्गिभावसङ्करः । तदुत्थापिता च विवस्वति नयनक्रियोत्प्रेक्षेति तस्य तस्याश्चाङ्गाङ्गिभावसङ्करः । अनया चोत्प्रेक्षया विवस्वति श्लिष्टविशेषणनिबन्धनाप्रस्तुतगोचरकपुरुषवृत्तान्तसमारोपरूपा समासोक्तिरुत्थाप्यत इति तयोरङ्गाङ्गिभावसङ्करः । एवमुत्प्रेक्षालब्धं विवस्वत्कर्तृकजननयनापनयनमुपजीव्य उत्तरार्धगम्यहेतूत्प्रेक्षोत्थितेः पूर्वार्धप्रतिपाद्यसङ्करस्यास्याश्चाङ्गाङ्गिभावसङ्करः । जननयनवैधुर्यनिबन्धनस्यान्ध्यस्य समर्थनसापेक्षस्य वाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तयोश्चैकवाचकानुप्रवेशसङ्करः । 'नान्धकारै'रित्यत्रान्ध्यं प्रति वास्तवहेतोरन्धकारस्य हेतुत्वापह्नवात् सापह्नवा हेतूत्प्रेक्षा । न च तेनेदमान्ध्यमित्येतावतैव वाक्यार्थपरिसमाप्तेः समाप्तपुनरात्तत्वं दोषः । अस्य वाक्यांतरत्वेन पूर्ववाक्ये अनुप्रवेशाभावादिति द्रष्टव्यम् । **पूरमिति** । अत्र, कोकाङ्गनानयनवारिस्रवणस्य 'प्रियविप्रयोग'इत्यनेन समर्थनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । तस्योत्प्रेक्षायाश्चाङ्गाङ्गिभावसङ्करः । **रथस्थितानामिति** । अत्र, विशेषणसाधारण्यहेतुकाप्रस्तुततुरगाधिपतिव्यवहारसमारोपस्य भानुमति प्रतीतेस्समासोक्त्युत्प्रेक्षयोस्समकालमुत्थानात् समप्राधान्यसङ्करः । यथा वा—भगवंतरायसचिवस्य 'एतेन हंत वपुषा करभोरु ! साम्यं प्राप्तुं न शक्यमिति ते वदनस्य चंद्रः । वापीमगात्रजशरीरकलङ्कपङ्कप्रक्षालनाय किमयं प्रतिबिम्बदम्भा-

अत्रोत्तरायणस्याश्वपरिवर्तनमसदेव फलत्वेनोत्प्रेक्ष्यत इति असिद्धविषया फलोत्प्रेक्षा । एता एवोत्प्रेक्षाः

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥'

इत्युत्प्रेक्षाव्यञ्जकत्वेन परिगणितानां शब्दानामप्रयोगे गम्योत्प्रेक्षाः । यथा—

'त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम् ।' इति ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे उत्प्रेक्षाप्रकरणम् ॥१२॥

---

त् ॥' अत्र, चन्द्रस्य वापीप्रतिफलनं तत्कर्तृकवापीप्रवेशत्वेनाध्यवसितम् । तस्य च फलत्वेन कलङ्कपङ्कक्षालनमुत्प्रेक्षितमित्यासिद्धविषया फलोत्प्रेक्षा । एवं वाच्योत्प्रेक्षावर्गं प्रदर्श्य, गम्योत्प्रेक्षां दर्शयति—**एता एवेति** । वाच्या एवोत्प्रेक्षाः व्यञ्जकशब्दापोद्धारे गम्योत्प्रेक्षा इत्यर्थः । तामेवोदाहरणमुखेन दर्शयति—**त्वत्कीर्तिरिति** । अत्र, कीर्तौ स्वतस्सिद्धस्वर्गङ्गाप्रवेशे त्रैलोक्यभ्रमणजनितश्रान्तिर्हेतुत्वेनोत्प्रेक्ष्यते । तत्र श्रान्तेवेति इवशब्दाप्रयोगादेषा गम्या । यथा वा—भगवन्तरायसचिवस्य 'शशलक्ष्मणि रोहिणीदृगम्भोरुहलग्नाञ्जनबिन्दुतां विभाव्य । अलिनादमिषान्मिथो वदन्त्यो विहसन्ति स्म सलीलमुत्पलिन्यः ॥' अत्र, परस्परसल्लापपूर्वकहासक्रिया उत्पलिनीषूत्प्रेक्ष्यते । तत्र शशिकलङ्के रोहिणीनयनाञ्जनबिन्दुताभ्रान्तिर्निमित्तम् । तत्र सल्लापांशे 'अलिनादमिषा'दिति सापह्नवत्वं, इवादिशब्दाप्रयोगाच्च गम्यत्वम् । विस्तरभीत्या एतेष्वेवोदाहरणेषु व्यञ्जकशब्दापोद्धारेण सुज्ञानत्वाच्च नास्योदाहरणान्तराणि लिख्यन्त इत्याभिप्रायः । ननु, प्रतीयमानोत्प्रेक्षायाः कथमलङ्कारवर्गे परिगणनं, व्यङ्ग्यतया तस्याः ध्वनावन्तर्भावादिति चेन्न । व्यङ्ग्यत्वेऽपि नास्याः ध्वनावन्तर्भावः । यत्र हि उत्प्रेक्षाप्रतीतिमन्तरेण न वाक्यार्थनिर्वाहः तत्र प्रतीयमानाया अपि तस्या वाच्यार्थोपस्कारकत्वेन गुणीभावात् । न हि 'त्वत्कीर्तिर्भ्रमणश्रान्ते' त्यत्र श्रान्तेवेति इवार्थप्रतीतिमन्तरेण वाक्यार्थपरिपोषः । अतः प्रतीयमानोत्प्रेक्षायाः न ध्वनावन्तर्भावः । यत्र पुनः पर्यवसिते वाक्यार्थे शब्दशक्त्यर्थशक्तिभ्यामुत्प्रेक्षाभिव्यक्तिस्तत्रैवोत्प्रेक्षाध्वनिः । यथा—'केसेसु बलामोडिअ तेण समरम्मि जअसिरी गहिआ । जह कन्दराहि विहुरा तस्स दिढं कण्ठअम्मि संठविआ ॥ केशेषु बलात्कृत्य तेन समरे जयश्रीर्गृहीता । यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥' इति । वाक्यार्थबोधे पर्यवसिते जयश्रीकेशग्रहावलोकनोद्दीपितमदना इव कन्दरास्तान्विधुरान्कण्ठे गृह्णन्तीवेत्युत्प्रेक्षाध्वनिरर्थशक्त्युद्भवोऽनुरणनरूप इति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां उत्प्रेक्षाप्रकरणम् ॥ १२ ॥

अथातिशयोक्तिः—

**रूपकातिशयोक्तिः[1] स्यान्निगीर्याध्यवसानतः ।**
**पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति शिताश्शराः ॥**

विषयस्य स्वशब्देनोल्लेखनं विनापि विषयिवाचकेनैव शब्देन ग्रहणं विषयनिगरणम्। तत्पूर्वकं विषयस्य विषयिरूपतयाध्यवसानमाहार्यनिश्च-

---

अतिशयोक्तिं लक्षयति—**रूपकेति** । **निगीर्याध्यवसानत इति** । सार्वविभक्तिकस्तसिः । ततः प्रथमाविभक्त्यन्तं पदमिति निगीर्याध्यवसानमतिशयोक्तिरित्यर्थः पर्यवस्यति । लक्षणं परिष्कुर्वन् श्लोकं व्याचष्टे—**विषयस्येति** । विषयस्योपमेयस्य स्वशब्देन विषयवाचकशब्देन उल्लेखनं प्रतिपादनं तद्विना विषयिवाचकेन प्रतिपादनमित्यर्थः । उक्तलक्षणनिगरणपूर्वको विषयस्य विषय्यभेदगोचराहार्यनिश्चयो यत्र भवति तत्र तादृशनिश्चयविषयीभूतो विषय्यभेदोऽतिशयोक्तिरिति लक्षणं पर्यवसितम् । अत्र तादृशनिश्चयविषयीभूतविषय्यभेदस्य रूपकेऽपि सत्त्वादतिव्याप्तिः । अतो विषयनिगरणपूर्वक इति निश्चयविशेषणम् । तत्र विषयस्य स्ववाचकेन शब्देन प्रतिपादनेन नोक्तरूपं निगरणमस्तीति नोक्तदोषः । आहार्यपदानुपादाने अनाहार्यनिश्चयविषयीभूतविषय्यभेदस्य भ्रान्तिमत्यपि सत्त्वादतिव्याप्तिः । अतस्तदुपादानम् । न च तत्रोक्तरूपनिगरणाभावादेव नातिव्याप्तिरिति वाच्यम् । भ्रान्तिमति हि स्वारसिकानाहार्यभ्रान्तिनिबन्धनं हि चमत्कारकारितया कविसंरम्भगोचरः । तत्र च न विषयतावच्छेदकरूपेण विषयभानम् । तथात्वे भ्रान्तेरनाहार्यत्वानापत्तेरिति तत्रोक्तरूपविषयनिगरणसत्त्वेन अनाहार्यत्वविशेषणेनैव वारणीयत्वात् । निश्चयत्वं विहाय ज्ञानत्वोपादाने आहार्यसम्भावनाविषयविषय्यभेदस्योत्प्रेक्षायामपि सत्त्वेनातिव्याप्तिः । अतो निश्चयोपादानम् । ननु, विषयनिगरणाभावादेव तत्रोक्तदोषानिवारणात् निश्चयविशेषणवैयर्थ्यम् । आहार्यसम्भावनरूपायां तस्यां स्ववाचकशब्देन विषयप्रतिपादनात् । किं च 'स्त्रीभिः कामोऽर्थिभिः स्वर्द्रु'रिति नानाग्रहीतृकैकधर्मिकभ्रान्तिसमुदायरूपोल्लेखविशेषे उक्तरूपनिगरणाभावेनातिव्याप्तिविरहेऽपि 'नेदं मुखं मृगविमुक्तशशाङ्कबिम्बं' इत्याद्यपह्नुतौ विषयतावच्छेदकमुखत्वादेः निषिध्यमानतया उक्तरूपविषयनिगरणस्याहार्यनिश्चयविषयविषय्यभेदस्य च सत्त्वादतिव्याप्तिः । अपि च 'ध्वान्तस्य वामोरु! विचारणायां वैशेषिकं चारु मतं मतं नः । औलूकमाहुः खलु दर्शनं यत्क्षमं तमस्तत्त्वनिरूपणाय ॥' इत्यतिशयोक्तौ वैशेषिकदर्शने उलूकदृष्ट्यभेदाध्यवसायरूपायामव्याप्तिः । तत्र विषयतावच्छेदकेनोलूकदर्शनत्वेन उलूकदर्शनस्य प्रतिपादनेन उक्तनिगरणाभावात् । 'दाहोऽम्भःप्रसृतिंपचः प्रचयवान् बाष्पः प्रणालोचितः श्वासाः प्रेङ्खितदीप्रदीपकलिकाः पाण्डिम्नि मग्नं वपुः । किञ्चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थिति-

---

१. चंद्रालोके तु '**रूपकातिशयोक्तिश्चेद्रूप्यं रूपकमध्यगम्** ।' इति पाठः ।

वर्तते ॥' इत्यतिशयोक्तौ दाहादेरम्भःप्रसृतिम्पचत्वाद्यसम्बन्धेऽपि तत्सम्बन्धवर्णनरूपायां विषय्यभेदगोचराहार्यनिश्चयाभावादव्याप्तिः । अपि च 'अन्येयं रूपसम्पत्तिरन्या वैदग्ध्यधोरणी ।' इत्यत्राव्याप्तिरिति चेन्न । विषयविषयितावच्छेदकसामानाधिकरण्यानवगाह्याहार्यधीविषयविषय्यभेदत्वस्य तल्लक्षणत्वेन विवक्षितत्वात् । इत्थं च न पूर्वोक्तदोषः । तथा हि उत्प्रेक्षायां 'बालेन्दुवक्राणी'त्यत्र विषयविषयितावच्छेदकयोः नखक्षतत्वपलाशमुकुलत्वयोः सामानाधिकरण्यस्य भानेन तदनवगाहित्वाभावात् । 'नेदं मुख'मित्यपह्नुतावपि विषयितावच्छेदकमुखत्वादेर्निषिध्यमानतया तत्सामानाधिकरण्यानवगाहित्वादभेदप्रतिपत्तेरतिव्याप्तिपरिहारायानिह्नुतविषयत्वमपि विवक्षितम् । वक्ष्यमाणसापह्नवातिशयोक्तौ विषयिणोऽन्यत्र निह्नवेऽपि विषयस्यानिह्नवात् लक्षणसङ्गतिः । अपह्नवे च विषयस्य सर्वत्र निह्नवनियमान्नातिव्याप्तिः । प्रागुदाहृतश्लेषमूलातिशयोक्तावपि श्लेषमहिम्ना विषयिविषयतावच्छेदकयोर्वैशेषिकमतत्वोलूकदर्शनत्वयोरैक्यस्य प्रतीयमानतया तदुभयसामानाधिकरण्यानवगाहित्वसत्त्वान्नातिव्याप्तिः । एवम् 'उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयःकृतेन किम् । त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत् ॥' इत्यत्रापि विषयिविषयतावच्छेदकधर्मस्य उरोभूत्वस्यैक्यादेव न तत्सामानाधिकरण्यानवगाहित्वमिति न तत्राप्यतिव्याप्तिः । भ्रान्तिमति प्रागुक्तरीत्या आहार्यत्वाभावादेव नातिव्याप्तिः । आद्यातिशयोक्तेरेव एतल्लक्षणमिति 'दाहोऽम्भःप्रसृतिम्पच' इत्यादिसम्बन्धातिशयोक्त्यादौ नैतदव्यापनं दोषः । यद्वा, निरुक्तविषय्यभेदवृत्त्यलङ्कारविभाजकोपाधिमत्त्वं विवक्षणीयम् । आद्याभेदातिशयोक्तिरूपे निरुक्ताभेदे वर्तमानस्यालङ्कारविभाजकोपाधेरतिशयोक्तित्वस्य सर्वातिशयोक्तिसाधारण्यान्नोक्तदोषः । न च सर्वसाधारणातिशयोक्तित्वं दुर्वचमिति वाच्यम् । आलङ्कारिकव्यवहारसिद्धस्याखण्डोपाधिरूपस्य तस्य लक्ष्यतावच्छेदकत्वात् । अथ वा, प्रागुक्तमेवास्तु लक्षणम् । न च भेदकातिशयोक्त्यादौ तदव्यापनं दोषः । 'अन्येयं रूपसम्पत्ति' रित्यत्र प्रसिद्धरूपसम्पत्त्यभेदप्रतिपत्त्यसम्भवेऽपि कविकल्पितरूपसम्पत्त्यभेदप्रतिपत्तिसम्भवात् । 'दाहोऽम्भःप्रसृतिम्पच' इत्यादावपि प्रसिद्धदाहाभेदप्रतिपत्त्यभावेऽपि कविकल्पिताम्भःप्रसृतिम्पचत्वविशिष्टदाहाभेदप्रतिपत्तेः । 'अनयोरनवद्याङ्गि! स्तनयोर्जृम्भमाणयोः । अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥' इति सम्बन्धे असम्बन्धातिशयोक्तौ वास्तवस्तनजृम्भणस्य कविकल्पितेन वक्षस्स्थले मातुमक्षमेण जृम्भणेनाभेदः । 'अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ।' इति कार्यकारणपौर्वापर्यव्यतिक्रमरूपातिशयोक्तावपि वास्तवस्य मानशांत्यादिकार्यशैघ्र्यस्य कविकल्पितेन कारणोत्पत्त्यग्रिमकालप्रतीक्षणासहेन तच्छैघ्र्येणाभेदश्च प्रतीयत इति सर्वत्राभेदाध्यवसायसत्त्वान्न क्काप्यतिव्याप्तिः । एवं च विषयनिगरणपूर्वमित्यादि मूलं, विषयनिगरणमात्रं वा विषयस्य विषयिरूपतया आहार्यनिश्चयो वा अतिशयोक्तिरिति लक्षणद्वयपरतया व्याख्येयम् । तत्र विषयनिगरणं विषयतावच्छेदकविशिष्टस्य विषयिवाचकशब्देन प्रतिपादनम् । अपह्नुतावतिव्याप्तिवारणाय विशिष्टान्तविशेषणं बोध्यम् । द्वितीयलक्षणमपि विषयस्य विषयिरूपतया विषयिधर्मवत्तया विषयितावच्छेदकधर्मवत्तयैव । न तु वि-

यः । तस्मिन् सति रूपकातिशयोक्तिः । यथा— नीलोत्पलशरशब्दाभ्यां लोचनयोः कटाक्षाणां च ग्रहणपूर्वकं तद्रूपताध्यवसानम् ।
यथा वा—

'वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली ।
अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ
तत्रत्यानां सुलभममृतं सन्निधानात्सुधांशोः ॥'

अत्र वाप्यादिशब्दैर्नाभिप्रभृतयो निगीर्णाः । अत्रातिशयोक्तौ रू-

---

षयतावच्छेदकावगाहित्वमपि । ईदृशाहार्यनिश्चयविषयीभूतविषय्यभेदः अतिशयोक्तिरित्यर्थपरिष्कारेण सङ्गमनीयम् । अत एव आद्यलक्षणाभिप्रायेण 'विषयस्यानुपादानात् विषय्युपनिबध्यते । यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिजीविता ' इति विद्यानाथो लक्षणमवादीत् । सर्वस्वकारस्तु—अध्यवसायप्राधान्ये उत्प्रेक्षा अध्यवसितप्राधान्ये अतिशयोक्तिरित्युत्प्रेक्षातिशयोक्त्योर्लक्षणमाचचक्षे । तत्र विषयविषयितावच्छेदकसामानाधिकरण्यनिश्चयाभावविशिष्टविषय्यभेदप्रतिपत्तिरध्यवसायः । निश्चयाभावविशिष्टत्वं च विषय्यभेदस्य विशेषणताविशेषसम्बन्धेन विषयतासम्बन्धावच्छिन्नप्रतियोगिताकनिश्चयाभाववत्त्वम् । ईदृशाध्यवसायस्य उत्प्रेक्षायामिवादिशब्दप्रतिपाद्यसम्भावनारूपस्य विशेष्यतया विषयिणस्तत्रोपसर्जत्वात् गम्योत्प्रेक्षायामपि विषयिविशेषितोक्ताध्यवसायस्य विशेष्यस्य गम्यमानत्वान् अस्त्येव लक्षणानुगतिः । अतिशयोक्तौ तु, निरुक्ताध्यवसायस्य तत्र फलतया शब्देनोपनिबन्धनाभावात् प्राधान्याप्रसक्तेः, विषयतावच्छेदकानुपादानेन विषयितावच्छेदकरूपस्यैवाध्यवसीयमानतया अस्त्यध्यवसितप्राधान्यमिति लक्षणद्वयमपि सम्यगेवेति दिक् । उदाहरणे लक्षणं योजयति—**यथेति** । अत्र नीलोत्पलपदेनैव नीलोत्पलत्वरूपेण लोचनस्य विषयस्य प्रतीतेर्न विषयतावच्छेदकलोचनत्वसंस्पर्श इति तत्सामानाधिकरण्यानवगाहित्वमभेदप्रतिपत्तेरस्तीति लक्षणानुगतिरविकलेति भावः । उदाहरणान्तरमाह—**वापीति** । तत्र स्फुरतीति क्रियायाः प्रतिवाक्यमनुषङ्गेणान्वयः । तृतीयपादे द्विवचनान्ततया परं विपरिणामः । अत्र लक्षणं योजयति—**अत्रेति** । वाप्यादीत्यादिशब्देन गगनसूक्ष्मपद्यादिशब्दानां ग्रहणम् । 'नाभिप्रभृतय' इत्यत्र प्रभृतिशब्देन मध्यरोमराजिप्रभृतीनां ग्रहणम् । तेन अत्रातिशयोक्तिरलङ्कार इति भावः । अत्र वापीसूक्ष्मपद्याशैलशब्दनिर्दिष्टानां नाभिरोमराजिपयोधराणां प्रकृतानां स्फुरणरूपैकधर्मान्वयात् तुल्ययोगिताप्रतीतेः अतिशयोक्तितुल्ययोगितयोरेकवाचकानुप्रवेशसङ्करः । 'तत्रत्यानां सुलभममृत' मित्यत्र अमृतसौलभ्यस्य अमृतांशुसन्निधानेन समर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गं चेति द्रष्टव्यम् । ननु, लक्ष्यवाचकशब्दे रूपकाविशेषणं व्यर्थम् । अत एव काव्यप्रकाशकारादिभिरतिशयोक्तिरित्येव लक्ष्यनिर्देशः कृत इत्यत आह—**अत्रेति** ।

पकविशेषणं रूपके दर्शितानां विधानामत्रापि सम्भवोऽस्तीत्यतिदेशेन प्रदर्शनार्थम् । तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यं द्रष्टव्यम् । तत्राप्याधिक्यन्यूनताविभागश्चेति सर्वमनुसन्धेयम् ।

यथा वा—

'[1]समाबद्धग्रासैरुपवनचकोरैरनुसृतां
　किरन् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
　गनाकाशे कोऽयं गलितहरिणश्शीतकिरणः ॥'

अत्र 'कोऽयं गलितहरिण' इत्युक्त्या प्रसिद्धचन्द्राद्भेदस्तत उत्कर्षश्च गर्भितः । एवमन्यत्राप्यूहनीयम् ।

**[2]यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता ।**

---

स्वोक्तानां रूपकभेदानां अतिशयोक्त्युदाहरणेषु बहुलमुपलम्भादिहापि ते भेदास्सम्भवन्तीति प्रदर्शनार्थतया रूपकविशेषणस्य न वैयर्थ्यमित्यर्थः । एतदेव स्पष्टयति—**तेनेति** । प्राक्तनमालोकगतमुदाहरणं मौलं च अनुभयाभेदातिशयोक्तेरिति द्रष्टव्यम् । न्यूनाभेदातिशयोक्तिर्यथा—— 'कमलमनम्भसि कमले कुवलयमेते च कनकलतिकायाम् । सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्' इति ॥ अत्र मुखे प्रसिद्धकमलाभेदप्रतीतेः पूर्वावस्थागताम्भोवैधुर्योक्तेश्च न्यूनाभेदातिशयोक्तिः । 'अयमिन्दुस्सदापूर्णो लताग्रे परिदृश्यते । निर्जरैः पीयमानोऽपि यः कदाचिन्न हीयते ॥' अत्र कामिनीवदने प्रसिद्धचन्द्राभेदाध्यवसायात् सदा पूर्णत्वोक्त्या आधिक्यविभावनाच्च अधिकाभेदातिशयोक्तिः । अधिकताद्रूप्यातिशयोक्तिमुदाहरति—**समाबद्धेति।** नन्वत्र प्रसिद्धचन्द्राद्भेदप्रतीत्यभावात् कथमियं ताद्रूप्यातिशयोक्तिरित्यत आह——**अत्रेति।** **उत्कर्षश्चेति** । कलङ्कराहित्योक्तेरिति भावः । 'जाता लता हि शैले जातु लतायां न जायते शैलः । सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥' इत्यत्र वनिताङ्गयष्टेः 'सम्प्रति तद्विपरीत'मिति वैपरीत्योक्त्या प्रसिद्धलताभेदप्रतीतेः उत्कर्षन्यूनतयोरविभावनाच्च अनुभयताद्रूप्यातिशयोक्तिः । 'असुधासागरजातः शीतद्युतिरेष भाति तन्वङ्ग्याः । इन्दीवरयुगलेन च तत्रत्येन स्मरो जगज्जयति ॥' इत्यत्र न्यूनताद्रूप्यातिशयोक्तिर्द्रष्टव्येत्यभिप्रेत्याह **एवमिति** । अस्या एवातिशयोक्तेः अपह्नुतिगर्भत्वकृतं कञ्चन भेदं प्रतिपादयति——**यद्य-**

---

१. 'सुधाबद्धग्रासै'रिति पाठांतरम् । इदं पद्यं, विद्धसालभञ्जिकाख्यायां नाटिकायां स्फटिकप्राकारशिखरगतां मृगाङ्कावलीनालोकयतो राज्ञो विदूषकं प्रत्युक्तिः । २. अयं भेदश्चंद्रालोके न दृश्यते । किं तु अलङ्कारसर्वस्वकारादिमतानुसारेण मूलकृत्कल्पित इति वेदितव्यम् ।

**त्वत्सूक्तिषु सुधा राजन् ! भ्रान्ताः पश्यन्ति तां विधौ ॥**

अत्र त्वत्सूक्तिमाधुर्यमेवामृतमित्यतिशयोक्तिः चन्द्रमण्डलस्थममृतं न भवतीत्यपह्नुतिगर्भा ।

यथा वा—

'मुक्ताविद्रुममन्तरा मधुरसः पुष्पं परं भ्रूर्वहं
प्रालेयद्युतिमण्डले खलु तयोरेकासिका नार्णवे ।
तच्चोदञ्चति शङ्खमूर्ध्नि न पुनः पूर्वाचलाभ्यन्तरे
तानीमानि विकल्पयन्ति त इमे येषां न सा दृक्पथे ॥'

अत्राधररस एव मधुरस इत्याद्यतिशयोक्तिः पुष्परसो मधुरसो न भवतीत्यपह्नुतिगर्भा ।

अलङ्कारसर्वस्वकृता स्वरूपोत्प्रेक्षायां वापह्नवत्वमुदाहृतम् ।
'गतासु तीरं तिमिघट्टनेन ससम्भ्रमं पौरविलासिनीषु ।
यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति शिप्रा ॥' इति ॥

ततस्त्वियानत्र भेदः यत्तत्र शुद्धापह्नुतिगर्भत्वम् । यत्र फेनततित्वमपह्नुतं तत्रैवाट्टहासत्वोत्प्रेक्षणात् । इह तु पर्यस्तापह्नुतिगर्भत्वम् । इन्दुमण्डला-

---

**पह्नुतीति** । एतदेवोदाहरणे योजयति—**अत्रेति** । सूक्तिमाधुर्यस्य विषयस्य निगरणेन सुधाभेदाध्यवसायादतिशयोक्तिः । भ्रान्तदर्शनोक्त्या चन्द्रमण्डलस्थममृतं न भवतीति प्रतीतरपह्नुतिगर्भतेति भावः । **मुक्ताविद्रुममिति** । अत्राधररसे प्रसिद्धमधुरसाभेदाध्यवसायादनुभयाभेदातिशयोक्तिरित्याह—**अत्रेति** । नन्वतिशयोक्ताविदं सापह्नवत्वं कैरपि प्राचीनैर्नोदाहृतमित्याशङ्क्य, लक्ष्यस्य तथाविधस्य प्राचुर्यात् स्वरूपोत्प्रेक्षायां सर्वस्वकृताऽपह्नवोक्तेः तुल्यन्यायेनात्रापि तत्सम्भवतीत्यालोके अस्यां सापह्नवत्वाभिधानं युक्तमेवेत्यभिप्रेत्य सर्वस्वकारमतमाह—**अलंकारेति** । **गतासु तीरमिति** । अत्र तीरगमनस्य तिमिघट्टनेन समर्थनात्काव्यलिङ्गम् । उत्तरार्धे शिप्रायामट्टहाससम्भावनरूपोत्प्रेक्षेति तयोस्संसृष्टिः । **फेनततिच्छलेनेति** । नेयं फेनततिरित्यपह्नवप्रतीतेः सापह्नवत्वमित्यवधेयम् । ननु, सर्वस्वकृता शुद्धापह्नुतिगर्भत्वमेवोक्तमुत्प्रेक्षायां, न तु पर्यस्तापह्नुतिगर्भत्वमित्याशङ्क्याह—**ततस्त्वियानिति** । तथा च तत्र शुद्धापह्नुतिगर्भत्वकथनस्य इतरापह्नुतिगर्भत्वोपलक्षणत्वाल्लक्ष्यप्राचुर्याच्च पर्यस्तापह्नुतिगर्भत्वमस्या युक्तमेवेति भावः । उत्प्रेक्षायां शुद्धापह्नुतिगर्भत्वोक्तेरुप-

दावपह्नुतस्यामृतादेः सूक्त्यादिषु निवेशनात् । इदं च पर्यस्तापह्नुतिगर्भत्वमुत्प्रेक्षायामपि सम्भवति ।

तत्र स्वरूपोत्प्रेक्षायां यथा—

'जानेऽतिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम् ।
द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥'

अत्र प्रसिद्धबिम्बफले बिम्बतामपह्नुत्यातिरागेण निमित्तेन दमयन्त्यधरे तदुत्प्रेक्षा पर्यस्तापह्नुतिगर्भा । हेतूत्प्रेक्षायां तद्गर्भत्वं प्राग्लिखिते हेतूत्प्रेक्षोदाहरण एव दृश्यते । तत्र च अन्धकारेष्वान्ध्यहेतुत्वमपह्नुत्यान्यत्र तन्निवेशितम् ।

फलोत्प्रेक्षायां यथा—

'रवितप्तो गजः पद्मान् तद्गृह्यान् बाधितुं ध्रुवम् ।
सरो विशति न स्नातुं गजस्नानं हि निष्फलम् ॥'

अत्र गजस्य सरःप्रवेशं प्रति फले स्नाने फलत्वमपह्नुत्य पद्मबाधने[1] सन्निवेशितम् । अलमनया प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः ।

---

लक्षणतां पर्यस्तापह्नुतिगर्भोत्प्रेक्षोदाहरणेन स्पष्टयति—**इदं चेति** । तत्र स्वरूपोत्प्रेक्षायामपह्नुतिगर्भत्वमुदाहरति—**जानेऽतिरागादिति** । अत्र दमयन्त्यधरे अतिरागेण निमित्तेन बिम्बफलतादात्म्योत्प्रेक्षा फले बिम्बत्वापह्नवात्सापह्नवा । हेतूत्प्रेक्षायां सापह्नवत्वं दर्शयति—**हेतूत्प्रेक्षाया इति** । यथा वा 'मुग्धस्स मोहात्सुभगान्न देहाद्दद्ध्वद्भ्रूरचनाय चापम् । भ्रूभङ्गजेयस्तव यन्मनोभूरनेन रूपेण यदा तदासीत् ॥' अत्र मन्मथस्य मुग्धपदवाच्यत्वे वस्तुतो हेतोस्सौन्दर्यस्य हेतुत्वमपह्नुत्य दमयन्तीभ्रूरचनार्थनिजचापदानकृतमौढ्यं हेतुत्वेनोत्प्रेक्षितम् । फलोत्प्रेक्षायां तदाह—**रवितप्त इति** । अत्र गजगतसरःप्रवेशस्य स्नानफलत्वमपह्नुत्य रविपक्षीयकमलबाधनं फलत्वेनोत्प्रेक्षितामिति सापह्नवफलोत्प्रेक्षा । गजतापकर्तुस्तपनस्य प्राबल्यात् तं बाधितुं अशक्तो गजस्तन्मित्रभूतकमलवर्गमबाधतेति प्रतीतेः प्रत्यनीकालङ्कारः । तदुत्थापिता फलोत्प्रेक्षेति तयोरङ्गाङ्गिभावसङ्करः । **प्रसक्तानुप्रसक्त्येति** । अतिशयोक्तिसापह्नवत्वं प्रकृतम् । तत्प्रदर्शनेन स्वरूपोत्प्रेक्षायां सर्वस्वकारोक्तं प्रदर्शितम् । तदनुप्रसक्तं हेतुफलोत्प्रेक्षयोस्सापह्नवत्वमिति रीत्या प्रसक्तानुप्रसक्तिः ।

---

1. 'स्नानं फलत्वेनापह्नुत्य' इति **क.ख.घ.** पाठः ।

**भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् ।**
**अन्यदेवास्य गाम्भीर्यमन्यद्धैर्यं महीपतेः ॥**

अत्र लोकप्रसिद्धगाम्भीर्याद्यभेदेऽपि भेदो वर्णितः ।

यथा वा—

'अन्येयं रूपसम्पत्तिरन्या वैदग्ध्यधोरणी ।
नैषा नलिनपत्राक्षी सृष्टिस्साधारणी विधेः ॥'

**सम्बन्धातिशयोक्तिस्स्यादयोगे योगकल्पनम् ।**
**सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥**

यथा वा—

'कतिपयदिवसैः क्षयं प्रयायात् कनकगिरिः कृतवासरावसानः ।
इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥'

अत्र चक्रवाक्यास्सवित्रस्तमयकारकमहामेरुक्षयसम्भावनाप्रयुक्तसन्तोषासम्बन्धेऽपि तत्सम्बन्धो वर्णितः ।

**योगेऽप्ययोगोऽसम्बन्धातिशयोक्तिरितीर्यते ।**
**त्वयि दातरि राजेन्द्र! स्वर्द्रुमान्नाद्रियामहे ॥**

---

भेदकातिशयोक्तिमाह—**भेदकेति** । भेदएव भेदकः । स्वार्थिकः कप्रत्ययः । तदपि वर्ण्यमानभेदपरम् । तथा चाभेदे सत्यपि भेदवर्णने वर्ण्यमानभेदरूपातिशयोक्तिरित्यर्थः। तत्रान्यदेवेत्युदाहरणम् । तत्र लक्षणं योजयति—**अत्रेति** । एवमनयाऽतिशयोक्त्या वर्णनीयमहीपतेरितरमहीपतिभ्यो व्यतिरेको ध्वन्यत इत्यलङ्कारेणालङ्कारध्वनिः । अत्रैवोदाहरणान्तरमाह—**अन्येयमिति** । अत्र प्रसिद्धरूपसम्पत्तितो वर्णनीयवनितारूपसम्पत्तेरभेदेऽपि भेदवर्णनात् भेदातिशयोक्तिः । वर्णनीयवनितायाः विधिसृष्टित्वनिषेधेन विलक्षणरूपसम्पत्त्यादेः समर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गम् । अनयोश्चाङ्गाङ्गिभावसङ्करः । सम्बन्धातिशयोक्तिं लक्षयति—**सम्बन्धेति** । असम्बन्धे सम्बन्धकल्पनमित्यर्थः । उदाहरणे सौधाग्राणां विधुमण्डलासम्बन्धेऽपि सम्बन्धवर्णनात् स्पष्टो लक्षणानुगम इति ग्रन्थकृता न विवृतमुदाहरणम् । उदाहरणान्तरमाह—**कतिपयेति** । अत्र लक्षणं योजयति—**अत्रेति** । अनया चातिशयोक्त्या रुद्रनरपतेः पुरातनदातृभ्यो व्यतिरेकप्रतीतेः व्यतिरेकध्वनिरिति द्रष्टव्यम् । असम्बन्धातिशयोक्तिं लक्षयति—**योगेऽपीति** । अक्रमातिशयोक्तिं लक्षयति—अ-

---

१. चंद्रालोके '**भेदकातिशयोक्तिस्स्यात्तस्यैवान्यत्वकल्पनम् । अहो अन्यैव लावण्यलीला बालाकुचस्थले ॥**' इति पाठः । २. अयमपि मूलकृत्कल्पित एव ।

अत्र स्वर्द्रुमेष्वादरसम्बन्धेऽपि तदसम्बन्धो वर्णितः ।

यथा वा—

'अनयोरनवद्याङ्गि! स्तनयोर्जृम्भमाणयोः ।

अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥'

**अक्रमातिशयोक्तिस्स्यात्सहत्वे हेतुकार्ययोः ।**

**आलिङ्गन्ति समं देव! ज्यां शराश्च पराश्च ते ॥**

अत्र यदा मौर्व्यां शरसन्धानं कृतं तदानीमेव शत्रवः क्षितौ निपतन्तीति हेतुकार्ययोस्सहत्वं वर्णितम् ।

यथा वा—

'मुञ्चति मुञ्चति कोशं भजति च भजति प्रकम्पमरिवर्गः ।

हम्मीरवीरखड्गे त्यजति त्यजति क्षमामाशु ॥'

अत्र खड्गस्य कोशत्यागादिकाल एव रिपूणां धनगृहत्यागादिर्वर्णितः ।

**चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।**

**यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥**

---

**क्रमेति** । कार्यकारणयोस्तुल्यकालत्वे अक्रमातिशयोक्तिरित्यर्थः । सर्वस्वकारस्तु—कार्यकारणपौर्वापर्यव्यतिक्रमरूपातिशयोक्तिं पञ्चमीं लक्षयित्वा पौर्वापर्यव्यतिक्रमस्य कार्यकारणयौगपद्यकार्यपूर्ववृत्तित्वाभ्यां द्वैविध्यादिमामतिशयोक्तिं पञ्चमातिशयोक्त्यवान्तरभेदतया व्याचख्यौ । लक्ष्ये लक्षणं योजयति—**अत्र यदेति** । शरसन्धानसमकालमेव शत्रवः क्षितौ पतिता इति ज्यामालिङ्गन्तीति ज्याशब्दश्लेषमहिम्ना मौर्वीसम्बन्धक्षितिपतनयोस्तुल्यकालत्वप्रतीतेरित्यर्थः । शराणां परेषां च आलिङ्गन्तीत्येकक्रियान्वयेन तुल्ययोगितालङ्कारः । तयोरेकवाचकानुप्रवेशसङ्करः । उदाहरणान्तरमाह—**यथा वेति** । अत्र मुञ्चतीत्येकं पदं सप्तम्यन्तं खड्गविशेषणम् । एवमुत्तरत्रापि बोध्यम् । द्वितीयं क्रियापदं अरिवर्गान्वयि । अत्र धनगृहत्यागखड्गकोशत्यागादेः कार्यकारणभूतस्य यौगपद्याभिधानात् अक्रमातिशयोक्तिः स्फुटेत्याह—**अत्रेति** । अत्र 'मुञ्चति भजति त्यजती'त्यनेकक्रियाणां अरिवर्गैककारकान्वयेन यौगपद्यप्रतीतेः समुच्चयालङ्कारः । चपलातिशयोक्तिं लक्षयति—**चपलेति** । हेतुप्रसक्तिमात्रेण हेत्वभावेऽपि कार्यवर्णनं चपलातिशयोक्तिरित्यर्थः । उदाहरणे नायकप्रवासाभावेऽपि यास्यामीति प्रवासप्रसक्तिमात्रश्रवणे नायिकांगुलीयकस्य वलयभा-

---

१. चंद्रालोके '**अक्रमातिशयोक्तिस्स्यात् युगपत्कार्यकारणे**' इति पाठः ।

अत्र नायकप्रयाणप्रसक्तिमात्रेण योषितोऽतिकार्श्यं कार्यमुखेन दर्शितम्।

यथा वा—

'आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं
लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः ।
अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं
हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते ॥'

यथा वा—

'यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः ।
गलितानि पुरो वलयान्यपराणि पुनस्तथैव दलितानि ॥'

**अत्यन्तातिशयोक्तिस्स्यात्पौर्वापर्यव्यतिक्रमे ।**
**अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥**

---

वो वर्णितः । तेनाङ्गकार्श्यं व्यञ्जितमिति कार्श्यरूपकार्यस्य हेतुप्रसक्तिमात्रेणोपपत्तिर्वर्णितेति लक्षणानुगमः स्पष्ट इत्याह—**अत्रेति** । व्यङ्ग्येन वनिताङ्गकार्श्येन ऊर्मिकावलयभावसमर्थनात् काव्यलिङ्गालङ्कारध्वनिः । किमिति कार्श्यं तवेदमाकस्मिकमिति पृष्टे कार्श्यकार्यस्य निबन्धनात् कार्यनिबन्धनाप्रस्तुतप्रशंसा । तस्या अतिशयोक्तेश्चाङ्गाङ्गिभावसङ्करः । उदाहरणान्तरमाह—**आदातुमिति** । अत्रापि पुष्पादीनां हस्ताग्रलौहित्यादिकारणानामभावेऽप्यादानोद्देशेन कुसुमेक्षणादिसम्पत्तिमात्रेण हस्ताग्रलौहित्याद्युक्तेः उक्तातिशयोक्तिरित्यर्थः । अत्र पादचतुष्टयप्रतिपादितानां अतिशयोक्तीनां परस्परनिरपेक्षतया संसृष्टिः । **यामि न यामीति** । अत्र पुरोवलयाव्रंसनपाश्चात्यवलयदलनरूपकार्ययोः प्रवासतदभावरूपकारणप्रसक्तिमात्रेण सम्पत्तिवर्णनात् उक्तातिशयोक्तिद्वयस्य संसृष्टिरिति द्रष्टव्यम् । अत्र प्रसिद्धप्रवासादिकारणाभावेऽपि वनिताङ्गकार्श्यादिरूपकार्योत्पत्तिवर्णनात् 'विभावनालङ्कारेणैव चमत्कारात् न चपलातिशयोक्तिर्नामातिरिक्तोऽलङ्कार उररीकार्यः । नह्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ।' इति लाक्षारसासेचनरूपकारणविरहेऽपि रक्तिमरूपकार्योत्पत्तिवर्णनरूपविभावनातो नात्र वैलक्षण्यं पश्यामः । इयांस्तु भेदः । यत्तत्र कारणाभावो वाच्यः । अत्र कारणप्रसक्त्युक्त्या कारणाभावो गम्यत इत्येतेनैवाभिप्रायेण प्राञ्चो नैनां व्यवजहुरिति । अत्यन्तातिशयोक्तिमाह—**अत्यन्तेति** । **तत्पौर्वापर्येति** । तच्छब्देन चपलातिशयोक्तिलक्षणश्लोकगतहेतुकार्यपदोपस्थितयोर्हेतुकार्ययोः परामर्शेन तयोर्हेतुकार्ययोः पौर्वापर्यस्य व्यतिक्रमे [1]त्यागे सति उक्तातिशयोक्तिरित्यर्थः । उदाहरणयोः प्रियानुनयकरा-

---

१. 'व्यतिक्रमे वैपरीत्ये सति' इति ख. पाठः ।

यथा वा—

'कवीन्द्राणामासन् प्रथमतरमेवाङ्गणभुव-
श्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुराः ।
अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः
कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥'

एतास्तिस्रोऽप्यतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अतिशयोक्तिप्रकरणम् ॥१३॥

अथ तुल्ययोगिता—

**वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता ।**
**संकुचन्ति सरोजानि स्वैरिणीवदनानि च ॥**

---

क्षपतनरूपकारणयोः पश्चाद्भावस्य मानशान्तिगजान्तलक्ष्मीव्याप्त्योः कार्ययोः प्राथम्यवर्णनात् लक्षणसंगतिः स्पष्टा । नन्वेतासु तिसृषु किंकृतश्चमत्कार इत्यत आह—**एता इति** । अक्रमचपलात्यन्तातिशयोक्तय इत्यर्थः । **कार्येति** । कारणसम्पत्त्यग्रिमकालप्रतीक्षासहत्वरूपशैघ्र्यावगमफलार्थतया यौगपद्यादिवर्णनस्य चमत्कारकारितया एतासामलंकृतित्वं युक्तमिति भावः । अत्र सर्वास्वेतासु अतिशयोक्तित्वं नैकं वक्तुं शक्यम् । परस्परविलक्षणतयैव तासां लक्षणात् । तथापि तावदन्यतमत्वं वा काव्यमीमांसकानिदम्प्रथमव्यवहारसिद्धाखण्डधर्मो वा तत् । अत एव तादृशधर्मगर्भलक्षणं प्रागभिहितमित्यनुसन्धेयम् । काव्यप्रकाशे तु 'यद्यर्थोक्तौ च कल्पन'मिति यद्यर्थस्य यदिशब्देन चेच्छब्देन वा उक्तावसम्भविनोऽर्थस्य यत्कल्पनं सा काचिदतिशयोक्तिरित्यतिशयोक्तिभेदं लक्षयित्वा,'राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः । तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥' इत्युदाहृतम्॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अतिशयोक्तिप्रकरणम् ॥ १३ ॥

एवमभेदाश्रयानलङ्कारान् व्युत्पाद्य गम्यमानौपम्याश्रयालङ्कारान्वक्तुमादौ पदार्थगतालङ्कारद्वयमाह—**वर्ण्यानामिति** । **इतरेषामिति** । अवर्ण्यानामित्यर्थः । धर्मो गुणक्रि-

---

१. अयमत्र सङ्ग्रहः—प्राचीनास्तु 'सम्बन्धे असम्बंधः, असम्बंधे सम्बंधः, भेदे अभेदः, अभेदे भेदः, कार्यकारणपौर्वापर्यव्यतिक्रमः, इत्येतत्पञ्चकान्यतमत्वमतिशयोक्तिसामान्यलक्षणमभिदधुः । प्रकाशकारादयस्तु, विषयस्य विषयिणा निगीर्याध्यवसानम्, तस्यैवान्यत्वम्, यद्यादिशब्दैरसम्भविनोऽर्थस्य कल्पनम्, कार्यकारणपौर्वापर्यविपर्ययश्च, इत्येतदन्यतमत्वमतिशयोक्तित्वं वदंति । नव्यास्तु, 'निगीर्याध्यवसानमेवातिशयोक्तिः, प्रभेदांतरं तु अनुगतरूपाभावादलङ्कारांतरमेवे'ति मन्यंते । २. चन्द्रालोके **'क्रियादिभिरनेकस्य तुल्यता तुल्ययोगिता । संकुचन्ति सरोजानि स्वैरिणीवदनानि च ॥ प्राचीना-**

त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥

प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता । 'संकुचन्ती'ति प्रस्तुततुल्ययोगिताया उदाहरणम् । अत्र प्रस्तुतचन्द्रोदयकार्यतया वर्णनीयानां सरोजानां प्रकाशभीरुस्वैरिणीवदनानां च सङ्कोचरूपैकक्रियान्वयो दर्शितः । उत्तरश्लोके नायिकासौकुमार्यवर्णने प्रस्तुते अवर्णनीयानां मालत्यादीनां कठोरतारूपैकगुणान्वयः । यथा वा—

'सञ्जातपत्रप्रकरान्वितानि समुद्वहन्ति स्फुटपाटलत्वम् ।
विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानि च वृद्धिमीयुः ॥'
'नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥'

अत्र ग्रीष्मवर्णने तदीयत्वेन प्रस्तुतानां दिनानां पद्मानां चैकक्रियान्वयः । ऊरुवर्णने तु अप्रस्तुतानां करिकराणां कदलीविशेषाणां चैकगुणान्वयः ।

हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता ।

---

यारूपतया द्विविधो विवक्षितः । तुल्यं युगपत् योगिता अन्वयोऽस्यामित्यन्वर्थं तुल्ययोगितानाम । उक्तार्थपरतयैव कारिकां विवृण्वन् उदाहरणयोर्लक्षणानुगमं दर्शयति—**प्रस्तुतानामिति** । उदाहरणयोर्भेदं दर्शयति—**संकुचन्तीति** । निशामुखे कमलसङ्कोचस्य स्वैरिणीवदनसङ्कोचस्य च प्रस्तुतत्वात् प्रस्तुततुल्ययोगिता । उत्तरश्लोके मालत्यादीनामप्रस्तुतत्वं स्फुटमेव । स्वयमुदाहरणान्तरमाह—**सञ्जातेति** । अत्र ग्रीष्मवर्णनप्रस्तावे दिनानां पद्मानां च वृद्धेर्वर्णनीयत्वेन प्रस्तुतत्वात् तेषां वृद्धिप्राप्तिरूपैकक्रियान्वयात् प्रस्तुततुल्ययोगिता । अत्र गम्यौपम्यप्रयोजकसाधारणधर्मप्रतिपादकानि श्लिष्टविशेषणानि सञ्जातपत्रेत्यादीनीति पूर्वोदाहरणाद्विच्छित्तिविशेषः । द्वितीयोदाहरणे ऊरुवर्णनप्रस्तावे नागेन्द्रहस्तादीनां अप्रस्तुतत्वात् तेषामुपमानबाह्यत्वरूपैकगुणान्वयादप्रस्तुततुल्ययोगिता । उपमानबाह्यत्वस्य समर्थनीयस्य त्वगादिगतकार्कश्यादिना समर्थनात् काव्यलिङ्गम् । तदुत्थापिता च तुल्ययोगितेति तयोरङ्गाङ्गिभाव इत्यवधेयम् । द्वितीयां तुल्ययोगितां लक्षयति—**हिताहित इति** । हितसहितोऽहितः हिताहितः तस्मिन्निति मध्यमपदलोपिसमासो द्रष्टव्यः ।

---

**चलच्चूडाग्रचुम्बिबिम्बे सुधाकरे**।, इति पाठः । क्रियादिभिरित्यत्र आदिना गुणो

**[1]प्रदीयते पराभूतिः मित्रशात्रवयोस्त्वया ॥**

अत्र हिताहितयोर्मित्रशात्रवयोरुत्कृष्टभूतिदानस्य पराभवदानस्य च श्लेषेणाभेदाध्यवसायाद्वृत्तितौल्यम् ।

यथा वा—

'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वत्र कटुरेव सः ॥'

अत्र 'वृश्चति सिञ्चत्यर्चती'त्यध्याहारैः वाक्यानि पूरणीयानि । पूर्वोदाहरणं स्तुतिपर्यवसायि । इदं तु निन्दापर्यवसायीति भेदः । इयं सरस्वतीकण्ठाभरणोक्ता तुल्ययोगिता ।

**गुणोत्कृष्टैस्समीकृत्य वचोऽन्या तुल्ययोगिता ।**
**लोकपालो यमः पाशी श्रीदश्शक्रो भवानपि ॥**

अत्र वर्णनीयो राजा शक्रादिभिः लोकपालत्वेन समीकृतः ।

यथा वा—

'सङ्गतानि मृगाक्षीणां तटिद्विलसितान्यपि ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥'

पूर्वत्र स्तुतिरिह तु निन्दा । इयं काव्यादर्शे दर्शिता ।

---

द्वद्वे द्विवचनापत्तेः । वृत्तिर्वर्तनं तत्तुल्यत्वमित्यर्थः । उदाहरणे मित्रशात्रवयोः पराभूतिर्दीयत इति श्लेषेण उत्कृष्टभूतिपराभवयोरैक्याद्वृत्तितौल्यमिति । लक्षणं योजयति—**अत्रेति** । इयं च श्लेषसङ्कीर्णा । तदसङ्कीर्णामुदाहरति—**यश्चेति** । तत्तद्वाक्योचितक्रियाध्याहारेण श्लोकं व्याकुर्वन् लक्षणानुगम दर्शयति—**अत्रेति** । तथाचोचितक्रियाध्याहारेण तत्तद्वाक्यार्थप्रतीतौ च्छेदकसेचकार्चकेषु अहितहितरूपेषु कटुत्वेन तुल्यताप्रतीतेर्लक्षणानुगमः स्पष्ट इति भावः । अस्याः सर्वस्वकारादिभिरनभिधानादपसिद्धान्त इत्याशङ्कयाह—**इयमिति**। तथा च सरस्वतीकण्ठाभरणे प्रतिपादनात् नापसिद्धान्त इति भावः । दण्ड्यभिमतां तुल्ययोगितामाह—**गुणोत्कृष्टैरिति** । अत्र 'यत्प्रायः श्रूयते यच्च तत्तादृगवगम्यते' इति वाक्यविदभिमतन्यायानुसारेण प्रसिद्धगुणोत्कृष्टसाम्यस्य वर्णनीये प्रतीतेः तुल्ययोगिताशब्दस्यान्वर्थताप्यस्तीति भावः । एतदेवोदाहरणे योजयति—**अत्रेति** । उदाहरणान्तरमाह—**संगतानीति** । पूर्वोदाहरणाद्विशेषमाह—**पूर्वत्रेति** । तथा च गुणोत्कृष्टैरिति ल-

---

गृह्यते । बहुत्वं व्यक्त्यभिप्रायमिति वेद्यम् । १. २. इमौ भेदौ चन्द्रालोके न दृश्येते ।

इमां तुल्ययोगितां सिद्धिरिति केचिद्व्यवजहुः । यदाह जयदेवः—

'सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेव हि विख्यातौ त्वं बलैर्जलधिर्जलैः ॥' इति ॥

मतान्तरेष्वत्र वक्ष्यमाणं दीपकमेव ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे तुल्ययोगिताप्रकरणम् ॥१४॥

अथ दीपकम्—

**वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः ।**
**मदेन भाति कलभः प्रतापेन महीपतिः ॥**

प्रस्तुताप्रस्तुतानामेकधर्मान्वयो दीपकम् । यथा कलभनरपालयोः प्रस्तुताप्रस्तुतयोर्भानक्रियान्वयः ।

---

क्षणे उत्कृष्टपदमपकृष्टोपलक्षणम् । तुल्यत्वावगतिहेतोः प्रायपाठस्य 'सङ्कुचन्ति मृगाक्षीणा'मित्यत्राविशेषादिति भावः । मतान्तरे अत्र समुदितप्रकृताप्रकृतैकधर्मान्वयात् वक्ष्यमाणं दीपकमिति द्रष्टव्यम् । इमामेव जयदेवादयः सिद्धिशब्देन व्यवजहुरित्याह—**इमामिति** । अस्मिन्नर्थे तदीयां कारिकां प्रमाणयति—**सिद्धिरिति** । ननु, मतान्तरे अस्यास्तुल्ययोगिताया अभावादुक्तोदाहरणेषु कोऽलङ्कार इत्यत आह—**मतान्तरेष्विति**। सर्वस्वकारादिमतेष्वित्यर्थः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां तुल्ययोगिताप्रकरणम् ॥ १४ ॥

दीपकं लक्षयति—**वदन्तीति** । समुदितानां वर्ण्यावर्ण्यानां एकधर्मान्वयो दीपकमित्यर्थः । समुदितानामिति विशेषणं तुल्ययोगितायां 'संकुचन्ती'त्यादावतिव्याप्तिपरिहारार्थम्। तेन प्रस्तुताप्रस्तुतान्यतरैकधर्मान्वयरूपायां तस्यां समुदितैकधर्मान्वयाभावान्नातिव्याप्तिः । लक्षणं व्याकुर्वन् उदाहरणे लक्षणानुगतिं दर्शयति—**प्रस्तुतेति** । कारिकायां मूले च वर्ण्यावर्ण्यानां प्रस्तुताप्रस्तुतानामित्यत्र च बहुवचनमविवक्षितम् । उदाहरणे कलभनृपयोर्द्वयोः एकधर्मान्वयेन दीपकोक्तेः । तुल्ययोगितालक्षणेऽपि एवैव रीतिरनुसन्धेया । न च तथापि 'चन्द्रो यथा भाति तथा मुखं च' 'पाण्ड्योऽयमंसार्पितलम्बहारः' इत्युपमायामपि प्रकृताप्रकृतयोश्चन्द्रमुखाद्योः भानरूपैकक्रियान्वयादतिव्याप्तिरिति वाच्यम् । औपम्यव्यञ्जकत्वेनैकधर्मान्वयस्य विवक्षितत्वात् । तत्र यथेवादिशब्दोपादानेन उपमाव्यक्तेरनपेक्षणात्

---

१. इयं कारिका चन्द्रालोककृता जयदेवेन काव्यलक्षणप्रतिपादके तृतीयमयूखे प्रतिपादिता ।

२. चन्द्रालोके '**प्रस्तुताप्रस्तुतानां च तुल्यत्वे सति दीपकम् । मेधां बुधः सुधामिन्दुर्बिभर्ति वसुधां भवान् ॥**' इति पाठः ।

विशिष्टोपमाक्षिप्तविशेषणोपमायां एकदेशविवर्तिन्यां च तस्यामुपमाया गम्यत्वेऽपि तद्व्यञ्जकैकधर्मान्वयाभावान्नातिप्रसङ्गः । एवं तुल्ययोगितालक्षणेऽपि विशेषणमेतदनुसन्धेयम् । इतरथा 'इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु । रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥' इत्यत्र समराङ्गतया समरभूमौ रक्षःपतनस्येव रजसां तच्छोणितनदीषु पतनस्यापि वर्णनीयत्वेन प्रस्तुतानामेव रक्षोरजसां पातरूपैकधर्मान्वयादतिव्याप्तिप्रसङ्गात् । एवं 'त्वत्कीर्तेः पुरतो भाति ज्योत्स्ना श्यामान्धकारवत् ।'इत्यत्र कीर्तिवर्णने ज्योत्स्नान्धकारयोर्द्वयोरवर्णनीयतया तयोर्भानरूपैकधर्मान्वयादतिव्याप्तिरुद्विशेषणानुपादाने अनुसन्धेया । न च तथापि 'त्रातः काकोदरो येन द्रोग्धापि करुणात्मना । पूतनामारणख्यातः स वोऽस्तु शरणं प्रभुः ॥' इति प्रकृतश्लेषे 'अब्जद्वयमिदं भाति हरिणाहितसक्तिकम् ।' इत्यप्रकृतश्लेषे च प्रकृतयोरामकृष्णयोरप्रकृतयोः कमलचन्द्रमसोश्च शरणत्वभानरूपैकधर्मान्वयात्तत्रातिव्याप्तितादवस्थ्यमिति वाच्यम् । श्लेषस्थले अर्थद्वयस्य श्लेषभित्तिकाभेदाध्यवसायस्य सर्वसम्प्रतिपन्नत्वेन प्रस्तुतानेकगोचरस्याप्रस्तुतानेकगोचरस्य वा एकधर्मान्वयनिबन्धनस्य विवक्षितस्य तत्राभावात् । अत एव प्रस्तुतानामप्रस्तुतानां वेति लक्षणे बहुवचनमनेकत्वोपलक्षणमुपात्तम् । न च श्लिष्टविशेषणविन्यास एव धर्मद्वयस्य श्लेषभित्तिकाभेदाध्यवसायात् ऐक्यमभ्युपगतं, न तु श्लिष्टयोर्धर्मिणोरपीति वाच्यम् । प्रकृताप्रकृतश्लेषे उपमानोपमेयव्यवस्थापकयोः प्रकृतत्वाप्रकृतत्वयोः श्लिष्टधर्मिगतत्वेन प्रकृतधर्मिण्यप्रकृतार्थोपमायाः प्रतीत्या अभेदाध्यवसायकृतैक्याभावेऽपि प्रकृतश्लेषे अप्रकृतश्लेषे वा विनिगमनाविरहेण उपमानोपमेयव्यवस्थासम्भवेन उपमानुपपत्तेः । श्लेषमहिम्ना श्लिष्टधर्मिद्वयप्रतिपत्तौ सत्यां अनन्तरं व्यञ्जनया अर्थद्वयाभेदाध्यवसायसम्भवात् । इयांस्तु भेदः । एकत्रोपमाया व्यक्तिः अपरत्र रूपकव्यक्तिरिति । यदि तु 'द्वयेऽपि नागास्तन्वन्ति जिह्वान्तालेखनं मुहुः ।' इत्यत्र श्लिष्टाप्रकृतधार्मिकतुल्ययोगितायां अर्थद्वयस्य श्लेषभित्तिकाभेदाध्यवसायात् प्रस्तुताप्रस्तुतान्यतरानेकधर्मान्वयाभावात् अव्याप्तिरिति भाव्यते तदापि नानुपपत्तिः । वैयञ्जनिकबोधदशायामभेदाध्यवसायेऽपि प्राथमिकपदार्थोपस्थितिदशायां अर्थद्वयस्यैक्याभावेन अनेकप्रस्तुताप्रस्तुतान्यतरैकधर्मान्वयनिबन्धनसत्त्वात् उक्तश्लेषोदाहरणयोः प्रथमकक्ष्यागतधर्मिद्वयानेकत्वमादाय तुल्ययोगिताभ्युपगमेऽपि क्षतिविरहात् । तावता तयोस्सङ्करोपपत्तेः । न चैवमनेकविशेषणवैयर्थ्यम् । एकस्य प्रस्तुतस्याप्रस्तुतस्य वा एकधर्मान्वयस्थले 'विभाति चन्द्रो रजनीमुखेऽसौ' इत्यादावतिव्याप्तिवारणाय तद्विशेषणावश्यकत्वात् । न चैवमपि श्लिष्टधार्मिकतुल्ययोगितायां रूपकव्यक्त्यभ्युपगमे औपम्यव्यञ्जकैकधर्मान्वयाभावात् अव्याप्तिरिति वाच्यम् । रूपकव्यक्तावपि सादृश्यापरनाम्न औपम्यस्य व्यज्यमानतया औपम्यव्यञ्जकत्वस्य सत्त्वेनोक्तदोषाप्रसक्तेः । यत्तु 'त्रातः काकोदर' इत्यादिश्लेषे प्रथमं कृष्णधर्मिकशरणत्वादिवैशिष्ट्यावगाहिन्येका प्रतीतिः रामधर्मिकशरणत्वादिवैशिष्ट्यावगाहिनी द्वितीया प्रतीतिरिति लक्षणे विवक्षितायाः समूहालम्बनात्मकप्रतीतेः तत्राभावान्नातिव्याप्तिरिति, तन्न । श्लेषे हि अर्थद्वयस्य स्वस्वगोचराभिधाभ्यां क्रमेणोपस्थितावपि युगपदेव शाब्दबोधः । न तु शाब्दबोधयोः पौर्वापर्यम् । विनिगमनाविरहेण तदसम्भवात् युगपदुभ-

यथा वा—

'मणिश्शाणोल्लीढः समरविजयी हेतिदलितो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना ।
कलाशेषश्चन्द्रस्सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥'

अत्र प्रस्तुतानां नृपाणामप्रस्तुतानां मण्यादीनां च शोभैकधर्मान्वयः । प्रस्तुतैकनिष्ठस्समानो धर्मः प्रसङ्गादन्यत्रोपकरोति प्रासादार्थमारोपितो दीप इव रथ्यायामिति दीपसादृश्याद्दीपकम् । 'संज्ञायां च' इतीवार्थे कन् प्रत्ययः । यद्यपि

'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥'

---

योपस्थितौ तु सुतराम् । न च तात्पर्यग्रहस्य विनिगमकत्वमिति युक्तम् । प्रकृताप्रकृतश्लेषे तात्पर्यग्राहकस्य प्रकरणादेर्व्यवस्थिततया तत्सम्भवेऽपि प्रकृतश्लेषे अप्रकृतश्लेषे च तदसम्भवेन युगपदेव शाब्दबोधोपपत्तेरित्यलं प्रसक्तानुप्रसक्त्या । दीपकशब्दस्यान्वर्थतां वक्तुं तस्य व्युत्पत्तिमाह—**प्रस्तुतैकेति** । **प्रसंगादिति** । प्रस्तुततात्पर्येण निर्दिष्टस्य धर्मस्य तात्पर्यविषये अप्रकृते अन्वयप्रसङ्गः । ततः अन्यत्राप्रकृते उपकरोति स्ववैशिष्ट्यबोधप्रयोजको भवति । अत्र दृष्टान्तमाह—**प्रासादार्थमिति** । तथा च दीप इव दीपक इत्यस्मिन्नर्थे दीपकशब्दो व्युत्पन्न इति भावः । कुत एषा व्युत्पत्तिरित्यत आह—**संज्ञायां चेति** । 'इवे प्रतिकृतौ' इत्याधिकारपठितेनानेन सूत्रेणैव इवार्थे कन्प्रत्यये सति दीपकशब्दनिष्पत्तेः धर्मान्वये दीपसादृश्यलाभ इत्यर्थः । ननु, प्रस्तुतैकनिविष्टस्य धर्मस्य प्रसङ्गादन्यत्रोपकारकत्वं न युक्तम् । उभयत्र प्रस्तुताप्रस्तुतयोः युगपदेकधर्मान्वयेन अप्रस्तुतान्वयसमनन्तरभावित्वाभावेन प्रासङ्गिकत्वायोगादित्यभिप्रेत्य शङ्कते—**यद्यपीति** । **सुवर्णपुष्पामिति** । सुवर्णानि पुष्प्यतीति सुवर्णपुष्पा । तथाभूतां पृथिवीं शूरादयस्त्रयः पुरुषाः कुर्वन्तीत्यर्थः । अत्र सुवर्णानि पुष्प्यतीत्यर्थो बाधितः । पृथिव्यां तेन पुष्पसादृश्यात्सुलभसमृद्धिसम्भारभाजनता लक्ष्यते । तत्प्रयोजनं च शूरकृतविद्यसेवकानामितरजनेभ्यः प्राशस्त्यावगतिः । ततश्च पुष्पाणि यथा सुलभसमृद्धिभाजनानि तथैतेषां सुवर्णमित्यभिप्रायः । अत्र 'चिन्वन्ती'ति क्रियापदस्यैकत्वाद्युगपद्धर्मान्वयात् न प्रासङ्गिकता युज्यत इति भावः । युगपद्धर्मान्वयेऽपि तस्य धर्मस्य प्रस्तुतान्वयतात्पर्येणैव निर्दिष्टतया अप्रस्तुतान्वये तात्पर्याभावेन प्रासङ्गिकत्वोपपत्तेः । न हि यौगपद्यमात्रेण तस्य तद्धीयते । लोके रथ्याप्रासादयोः युगपदुपकुर्वतोऽपि दीपस्य रथ्योद्देशेन आरोपितत्वाभावेन प्रासङ्गिकत्वस्य सम्प्रतिपन्नत्वात् ।

इत्यत्र प्रस्तुताप्रस्तुतानां युगपद्धर्मान्वयः प्रतिभाति । 'मदेन भाति कलभ' इत्यत्र अप्रस्तुतस्यैव प्रथमं धर्मान्वयः । तथापि प्रासङ्गिकत्वं न हीयते । वस्तुगत्या प्रस्तुतोद्देशेन प्रवृत्तस्यैव वर्णनस्याप्रस्तुतेऽप्यन्वयात् । न हि दीपस्य रथ्याप्रासादयोर्युगपदुपकारकत्वेन जामात्रर्थं श्रपितस्य सूपस्यातिथिभ्यः प्रथमपरिवेषणेन च प्रासङ्गिकत्वं हीयते । तुल्ययोगितायां त्वेकं प्रस्तुतमन्यदप्रस्तुतमिति विशेषाग्रहणात् सर्वोद्देशेनैव धर्मोक्तिरिति विशेषः। अयं चानयोरपरो विशेषः । उभयोरनयोरुपमालङ्कारस्य गम्यत्वाविशेषेऽपि अत्राप्रस्तुतमुपमानं प्रस्तुतमुपमेयमिति व्यवस्थित उपमानोपमेयभावः । तत्र तु विशेषाग्रहणादैच्छिकस्स इति ॥

**त्रि[१]विधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ।**
**वर्षत्यंबुदमालेयं वर्षत्येपा च शर्वरी ॥**

---

किं बहुना । अनुद्देश्योपकारे प्रथमभाविन्यपि प्रासङ्गिकत्वं दृश्यते । जामात्रर्थं श्रपितस्य सूपस्य प्रथममतिथिभ्यः परिवेषणेन तदुपकारस्य प्राथम्येऽपि प्रासङ्गिकत्वाहानेः । एवं प्राथम्येऽपि प्रासङ्गिकत्वे किमु वक्तव्यं यौगपद्ये तत्सम्भवतीत्यभिप्रेत्य समाधत्ते—**तथापीति** । नन्वेवं तुल्ययोगितायामप्येकधर्मनिर्देशस्य एकार्थत्वेन इतरार्थत्वस्य प्रासङ्गिकत्वापत्तौ दीपकतुल्ययोगितयोरविशेषप्रसङ्ग इत्यत आह—**तुल्ययोगितायां त्विति** । एकस्य प्रस्तुतत्वं अपरस्याप्रस्तुतत्वमिति विशेषस्यागृह्यमाणतया सर्वोद्देशेन धर्मनिर्देशात् न तस्य प्रासङ्गिकत्वापत्तिः । प्रयाजादीनामिव दर्शादित्रिके तन्त्रतायां गृह्यमाणविशेषत्वं प्रयोजकम् । तच्च तत्राप्यस्तीति न प्रासङ्गिकत्वापत्त्या तयोरविशेषप्रसक्तिरिति भावः । एवं निर्देशवैषम्यादनयोर्विशेषमभिधाय व्यङ्ग्यवैलक्षण्यादप्यनयोर्विशेषस्सम्भवतीत्याह—**अयं चेति** । उपमाव्यञ्जकत्वस्योभयत्राविशेषेऽपि व्यवस्थितोपमाव्यञ्जकत्वं दीपके । तत्र तु ऐच्छिकोपमाव्यञ्जकत्वमिति वैषम्यमनयोरिति भावः । अत्र धर्मस्यादिमध्यान्तगतत्वेन त्रैविध्यमाकरे द्रष्टव्यम् । विस्तरभीतेर्नेहोच्यते ॥ आवृत्तिदीपकं लक्षयति—**त्रिविधमिति।** पदतदर्थयोर्व्यस्तयोस्समस्तयोश्च अनेकोपकारकतया दीपस्थानीययोरावृत्तौ त्रिविधमावृत्तिदीपकमित्यर्थः । एकक्रियाया अनेककारकान्वयवत् अनेककारकस्यावृत्तक्रियान्वयात् आवृत्तिदीपकमन्वर्थं नामेति भावः । अत्र पदावृत्तौ उत्तरार्धमुदाहरणम् । उत्तरश्लोके इतरयोरिति विभागः । अत्र 'वर्षती'ति क्रियापदस्य शर्वर्या वर्षवदाचरतीत्यर्थभेदात्पदावृत्तिदीपकम् ।

---

१. चन्द्रालोके **'आवृत्ते दीपकपदे भवेदावृत्तिदीपकम्। दीप्याग्निर्भाति**

**उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।**
**माद्यन्ति चातकास्तृप्ताः माद्यन्ति च शिखावलाः ॥**

दीपकस्यानेकोपकारक्षमतया दीपस्थानीयस्य पदस्यार्थस्योभयोर्वा- आवृत्तौ त्रिविधमावृत्तिदीपकम् । क्रमेणार्धत्रयेणोदाहरणानि ।

यथा वा—

'उत्कण्ठयति मेघानां माला वर्गं कलापिनाम् ।
यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥'
'शमयति जलधरधारा चातकयूनां तृषं चिरोपनताम् ।
क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम् ॥'
'वदनेन निर्जितं तव निलीयते चन्द्रबिम्बमम्बुधरे ।
अरविन्दमपि च सुन्दरि ! निलीयते पाथसां पूरे ॥'

एवं चावृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेऽपि दीपकच्छायापत्ति-

---

'उन्मीलन्ती'त्यत्र क्रियापदभेदेऽपि तदर्थस्य विकासस्यावृत्त्या अर्थावृत्तिदीपकम् । 'माद्यन्ती'त्यत्र क्रियातद्वाचकपदयोर्द्वयोरावृत्तिरित्युभयावृत्तिर्दीपकम् । अत्रैवोदाहरणान्तराण्याह— **उत्कण्ठयतीति** । कलापिनां वर्गं मेघानां माला उत्कण्ठयति उन्नमितकण्ठं करोतीति पूर्वत्र अपरत्र औत्सुक्ययुक्तं करोतीत्यर्थभेदात् क्रियापदमात्रावृत्तिः । एवमुत्तरत्रापि द्रष्टव्यम् । नन्वत्र धर्मनिर्देशस्य प्रस्तुताप्रस्तुतोभयविषयत्वाभावात् कथं दीपकशब्दप्रवृत्तिरित्यत आह—**प्रस्तुतेति** । अनेकोपकारकत्वसाम्येन दीपकशब्दप्रवृत्तिरित्यर्थः । अत्र सर्वत्र प्रस्तुतैकधर्मान्वयरूपतुल्ययोगितैव वक्तुं शक्येति नालङ्कारान्तरं शक्यं वक्तुम् । इयांस्तु भेदः । 'उत्कण्ठयती'त्युदाहरणे वास्तवधर्मैक्याभावेऽपि श्लेषभित्तिकाभेदाध्यवसायेन साम्पादिकैक्यमादाय तुल्ययोगितेति । इत्थं च प्रस्तुतानामप्रस्तुतानां वा एकधर्मान्वय इति तल्लक्षणे एकत्वं वास्तवसाम्पादिकभेदेन द्विविधमिति पर्यवसितम् । न च तुल्ययोगितायां क्रियापदाद्यावृत्तिर्नेति ततोऽस्य भेद इति वाच्यम् । तावता तदवान्तरभेद-

---

**भातीन्दुः कान्त्या भाति रविस्त्विषा ॥'** इति पाठः । काव्यप्रकाशे तु मालादीपकमधिकमुक्तम् । रसगङ्गाधरकारस्तु, तदुदाहरणस्य मालादीपकत्वं निरस्य एकावलीभेदत्वं व्याचष्टे । नव्यास्तु, तुल्ययोगितातो दीपकं न पृथग्भावमर्हति । धर्मसकृद्वृत्तिरूपाया विच्छित्तेरविशेषात् । तस्मात्तुल्ययोगिताया एव त्रैविध्यमुचितम् । प्रकृतानामेव धर्मस्य सकृद्वृत्तिः,अप्रकृतानामेव, प्रकृताप्रकृतानां चेति ।एवं च प्राचीनानां तुल्ययोगितातो दीपकस्य पृथगलङ्कारतामाचक्षाणाणां दुराग्रहमात्रमिति वदन्ति ।

मात्रेण दीपकव्यपदेशः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे दीपकप्रकरणम् ॥१५॥

अथ प्रतिवस्तूपमा—

**वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता ।**
**तापेन भ्राजते सूरः शूरश्चापेन राजते ॥**

यत्रोपमानोपमेयपरवाक्ययोः एकस्समानो धर्मः पृथङ्निर्दिश्यते सा प्रतिवस्तूपमा। प्रतिवस्तु प्रतिवाक्यार्थं उपमा समानधर्मोऽस्यामिति व्युत्पत्तेः । यथा—अत्रैव 'भ्राजते' 'राजते' इत्येक एव धर्म उपमानोपमेयवाक्ययोः पृथग्भिन्नपदाभ्यां निर्दिष्टः ।

यथा वा—

'स्थिरा शैली गुणवतां खलवाचा न बाध्यते ।
रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ॥'

यथा वा—

'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।

---

त्वस्योपपत्तिरित्यलमधिकेन ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां दीपकप्रकरणम् ॥ १५ ॥

प्रतिवस्तूपमां लक्षयति—**वाक्ययोरिति** । द्वयोर्वाक्ययोरुपमानोपमेयविषययोरेकसाधारणधर्मनिर्देशः प्रतिवस्तूपमेत्यर्थः । अत्र 'वाक्ययो'रिति विशेषणानुपादाने एकस्मिन्वाक्ये एकसाधारणधर्मनिर्देशस्योपमायामपि सत्त्वादतिव्याप्तिः। अतस्तद्विशेषणमुपात्तम्। उपमायामेकवाक्यगतैकधर्मनिर्देशसत्त्वेऽपि वाक्यद्वयगतैकधर्मनिर्देशाभावात् । न च 'पङ्कजमिव भाति मुखं भाति च तन्व्यास्सुधांशुबिम्बमिव ।' इत्येकधर्मकमालोपमायामतिव्याप्तिः । गम्यौपम्यत्वस्यापि धर्मविशेषणत्वात् । न चैवं 'वाक्ययो'रित्यस्य वैयर्थ्यप्रसङ्गः। तुल्ययोगितायामतिव्याप्तिवारकत्वात्। लक्षणवाक्यं व्याचक्षाणः प्रतिवस्तूपमाशब्दस्यान्वर्थतां दर्शयति—**यत्रेति** । 'उपमानोपमेयपरयो'रित्यनेन गम्यौपम्यविशेषणलाभः । पृथगिति विशेषणेन भिन्नशब्देनेत्यर्थकेन 'मायान्ति चातकास्तृप्ता' इत्युभयावृत्तिदीपकनिरासः । न चैवमपि 'उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः।' इत्यर्थावृत्तिर्दीपके अतिव्याप्तिर्दुर्वारेति वाच्यम्। तत्रोभयोरपि प्रस्तुतत्वेन प्रस्तुताप्रस्तुतौपम्यगमकत्वाभावात् । लक्ष्ये लक्षणं योजयति—**अत्रेति** । पृथगित्यस्य विवरणं भिन्नपदाभ्यामिति । इतरथा पौनरुक्त्यप्रसङ्गात् । उदाहरणान्तरमाह—**स्थिरेति** । अत्रापि 'न बाध्यते' 'न नाश्यते' इति पर्यायपदाभ्यां वाक्यद्वयवर्तिभ्यामेकस्य धर्मस्य निर्देशात् प्रतिवस्तूपमा । उदाहरणान्तरमाह—**तवामृतस्यन्दिनीति** । अत्र अमृतस्यन्दिनीत्यत्र अमृतत्वेनाध्यवसिता दि-

स्थितोऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥'

अत्र यद्यप्युपमेयवाक्ये अनिच्छा उपमानवाक्ये अवीक्षेति धर्मभेदः प्रतिभाति । तथापि वीक्षणमात्रस्यावर्जनीयस्य प्रतिषेधानर्हत्वात् इच्छापूर्वकवीक्षणप्रतिषेधोऽयं अनिच्छापर्यवसित एवेति धर्मैक्यमनुसन्धेयम् । अर्थावृत्तिदीपकं प्रस्तुतानामप्रस्तुतानां वा । प्रतिवस्तूपमा तु प्रस्तुताप्रस्तुतानामिति विशेषः ।अयं चापरो विशेषः । आवृत्तिदीपकं वैधर्म्येण न सम्भवति । प्रतिवस्तूपमा तु वैधर्म्येणापि दृश्यते ।

---

व्यधुनी तत्स्यंदनशीलताया अमृतपदस्यामृतत्वपरतया तत्प्रदत्वस्य वा लाभात् तादृशभगवच्चरणारविन्दनिवेशितांतःकरणस्य इतरविषयेषु तुच्छताप्रतीत्या तद्विषयकेच्छाभावः समुचित इति वाक्यार्थप्रतीतिः । अयमेव वाक्यार्थः नीरन्ध्रधारमकरन्दबिन्दुसंदोहसम्भृतोदरारविंदस्थितमधुकरगतेक्षुरकानिच्छारूपवाक्यार्थेन समर्थ्यते । अत्रोपमानोपमेयवाक्ययोरनिच्छारूपसाधारणधर्मस्य पर्यायपदाभ्यां निर्देशात् प्रतिवस्तूपमा स्फुटैव । उत्तरवाक्यार्थेन पूर्वमाक्यार्थस्य समर्थनात् वाक्यार्थहेतुकं काव्यलिङ्गम् । तयोश्चाङ्गाङ्गिभावसङ्करः । अमृतस्यन्दिनीति च विशेषणं भगवत्पादपङ्कजे अन्तःकरणनिवेशमुखेन इतरेच्छानिवृत्तिहेतूभवनसामर्थ्याभिप्रायगर्भमिति परिकरालङ्कारः । तदुत्थापिता च प्रतिवस्तूपमेति तस्य च प्रतिवस्तूपमायाश्चाङ्गाङ्गिभावसङ्करः । अनयोश्च सङ्करयोरनुग्राह्यानुग्राहकभावसङ्करः । किं च सकलपुरुषार्थाभ्यर्हितमोक्षदानप्रतिभाव्यशालिनो भगवत्पादपङ्कजस्य भक्तजनकामितेतरपुमर्थसाधकतमत्वं कैमुतिकन्यायासिद्धमित्यर्थापत्त्यलङ्कारध्वनिः । 'पादपङ्कजे' इत्यत्रारोप्यमाणस्य पङ्कजस्य स्वात्मना विषयांतरगोचरेच्छाविरहैदमर्थ्यायोगेन भगवच्चरणात्मतापत्त्यपेक्षणात्परिणामालङ्कारः । नन्वत्रोपमानोपमेयवाक्ययोः इच्छतिवीक्षतिभ्यां क्रियाभेदप्रतीत्या तद्विरहयोर्धर्मयोर्भेदात् कथं प्रतिवस्तूपमेति शङ्कते—**अत्रेति** । अनिच्छतोऽपि पुरुषस्य पथि दुर्गन्धादिप्रतीतिवत् इच्छाऽविषयस्यापि इक्षुरकादेर्दर्शनस्यापरिहार्यतया तत्प्रतिषेधासम्भवादिच्छापूर्वकवीक्षणस्यैव निषेधात् 'सविशेषणे हीति' न्यायेन विशिष्टवीक्षणप्रतिषेधो विशेषणभूतेच्छाविरहे पर्यवस्यतीति धर्मैक्यसम्भवात् युक्तैव प्रतिवस्तूपमेति । **तथापीति** । अत्रोदाहरणे 'स्थितेऽरविन्द' इति न युक्तः पाठः । तथात्वे 'निवेशितात्मे'ति उपमेयविशेषणस्योपमाने प्रतिविशेषणाभावेन विच्छित्तिविशेषाभावप्रसङ्गात् । अतः 'स्थितोरविन्दे'इति युक्तः पाठः । तथा सत्येवारविन्दभवसुन्दरीवदनारविन्दनिर्गलन्मकरन्दधारासन्दोहलुठदतनुरामणीयकः पदसन्दर्भो निखिलसरसहृदयसंवादिकवेरीदृशसन्दर्भघटनवैदग्ध्यं सूचयतीति युक्तं प्रतीमः । ननु, 'उन्मीलन्ति कदम्बानी'त्यर्थावृत्तिदीपकादस्या न वैलक्षण्यमित्यत आह—**अर्थावृत्तीति** । तथा च प्रस्तुतानेकधर्मिगतैकधर्मनिर्देशोऽप्रस्तुतानेकगततथाविधधर्मिनिर्देशो वा अर्थावृत्तिः । इयं तु प्रस्तुताप्रस्तुतोभयनिष्ठतथाविधधर्मनिर्देशरूपेत्यस्यास्ततो भेद इति भावः । वैलक्षण्यांतरमाह—**अयं चेति** । अर्थावृत्तिदीपकं हि वाक्ययोरर्थ-

यथा—

'विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥'
'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन निवार्यते ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे प्रतिवस्तूपमाप्रकरणम् ॥१६॥

---

स्यावृत्तावेव भवति । सा च साधर्म्य एव न वैधर्म्ये इति । इयं तु वैधर्म्येणापि भवतीति ततोऽस्या भेद इत्यर्थः । यत्तु, प्रस्तुताप्रस्तुतानेकगोचरत्वनियमो न प्रतिवस्तूपमायाम् । प्रस्तुतानामप्रस्तुतानां वा उभयेषां वा धर्मनिर्देशः प्रतिवस्तूपमेति शक्यत्वाद्वक्तुम् । लक्ष्यस्य उदाहरणेषु तथोपलम्भादिति । तन्न । प्रस्तुताप्रस्तुतयोरसकृदेकधर्मान्वय एवास्या लब्धप्रसराया अप्रकृतानेकविषयतायां तदितरानकविषयतायां वा आत्मलाभासम्भवात् स्वकृतलक्षणानुसारेण लक्ष्यव्यवस्थोक्तेः सकलतन्त्रविरुद्धत्वात् । अन्यथा रूपकाद्यातिशयोक्त्योः साधारणैकलक्षणस्योपमानोपमेयाभेदात्मनः परिकल्पनया भेदविलयापत्तेः । न च विषयनिगरणात्तस्यास्ततो भेदः । निर्दिष्टविषयत्वानिर्दिष्टविषयत्वाभ्यां रूपकस्यैव द्वैविध्यसम्भवात् । अत एव सर्वस्वकृता 'सामान्यस्येवाद्युपमाने सकृन्निर्देश उपमा । इवाद्यनुपादाने सकृन्निर्देशे दीपकतुल्ययोगिते । असकृन्निर्देशे तु शुद्धसामान्यरूपं बिम्बप्रतिबिम्बभावो वा । तत्राद्यः प्रकारः प्रतिवस्तूपमे' त्यादिना 'केवलं कविसमयात्पर्यायान्तरेण पृथङ्निर्देश' इत्यन्तेन ग्रन्थेन प्रस्तुताप्रस्तुतवाक्यार्थयोः पर्यायमन्तरेणैकेन शब्देन निर्देशे कथितपदत्वदोषापत्तेः । कविसमयानुरोधेन तत्परिहृतये पर्यायेण धर्मनिर्देश इति प्रतिपादितम् । काव्यप्रकाशकारादिभिरपि तथैवाभ्युपेतम् । यत्तु, प्रकृतविषयप्रतिवस्तूपमोदाहरणं तदित्युच्यते तत्रालङ्कारान्तरमेवार्थावृत्त्यादिकं द्रष्टव्यमिति यत्किञ्चिदेतत् । वैधर्म्यमूलामिमामुदाहरति —**विद्वानेवेति** । न चात्र एकस्य धर्मस्याभावात् कथं प्रतिवस्तूपमेति वाच्यम् । विधेयतया निषेध्यतयानुवाद्यतया वा एकधर्मनिर्देशस्य तत्प्रयोजकस्यात्राप्यहानेः । यत्तु विद्वानेवेत्येवकारेण तदन्यो न जानातीति प्रतीतेः विज्ञानाभावस्य धर्मस्य प्रस्तुताप्रस्तुतोभयसाधारण्यात् प्रतिवस्तूपमेति । तन्न । तथात्वे साधर्म्यप्रतिवस्तूपमात्वापत्त्या वैधर्म्योदाहरणत्वानापत्तेः । अत्रैवोदाहरणान्तरमाह—**यदि सन्तीति** । अत्र यद्यपि विकासविभावनयोर्भेदान्न प्रस्तुताप्रस्तुतयोर्धर्मैक्यम् । तथापि विकासस्य कुसुमैकनिष्ठस्य प्रस्तुतेषु गुणेषु बाधाद्विभावनमेव लक्ष्यते । यथा हि पुष्पेषु विकासितेषु तदामोदलहरी तत्परिसरदेशविसृमरा कुसुमानि विभावयति तथैव तत्तत्समुचितकार्यारम्भेण ते ते गुणाः पुंसां प्रगुणतया विभाव्यन्त इत्यौपम्यप्रतीतेर्लक्ष्यं विभावनमादाय प्रागुक्तरीत्या धर्मनिर्देशस्समर्थनीय इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां प्रतिवस्तूपमाप्रकरणम् ॥ १६ ॥

अथ दृष्टान्तः—

**[1]चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः ।**
**त्वमेव कीर्तिमान् राजन्! विधुरेव हि कान्तिमान् ॥**

यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टौ तत्र दृष्टान्तः । 'त्वमेव कीर्तिमा'नित्यत्र कीर्तिकान्त्योर्बिम्बप्रतिबिम्बभावः ।

यथा वा—[2]

'कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥

---

बिम्बप्रातिबिम्बभावानापत्त्या शुद्धं सामान्यमाश्रित्य प्रतिवस्तूपमां व्युत्पाद्य बिम्बप्रतिबिम्बभावकृतं तदैक्यमाश्रित्य दृष्टान्तालङ्कारमाह—**चेदिति** । धर्मस्य बिम्बप्रतिबिम्बत्वे दृष्टान्तालङ्कार इत्यर्थः । अत्रापेक्षितं पूरयन् लक्षणं परिष्करोति—**यत्रेति** । अत्रोपमानोपमेयवाक्ययोरित्यनेन प्रस्तुताप्रस्तुतविषयत्वलाभः । तेन 'उन्मीलितं कुवलयं ननन्द सैरिणीमनः ।' इत्यत्र समुच्चयविशेषे विकासमोदयोर्बिम्बप्रतिबिम्बभावसत्त्वेऽपि नातिव्याप्तिः । तत्र द्वयोरपि प्रस्तुतत्वात् । न च तथापि 'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः । इन्दुं चन्दनलेपेन पाण्डरीकुरुते हि सः ॥' इति वक्ष्यमाणवाक्यार्थवृत्तिनिदर्शनायां बिम्बप्रतिबिम्बभावेन भिन्नधर्मनिर्देशस्य सत्त्वादतिव्याप्तिरिति वाच्यम् । तादात्म्यारोपशून्यत्वेन वाक्यार्थयोर्विशेषणीयत्वात् । न च तथापि 'आवन्त्य एव निपुणास्सुदृशो रतकर्मणि । चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि ॥' इति वस्तुप्रतिवस्तूपमायामतिव्याप्तिः । तत्र रतकर्मचन्द्रिकापानकर्मणोर्बिम्बप्रतिबिम्बभावसत्त्वादिति वाच्यम् । तदंशे बिम्बप्रतिबिम्बभावसत्त्वेऽपि नैपुणांशे बिम्बप्रतिबिम्बभावाभावात् । लक्षणे सर्वांशबिम्बप्रतिबिम्बभावस्य विवक्षितत्वात् । न च तथापि 'पाण्ड्योऽयमंसार्पितलम्बहारः' इत्यत्र बिम्बप्रतिबिम्बभावापन्नधर्मकोपमायां सर्वांशावच्छेदेन धर्मयोर्बिम्बप्रतिबिम्बभावसत्त्वादतिव्याप्तिरिति वाच्यम् । गम्यौपम्यकतयापि धर्मनिर्देशस्य विशेषणीयत्वात् । तथा च तादात्म्यारोपविधुरप्रकृताप्रकृतवाक्यार्थगतसर्वांशबिम्बप्रतिबिम्बभावापन्नधर्मनिर्देशो दृष्टान्त इति फलितमिति भावः । लक्ष्ये लक्षणं योजयति—**त्वमेवेति** । अत्र प्रस्तुताप्रस्तुतयोर्नृपचन्द्रयोस्सादृश्येन बिम्बप्रतिबिम्बभावे इति तद्धर्मयोः कीर्तिकान्त्योर्बिम्बप्रतिबिम्बभाव इति लक्षणसङ्गतिरित्यर्थः । उदाहरणान्तरमाह—**कामं नृपा इति** । अत्र राजन्वत्ताज्योतिष्मत्त्वे प्रस्तुताप्रस्तुतसम्बन्धिनोर्बिम्बप्रतिबिम्बभावेन निर्दिष्टे इति अत्रापि लक्षणसङ्गतिः स्फुटेति भावः । अत्र त-

---

१. चंद्रालोके '**चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तोऽसावलंकृतिः । स्यान्मल्लप्रतिमल्लत्वे संग्रामोद्दामहुंकृतिः ॥ दृष्टान्तश्चेद्भवन्मूर्तिस्तन्मृष्टा दैवदुर्लिपिः । जाता चेत्प्राक्प्रभा भानोस्तर्हि याता विभावरी ॥**' इति पाठः । अत्र लक्ष्य-

यथा वा—

'देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥'

नन्वत्रोपमानोपमेयवाक्ययोर्ज्ञानमेक एव धर्म इति प्रतिवस्तूपमा युक्ता । मैवम् । अचेतने मन्थाचले ज्ञानस्य बाधितत्वेन तत्र 'जानाती'त्यनेन सागराधस्तलावधिसंस्पर्शमात्रस्य विवक्षितत्वात् । अत्रोदाहरणे पदावृत्तिदीपकाद्विशेषः पूर्ववत् प्रस्तुताप्रस्तुतविषयत्वकृतो द्रष्टव्यः ।

---

रनृपेभ्यो वर्णनीयस्य राज्ञः उत्कर्षप्रतीतेः व्यतिरेकालङ्कारः, सौराज्यानिपातितराजन्वच्छब्देन व्यज्यत इति व्यतिरेकालङ्कारध्वनिः । **देवीमिति** । अत्र दिव्यवागुपासने समानेऽपि सर्वेषां सारस्वतसारवेदनं मुरारेरेव । यतोऽसौ गुरुकुलसमासादिततत्प्रसादभूमेति प्रथमवाक्यार्थः । स एव दृष्टान्तमुखेनाब्धिलङ्घनस्य सकलवानरभटसाधारण्येऽपि तदीयगाम्भीर्यं मन्थाचल एव वेद । यतस्स आपातालनिमग्नपीवरतनुरित्युत्तरवाक्यार्थेन समर्थ्यत इति वाक्यार्थहेतुककाव्यलिङ्गस्य दृष्टान्तोत्थापकतया सर्वत्र दृष्टान्तस्य काव्यलिङ्गसङ्कीर्णतैव । न चासङ्कीर्णतदुदाहरणाभावेनास्यालङ्कारत्वं न स्यादिति वाच्यम् । सङ्कीर्णत्वेऽपि तत्कृतविच्छित्तिविशेषस्यानुभूयमानतया अलङ्कारत्वोपपत्तेः । सहोक्त्यादीनामतिशयोक्तिविविक्तविषयत्वाभावेऽप्यलङ्कारान्तरत्वस्य सिद्धान्तसम्प्रतिपन्नत्वात् । **ज्ञानमेकमिति** ।'जानीते' 'जानाती'ति क्रियापदयोरेकार्थत्वादसकृदेकधर्मनिर्देशसत्त्वात्प्रतिवस्तूपमैव युक्तेत्यर्थः । **अचेतने इति** । अत्र जानातिमुख्यार्थस्य बाधेन लक्षणया सागराधस्तनदेशसम्बन्धस्य प्रतिपादनेन धर्मभेदसत्त्वान्न प्रतिवस्तूपमा युक्तेति भावः । नन्वत्रोदाहरणे 'वर्षत्यम्बुदमालेय' मिति पदावृत्तिदीपकान्न भेदस्सम्भवति । न चात्र पूर्वोत्तरार्धयोः 'जानीते' 'जानाती'ति क्रियापदभेदान्न पदावृत्तिदीपकाभेदप्रसक्तिरिति वाच्यम् । प्रत्ययांशभेदेऽपि प्रकृत्यंशस्यैक्येन पदावृत्तिसत्त्वादित्यत आह—**अत्रेति** । **पूर्ववदिति** । प्रतिवस्तूपमावदित्यर्थः । अयमपि प्रतिवस्तूपमावत् साधर्म्यवैधर्म्याभ्यां द्विविधः । तत्र साधर्म्यनिबन्धनमुदाहृत्य वैध-

---

द्वयमुपनिबद्धम् । मल्लप्रतिमल्लत्वे यथा सङ्ग्रामोद्दामहुंकृतिस्स्यात् तथा यदि बिम्बप्रतिबिम्बत्वे तदा दृष्टान्तः स्यादित्यन्वयात् पूर्वोत्तरवाक्यार्थयोर्बिम्बप्रतिबिम्बभावाल्लक्ष्यमपीदमेव पद्यम् । अत्र मल्लप्रतिमल्लत्वबिम्बप्रतिबिम्बत्वयोर्दृष्टान्तहुंकृत्योश्च मिथो बिम्बप्रतिबिम्बभावः । दृष्टान्तहुंकृत्योर्लिङ्गभेदेन बिम्बप्रतिबिम्बभावस्य स्पष्टमनवभासादुदाहरणान्तरमाह— **दृष्टान्त इति** । भगवन्तं प्रति भक्तोक्तिः । हे विष्णो ! भवन्मूर्तिः अन्तः हृदये यदि द-

वैधर्म्येणाप्ययं दृश्यते—

'कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे दृष्टान्तप्रकरणम् ॥१७॥

अथ निदर्शना—

**वाक्यार्थयोस्सदृशयोरैक्यारोपो निदर्शना ।**
**यद्दातुस्सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥**

अत्र दातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्य पूर्णेन्दोरकलङ्कत्वस्योपमानवाक्यार्थस्य च यत्तच्छ्यामैक्यारोपः ।

यथा वा—

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधो जनस्सेवितः ॥'

अत्राबुधजनसेवाया अरण्यरोदनादीनां च यत्तच्छ्यामैक्यारोपः ।

**पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् ।**
**त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥**

---

र्म्यनिबन्धनं तं दर्शयति—**वैधर्म्येणेति** । अत्र प्रस्तुतवाक्यार्थगतयोर्निहतत्वमनःकर्मकगर्वाभिमुखीकरणयोर्वैधर्म्येण तमोवस्थानोदयाद्रिमौलिताप्राप्त्यभावावुत्तरवाक्ये प्रतिबिम्बतया निर्दिष्टाविति भावः ।

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां दृष्टान्तप्रकरणम् ॥ १७ ॥

बिम्बप्रतिबिम्बभावघटितदृष्टान्तालङ्कारप्रसङ्गात्तद्घटितां निदर्शनां लक्षयति—**वाक्यार्थयोरिति** । बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोर्धर्मिणोरैक्यवर्णनं निदर्शनेत्यर्थः । तथा च श्लोके वाक्यार्थपदं न यथाश्रुतार्थकमित्यभिप्रायः । तच्चोत्तरत्र स्फुटीकरिष्यति ग्रन्थकार एवेत्यवधेयम् । लक्ष्ये लक्षणं योजयति—**अत्रेति** । दातृपुरुषसौम्यतापूर्णेन्दुकलङ्कवैधुर्ययोस्सामानाधिकरण्यादैक्यप्रतीतेर्निदर्शनेत्यर्थः । एषा मालयाऽपि सम्भवतीत्युदाहरणान्तरं दर्शयति—**अरण्येति** । मतान्तरेण पदार्थवृत्तिनिदर्शनां लक्षयति—**पदा-**

---

ष्टा तत् तदैव दैवदुर्लिपिर्मृष्टा । प्राक् प्राच्यां यदि भानोः प्रभा जाता तदा रात्रिर्गतेत्यर्थः ।' इत्यादि रसाख्यतद्व्याख्यायां व्याख्यातम् । १. अयमेक एव भेदश्चन्द्रालोकोक्तः । नान्यौ ।

अत्र नेत्रयुगले नीलाम्बुजगतलीलापदार्थारोपो निदर्शना ।

यथा वा—

'वियोगे गौडनारीणां यो गण्डतलपाण्डिमा ।
अदृश्यत स खर्जूरीमञ्जरीगर्भरेणुषु ॥'

पूर्वस्मिन्नुदाहरणे उपमेये उपमानधर्मारोपः । इह तु उपमाने उपमेयधर्मारोप इति भेदः । उभयत्राप्यन्यधर्मस्यान्यत्रासम्भवेन तत्सदृशधर्माक्षेपादौपम्ये पर्यवसानं तुल्यम् । इयं पदार्थवृत्तिनिदर्शना ललितोपमेति जयदेवेन व्याहृता । यद्यपि 'वियोगे गौडनारीणा'मिति श्लोकः प्राचीनैर्वाक्यार्थवृत्तिनिदर्शनायामुदाहृतः । तथापि विशिष्टयोर्धर्मिणोरैक्यारोपो वा-

---

र्थवृत्तिमिति । यत्रोपमेयोपमानान्यतरधर्मारोपस्तदन्यतरधर्मिकस्तत्र पदार्थवृत्तिनिदर्शनेत्यर्थः । उदाहरणे उपमेये नेत्रयुगले उपमानभूतनीलाम्बुजसम्बन्धिलीलारोपात्स्पष्टो लक्षणानुगम इत्याह—**अत्रेति** । उपमाने उपमेयगतधर्मारोपं दर्शयति—**वियोग इति**। अत्र मञ्जरीगर्भरेणुषु उपमानेषु उपमेयगण्डतलपाण्डिमारोपादेषाऽपि पदार्थवृत्तिनिदर्शनेति भावः । नन्वत्रोदाहरणद्वयेऽपि अन्यधर्मभूतलीलाया अन्यत्रासम्भवेनासम्भविनोऽर्थस्य निबन्धनं विच्छित्तिविशेषाभावादनर्थकम् । न चैवं, रूपकादावप्यसम्भवदर्थनिबन्धनादचमत्कारप्रसङ्गः । तत्र तन्निबन्धनेन मुखचन्द्रादिकयोः सादृश्यव्यक्तेरित्यत आह—**उभयत्रेति** । उक्तोदाहरणद्वयेऽपीत्यर्थः । अन्यधर्मस्य लीलापदार्थस्य । **तत्समानेति** । लीलासमानेत्यर्थः । तथा चात्र नीलाम्बुजगण्डतलपाण्डिमसदृशलीलापाण्डिम्नोर्लक्षणया प्रतिपादनात् धर्मिणोस्सादृश्यावगमेन विच्छित्तिविशेषसद्भावान्नासम्भवदर्थनिबन्धनमनर्थकमिति भावः । इमामेव पदार्थवृत्तिनिदर्शनां 'ललितोपमे' ति 'अन्यधर्मानिबद्धो यस्सोऽन्यत्रासम्भवी यदि । उपमायां पर्यवस्येत्सा भवेल्ललितोपमा ॥'इति लक्षणमुखेन जयदेवो व्याजहारेत्याह—**इयमिति** । ननु 'वियोगे गौडनारीणा'मिति श्लोकस्य चन्द्रिकाकारादिभिर्वाक्यार्थवृत्तिनिदर्शनायामुदाहरणात् पदार्थवृत्तिनिदर्शनायां कथमयमुदाहृत इत्यत आह—**यद्यपीति** । बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टधर्मैक्यारोपो वाक्यार्थवृत्तिनिदर्शना । प्रकृतधर्मिण्यप्रकृतधर्मारोपः पदार्थवृत्तिनिदर्शनेति स्वकृतलक्षणानुसारेणास्य श्लोकस्य पदार्थवृत्तिनिदर्शनात्वमेव युक्तं, न तु वाक्यार्थवृत्तिनिदर्शनात्वम् । बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टधर्मैक्यारोपाभावात् । अत एव सर्वस्वकृता एषापि पदार्थवाक्यार्थवृत्तिभेदात् द्विधेति द्वैविध्यमुपक्षिप्य, पदार्थवृत्तिस्समनन्तरमुदाहृतेति वाक्येन 'अव्यात्स वो यस्य निसर्गवक्रः स्पृशत्यधिज्यस्मरचापलीलाम् । जटापिनद्धोरगमौलिरत्नमरीचिलीढोभयकोटिरिन्दुः ॥' इति श्लोके पदार्थवृत्तिनिदर्शनाया उदाहृतत्वोक्तेः धर्मिण्यन्यधर्मारोपरूपनिदर्शनायाः पदार्थवृत्तिनिदर्शनात्वमेवोररीकृतमित्यभिप्रेत्य परिहरति—**तथापीति** । अत एव

क्यार्थवृत्तिनिदर्शना, उपमानोपमेययोरन्यतरस्मिन्नन्यधर्मारोपः पदार्थवृत्तिनिदर्शनेति व्यवस्थामाश्रित्यास्माभिरिहोदाहृतः । एवं च

'त्वयि सति शिव! दातर्यस्मदभ्यर्थितानामितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम्।
चरमचरणघातैर्दुग्र्हं दोग्धुकामाः करभमनुसरामः कामधेनौ स्थितायाम् ॥'

'[1]दोर्भ्यामब्धिं तितीर्षन्तस्तुष्टुवुस्ते गुणार्णवम् ॥'

इत्यादिषु वाक्यभेदाभावेऽपि वाक्यार्थवृत्तिरेव निदर्शना । विशिष्टयोरैक्यारोपसद्भावात् । 'वाक्यार्थयोस्सदृशयो'रिति लक्षणवाक्ये वाक्यार्थशब्देन बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टस्वरूपयोः प्रस्तुताप्रस्तुतधर्मयोः विवक्षितत्वात्। इति। एवं च

'राजसेवा मनुष्याणामसिधारावलेहनम् ।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥'

इत्यत्र प्रस्तुताप्रस्तुतवृत्तान्तयोरेकैकपदोपात्तत्वेऽपि वाक्यार्थवृत्तिनिदर्शनाया न क्षतिः । तयोर्बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टव्यवहाररूपत्वात् । अत एव निदर्शनाया रूपकाद्भेदः । रूपके ह्यविशिष्टयोरेव मुखचन्द्रादिकयोरैक्यारोपः ।

---

'वाक्यार्थयोस्सदृशयो' रिति कारिकायां वाक्यार्थपदस्य बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टधर्मिपरत्वस्याभिहिततया वाक्यार्थभेदाभावेऽप्येषा सम्भवतीत्याह—**एवं चेति** । **वाक्यभेदाभावेऽपीति**। तिङन्तक्रियाभेदाभावेऽपीत्यर्थः। एतदेवोपपादयति—**विशिष्टयोरिति** । ननु, कारिकायां वाक्यार्थद्वित्वमेवाश्रित्य निदर्शनोक्तेः कथं तद्भेदाभावे तस्याः प्रसर इत्यत आह—**वाक्यार्थयोरिति** । 'प्रस्तुताप्रस्तुतधर्मयो' रित्यत्र धर्मत्वमविवक्षितम् । धर्मिणोरैक्यारोपेऽपि समनन्तरोदाहरणद्वये निदर्शनाभ्युपगमात् धर्मयोर्वा धर्मिणोर्वा यथाकथंचिदैक्यारोपे निदर्शनेत्यत्र तात्पर्यम् । अत एव वाक्यार्थपदस्य उक्तार्थपरत्वादेव पदार्थभूतयोः प्रस्तुताप्रस्तुतयोरैक्यारोपेऽपि न पदार्थवृत्तिनिदर्शनेत्याह—**एवं चेति** । ननु,समनन्तरोक्तेर्लक्षणस्य रूपकेऽपि सम्भवान्नास्यास्ततो भेदस्स्यादित्यत आह—**अत एवेति** । यत एव विशिष्टयोरैक्यारोपे निदर्शना अत एवेत्यर्थः । ननु, विशिष्ट-

1. 'दोर्भ्यां तितीर्षेदप्यब्धिं तुष्टूषुस्ते गुणार्णवम् ।' इति पाठान्तरम् ।

'अंघ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे ।
विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु वः ॥'

इति विशिष्टरूपकोदाहरणेऽपि न बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्ट-रूपता । विधातृविष्टरकमलदण्डविशि[१]ष्टत्वरूपसाधारणधर्मवत्तासम्पादनार्थमेव तद्विशेषणोपादानात् । 'याद्दातुस्सौम्यते' त्यादिनिदर्शनोदाहरणेषु दातृपूर्णेन्द्वादीनामानन्दकरत्वादिनेवात्र विशेषणयोर्बिम्बप्रतिबिम्बभावाभावात् । यत्र तु विषयविषयिविशेषणानां परस्परसादृश्येन बिम्बप्रतिबिम्बभावोऽस्ति ।

'ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥'

इति सावयवरूपकोदाहरणे तत्रापि विषयविषयिणोस्तद्विशेषणानां च प्रत्येकमैक्यारोपः । न तु ज्योत्स्नादिविशिष्टरात्रिरूपाविषयस्य भस्मादिविशिष्टकापालिकीरूपविषयिणश्च विशिष्टरूपेणैक्यारोपोऽस्ति । तस्मात् 'राजसेवा मनुष्याणा' मित्यादावपि वाक्यार्थवृत्तिनिदर्शनैव युक्ता । मता-

---

योरैक्यारोपस्य 'अंघ्रिदण्डो हरे'रित्यत्र बलिनिग्रहावसरोपरिदेशक्षिप्तभगवदंघ्रिदण्डविधिविष्टरपद्मानुषक्तनालदण्डयोर्विशिष्टयोरैक्यवर्णनात्मकरूपके सद्भावादतिव्याप्तितादवस्थ्यमित्यत आह—**अंघ्रिदण्ड इति** । नन्वेवमंघ्रिदण्डविशेषणस्योर्ध्वोत्क्षिप्तत्वस्यानर्थकता स्यादित्यत आह—**विधात्रिति** । ननु, निदर्शनोदाहरणे दातृपूर्णेन्द्वादीनामिवात्रापि विशेषणयोः बिम्बप्रतिबिम्बभावो न कुत इत्यत आह—**यद्दातुरिति** । तथा चात्र ऊर्ध्वोत्क्षिप्तत्वविधातृविष्टरसम्बन्धिकमलश्लिष्टत्वयोर्बिम्बप्रतिबिम्बभावप्रयोजकसाधारणधर्माभावान्नोक्तरूपविशिष्टता धर्मिणोरिति नोक्तदोष इति भावः । ननु, सावयवरूपके 'ज्योत्स्नाभस्मच्छुरणधवले' त्यत्र ज्योत्स्नादिविशिष्टरात्रेर्भस्मच्छुरणादिविशिष्टरूपाया एवैक्यारोपसद्भावात् तत्रातिप्रसङ्ग इत्यत आह—**यत्र त्विति । प्रत्येकमेवेति** । तथा च तत्र विषयविषयिविशेषणानां पृथगेव सामानाधिकरण्येनैक्यारोपान्न ज्योत्स्नादिविशिष्टरात्रिभस्मादिविशिष्टकापालिक्योरैक्यारोपः । येन तद्विशेषणानां बिम्बप्रतिबिम्बभावसम्भवेन विषयविषयिणोर्बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टतयोक्तातिप्रसङ्गः स्यादिति भावः । उपसंहरति—**तस्मादिति । मतान्तरे त्विति** । चन्द्रिकाकारादिमते[२] इत्यर्थः । धर्मिणि धर्म्यन्तरारोपे अन्यधर्मारोप

---

१. 'श्लिष्ट इति' पाठान्तरम् । २. अत्र चन्द्रिकाकारः न कुवलयानन्दव्याख्याता । किं तु अल-

न्तरे त्विह पदार्थवृत्त्यैव निदर्शनया भाव्यम् । इति ।

**अपरां बोधनं प्राहुः क्रियया सत्सदर्थयोः ।**
**नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः ॥**
**उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।**
**विभावयन् समृद्धीनां फलं सुहृदनुग्रहम् ॥**

कस्य चित्किञ्चित्क्रियाविशिष्टस्य स्वक्रियया परान्प्रत्यसतस्सतो वाऽर्थस्य बोधनं यन्निबध्यते तदपरां निदर्शनामाहुः । असदर्थबोधने उत्तरार्धमुदा-

---

वा निदर्शना । सा च पदार्थवाक्यार्थगतत्वेन द्विविधा । 'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डरीकरणं विधोः ॥' इति वाक्यार्थयोरैक्यारोपाद्वाक्यार्थवृत्तिनिदर्शना । 'त्वत्पादनखरत्नीयलाक्षारुणिमसाधनम् । श्रीखण्डलेपजनितसुधांशुश्वैत्यभावनम् ॥'इत्यत्र विषयविषयिणोर्द्वयोरपि पदार्थत्वात्पदार्थवृत्तिनिदर्शनेति हि तैरुक्तम् । तन्न्यायेन 'राजसेवा मनुष्याणा' मित्यादावपि पदार्थवृत्त्यैव तया भाव्यमिति भावः । यत्तु, 'त्वत्पादनखरत्नाना'मित्यादौ पूर्णबिम्बप्रतिबिम्बभावसत्त्वात् दृष्टान्तालङ्कार इति । तन्न । विषयविषयिणोर्हि निरपेक्षयोर्बिम्बप्रतिबिम्बभावे हि दृष्टान्तः । 'त्वमेव कीर्तिमान् राज'न्नित्यादौ लक्ष्ये तथा दर्शनात् । न चेह तथा । उपमानोपमेययोरैक्यारोपेण नैरपेक्ष्याभावात् । एवं च 'शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य । दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥' इत्यत्र दृष्टान्तबुद्धिर्न कार्या । आरण्यकजनवपुर्लावण्यतिरस्कृतराजावरोधरामणीयकस्य आलवालरचनसलिलसेकादिप्रयत्नमन्तरेणापि मृदुलतरपल्लवकुसुमादिसमृद्धिशालिवनलतातिरस्कृतदैनन्दिनसलिलसेचनदोहलादिसम्पादितगुणविशेषसम्भृतोपवनलताभिरामतायाश्च ऐक्यारोपात् । यत्तु, कविमूर्धन्यः पण्डितरायो, निदर्शनायां न रूपकवत्सामानाधिकरण्येन विषयविषयिणोरैक्यारोपः । तथात्वे तयोरभेदप्रसङ्गात् । किं तु यत्रार्थो विषयविषयिणोरैक्यारोपस्तत्र निदर्शना, यत्र शाब्दस्तथा तत्र रूपकमिति व्यवस्थया तयोर्भेद उपपादनीयः । अतः 'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः । इन्दुं चन्दनलेपेन पाण्डरीकुरुते हि सः ॥' इत्यादौ पादनखलाक्षारञ्जनचन्दनलेपकृतैन्दवपाण्डिमकरणयोस्सामानाधिकरण्याभावेन शाब्दारोपाभावादार्थस्यैक्यारोपस्याश्रयणीयतया निदर्शनेति युक्तम् । 'यद्दातुस्सौम्यता सेय'मित्यादौ तु रूपकमेवेति, तदयुक्तम् । बिम्बप्रतिबिम्बभावनियमतद्राहित्याभ्यां रूपकनिदर्शनयोर्भेदस्य रूपकप्रकरणे अस्माभिर्व्यवस्थापितत्वात् । किं च सर्वस्वकारादिभिः 'त्वत्पादनखरत्नाना'मित्यादौ केवलनिदर्शनाया उदाहृतत्वेन तद्विरोधोऽपि दुर्वार इत्यास्तां विस्तरः । अथ तृतीयां निदर्शनामाह—**अपरामिति** । कस्य चित् किञ्चित्क्रियाविशिष्टस्य स्वक्रियया असत्सदर्थयोर्बोध्यबोधकभावो वर्ण्यते चेत् सा अपरा निदर्शना । सा च द्विविधा । बोध्यस्यार्थस्याशोभनत्वशोभनत्वाभ्यामित्यर्थः । श्लोकं व्याचष्टे—**कस्य चिदिति** । उदाहरणं विभज्य दर्शयति—**असदर्थेति** । ननु, 'नश्ये'दित्युदाहर-

---

ङ्कारसर्वस्वकारादिवत् चन्द्रिकाख्यस्वतन्त्रालङ्कारप्रबन्धकर्ता कश्चित्प्राचीन इति वेदितव्यम् ।

हरणम् । अत्र 'नश्येदिति बोधय' दिति वक्तव्ये 'बोधय' दित्यस्य गम्यमानत्वादप्रयोगः । ततश्च राज्ञा चन्द्रेण सह विरुध्य स्वयं नाशक्रियाविशिष्टं तमः स्वकीयनाशक्रियया दृष्टान्तभूतया अन्योऽप्येवं राजविरुद्धश्चेन्नश्येदित्यनिष्टपर्यवसायिनमर्थं बोधयदेव नष्टमित्यर्थनिबन्धनादसदर्थनिदर्शना । तथा उत्तरश्लोके सविता स्वोदयसमय एव पद्मेषु लक्ष्मीमादधानः स्वया पद्मलक्ष्याधानक्रियया भरान् प्रति समृद्धीनां फलं सुहृदनुग्रह एवेति श्रेयस्करमर्थं बोधयन्निबद्ध इति सदर्थनिदर्शना ।

यथा वा—

'उन्नतं पदमवाप्य यो लघुः हेलयैव स पतेदिति ध्रुवम् ।
शैलशेखरगतः पृषद्गणश्चारुमारुतधुतः पतत्यधः ॥'

अत्र गिरिशिखरगतो वृष्टिबिन्दुगणो मन्दमारुतमात्रेणापि कम्पितः पतन् लघोरुन्नतपदप्राप्तिः पतनहेतुरित्यसदर्थं बोधयन्निबद्ध इत्यसदर्थनिदर्शना ।

'चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥'

अत्र समागतं रविं शिरसा सम्भावयन्नुदयाचलः स्वनिष्ठया रविधारणक्रियया 'समागतानां सतामेवं गृहमेधिभिरातिथ्यं कार्य'मिति सदर्थं बो-

---

णे बोध्यबोधकसम्बन्धस्य 'उदयन्नेव सविते'त्यत्र 'विभावय'न्निति पदेनेव प्रतिपादनाभावान्न लक्षणानुगतिरत्रेत्यत आह—**अत्र नश्येदिति** । बोधयदित्यस्यार्थस्य स्फुटतरावगम्यमानत्वात् 'बोधय'दित्यनुपादानेऽपि तद्वर्णनस्य सत्त्वाल्लक्षणसङ्गतिर्युक्तेति भावः । 'स्वयं राजविरोधेन तमो नाशक्रियान्वितम् । स्वकीयनाशक्रियया राजाहितमुपाचरन् ॥ मद्वद्विनश्येत्पुरुष इति लोकान्प्रबोधयत् । तमो विनाशमगमदिति वर्णनतः स्फुटा ॥ लक्ष्मानुगतिरत्रेति नोक्तदोषः कथञ्चन ।' इत्यभिप्रेत्याह—**ततश्चेति** । अत्र राजशब्दश्लेषानुप्राणितैषा निदर्शनेति तयोरङ्गाङ्गिभावसङ्करः। नाशस्याशोभनस्यात्र निबन्धनादेषा असदर्थनिदर्शनेत्याह—**असदर्थेति** । द्वितीयोदाहरणं व्याचष्टे—**उत्तरेति** । **उदयन्नेवेति** । 'रविः स्वोदयवेलायां पद्मेषु कमलार्पणम् । आदधानस्तदाधानक्रियया निखिलान्प्रति ॥ समृद्धानां फलं मित्रपुरुषेष्वर्पणं श्रियाः । इत्यर्थं बोधयन् सन्तं निबद्धोऽस्यामुदाहृतौ ॥ युक्तं लक्ष्मानुगमनमिति भावोऽवधार्यताम् ।' अत्रैव क्रमेणोदाहरणान्तरमाह—**उन्नतमिति** । अत्र 'बोधय'न्निति शब्दाभावेऽपि बोध्यबोधकभावलक्षणसम्बन्धस्य स्फुटं प्रतीयमानता पूर्वोदाहरणवद्बोध्या । लक्षणं योजयति—**अत्रेति** । शेषमतिरोहितार्थम् ।

धयन्निबद्ध इति सदर्थनिदर्शना। अत्र केचिद्वाक्यार्थवृत्तिपदार्थवृत्तिनिदर्शनाद्वयमसम्भवद्वस्तुसम्बन्धनिबन्धनमिति, तृतीया तु सम्भवद्वस्तुसम्बन्धनिबन्धनेति च व्यवहरान्ति। तथाहि—आद्यनिदर्शनायां वाक्यार्थयोरैक्यमसम्भवत्तयोस्साम्ये पर्यवस्यति। द्वितीयनिदर्शनायामपि अन्यधर्मोऽन्यत्रासम्भवन् धर्मिणोस्साम्ये पर्यवस्यति। तृतीयनिदर्शनायां तु स्वक्रियया परान् प्रति सदसदर्थबोधनं सम्भवदेव समतां गर्भीकरोति। 'बोधयन् गृहमेधिन' इत्यादौ हि 'कारीषोऽग्निरध्यापयती' ति वत्तत्समर्थाचरणे णिचः प्रयोगः। ततश्च यथा कारीषोऽग्निः शीतापनयनेन वटूनध्ययनसमर्थान् करोति। एवं वर्ण्यमानः पर्वतः स्वयमुपमानभावेन गृहमेधिन उक्तबो-

---

**अत्र केचिदिति**। अलङ्कारसर्वस्वकारादय इत्यर्थः।ते हि 'सम्भवता असम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बनं निदर्शने'ति निदर्शनां लक्षयन्तः प्रागुदाहृतपदार्थवाक्यार्थवृत्तिनिदर्शनाद्वयमसम्भवद्वस्तुसम्बन्धनिबम्धनमिति तृतीयां सम्भवद्वस्तुसम्बन्धनिबन्धनेति च व्यवहरन्ति। तथा हि 'वाक्यार्थयोरभेदो हि प्रथमायामसम्भवी। द्वितीयायामपि परधर्मोऽन्यत्र हि बाधितः ॥ १ ॥ तत्तुल्यधर्माक्षेपेण धर्मिणोरैक्यमाक्षिपन्। विश्राम्यतीत्यसद्वस्तुव्यतिषङ्गनिबन्धना ॥ २ ॥ तृतीयायामपि तथा स्वकीयक्रियया परान्। प्रत्यसाधोश्च साधोश्च बोध्यसार्थस्य बोधनम् ॥ ३ ॥ साम्यं गर्भीकरोत्येव यतो वाक्यात्तथैव धीः। बोधयन्निति शब्दे हि णिजर्थः प्रेरणा त्रिधा ॥ ४ ॥ प्रेषणाध्येषणा चैव तत्समर्थकृतिस्तथा। आद्ये प्रसिद्धे सर्वत्र प्रकृते तदभावतः ॥ ५ ॥ तृतीयैव तदर्थः स्यात्सा चतुर्भेदसंयुता। अनुमत्युपदेशानुग्रहसाहाय्यकर्मभिः ॥ ६ ॥ भार्यादौ प्रथमा तत्र द्वितीया देशिकादिषु। यत्र चोरभयात्कश्चिद्धावन्तं कश्चिदागतः ॥ ७ ॥ निरुन्धे स निरुद्धश्च हन्यते पथि तस्करैः। अनुग्रहं तत्र हन्तुर्विदधाति निरोधकः ॥ ८ ॥ अनुग्रहस्तत्र बोध्यः प्रकृते परिशेषतः। तुरीय एव युक्तः स्याद्वटूनध्ययनादिषु ॥ ९ ॥ शीतापनयनात्साह्यमाचरत्यनलो यतः। एवं च वर्ण्यः प्रकृते दृष्टान्तीभूय भूधरः ॥ १० ॥ आगतानां सतां कार्यमातिथ्यं मद्वदेव हि। उक्तावबोधकुशलान् गृहस्थान् कर्तुमर्हति ॥ ११ ॥ यथायं पर्वतो भानुमागतं शिरसार्चति। गृहस्थोऽपि तथा सन्तं स्वमन्दिरमुपागतम् ॥ १२ ॥ पूजयेदिति साम्यस्य सदर्थेनैव बोधनात्। एषा सदर्थसम्बन्धमूला युक्ता निदर्शना ॥ १३ ॥ एष प्रघट्टकस्यास्य सम्यग्भावोऽवधार्यताम् ॥' इत्थं च निदर्शनात्रयसाधारणैकलक्षणयोगात्सर्वत्र निदर्शनात्वमनुगतमिति सर्वत्र निदर्शनाशब्दप्रयोग उपपन्नः। इतरेषां मते त्रितयसाधारणतच्छब्दप्रयोगो दुर्घट एव। त्रितयसाधारणप्रवृत्तिनिमित्ताभावात्। अन्यतमत्वेनानुगमस्य त्रितयसाधारणैकसम्भवे अयुक्तत्वात्। औपम्यगमकवस्तुसम्बन्धवर्णनस्यैव निदर्शनात्वादिति मन्तव्यम्। काव्यप्रकाशकारादयः 'अभवन्वस्तुसम्बन्ध उपमापरिकल्पकः।' इत्यादिना अमुमेव पक्षमातिष्ठन्ते। अत्रेदं चिन्त्यम्।

धनसमर्थान् कर्तुं क्षमते । यथायं पर्वतस्समागतं रविं शिरसा सम्भावयति एवं गृहमेधी समागतं सन्तमुचितपूजया सम्भावयेदिति, अतस्सम्भवति बोधनसम्बन्ध इति ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे निदर्शनाप्रकरणम् ॥१८॥

अथ व्यतिरेकः—

**व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।**
**शैला इवोन्नतास्सन्तः किं तु प्रकृतिकोमलाः ॥**

अयमुपमेयाधिक्यपर्यवसायी व्यतिरेकः ।

---

तृतीया निदर्शना नातिरिक्ता अभ्युपगन्तव्या । उत्प्रेक्षयैव चारितार्थ्यात् । तथा हि—'नश्येद्राजविरोधी'त्यादौ तमसि बोधनमुत्प्रेक्ष्यते नाशेन निमित्तेन 'लिम्पतीव तमोऽङ्गानी'त्यत्रेव । न हि ततोऽत्र मात्रयापि वैलक्षण्यमीक्षामहे । इयांस्तु विशेषः । यत्तत्र सम्भावनाद्योतकेवादिशब्दोपादानाद्वाच्या सा । इह तदनुपादानाद्गम्येति । अत एव 'उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ध्रुवम् ।' इत्युदाहरणान्तरे ध्रुवमित्युत्प्रेक्षाव्यञ्जकशब्दोपादानम् । एवं चासम्भवद्वस्तुसम्बन्धनिबन्धनमेकमेव निदर्शनम् । तच्च धर्मिणि धर्म्यन्तरतादात्म्यारोपतद्धर्मारोपाभ्यां द्विविधमित्येव युक्तमित्यस्मद्देशिकपरिशीलितः पन्थाः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां निदर्शनाप्रकरणम् ॥ १८ ॥

व्यतिरेकं लक्षयति—**व्यतिरेक इति** । उपमानोपमेययोर्भेदवर्णनं व्यतिरेक इत्यर्थः । अतिरेकशब्दस्य भेदवाचिनो वीत्युपसर्गमहिम्ना विशिष्टभेदपरतया व्यतिरेक इत्यन्वर्थनामत्वात् । [1]विशिष्टता च तस्योपमानादुपमेयस्याधिक्येन न्यूनत्वेन वेति । द्विविधोऽप्ययं विशेषः 'पाण्ड्योऽयमसार्पितलम्बहारः' इति बिम्बप्रतिबिम्बभावापन्नधर्मकोपमायामुपमानोपमेययोर्भेदसत्त्वादतिव्याप्तिवारणाय । तत्रोपमानादुपमेयस्याधिक्यन्यूनत्वयोरनुक्त्या भेदस्य तद्विशिष्टत्वाभावात् । न चोभयानुक्तिनिबन्धनव्यतिरेके तथाप्यतिव्याप्तिरिति वाच्यम् । तस्योपमेयोत्कर्षापकर्षापर्यवसायिनो विच्छित्तिविशेषकरत्वाभावेन व्यतिरेकत्वाभावादित्यर्थः । 'शैला इवे'त्युत्तरार्धे गुणान्तरनिबन्धनशैलसादृश्यस्य सत्सु सद्भावेऽपि सहजकोमलत्वोक्त्या सतामुपमेयानामाधिक्यप्रतीतेरयं व्यतिरेक इत्याह—**अयमिति** । ए-

---

१. 'विशिष्टता च' इत्यारभ्य 'व्यतिरेकत्वाभावादित्यर्थः' इत्यन्तः पाठक्रमः **ग. ङ.** पुस्तकयोरेव दृश्यते । **क. ख. घ.** पुस्तकेषु तु 'विशिष्टता च तस्योपमानादुपमेयस्याधिक्यन्यूनत्वपर्यवसानतद्वैधुर्याभ्यां द्वैविध्यात् द्विविधोऽयमिति भावः । 'शैला' इवेत्युत्तरार्द्धे' इत्येतावानेवास्ति । एतेषु अयमंशः निपतित इत्यतः, ग. ङ. पुस्तकपाठ एवात्रादृतः । इति वेदितव्यम् ।

यथा वा—

'पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर ? ।
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥'

तन्न्यूनत्वपर्यवसायी यथा—

'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तवमुदे तद्वन्ममाप्यावयो-
स्सर्वं तुल्यमशोक ? केवलमहं धात्रा सशोकः कृतः ॥'

अनुभयपर्यवसायी यथा—

'दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे व्यतिरेकप्रकरणम् ॥१९॥

अथ सहोक्तिः—

**सहोक्तिस्सहभावश्चेद्भासते जनरञ्जनः ।**

षैव रीतिः न्यूनत्वव्यतिरेकेऽप्यनुसन्धेया । अत्रैवोदाहरणान्तरमाह—**पल्लवत इ-ति**। अत्रापि वर्णनीयनृपपाणितलस्योपमेयस्य कल्पतरुपल्लवादुपमानात् कर्णतिरस्का-रकत्वेनोत्कर्षप्रतीतिरुत्कर्षनिबन्धनो व्यतिरेकः कर्णशब्दश्लेषानुप्राणित इति पूर्वोदाहरणा-द्विशेष इति भावः। **रक्तस्त्वमिति**। अत्र 'धात्रा अहं सशोकः कृत' इति विरहिणो नायक-स्य रक्तत्वादिभिर्धर्मैस्सादृश्येऽपि न्यूनत्वविभावनात् न्यूनत्वनिबन्धनो व्यतिरेकः । अनु-भयपर्यवसायि तृतीयमुदाहरति—**दृढतरेति**। अत्रापि श्लेषानुप्राणितत्वमुत्कर्षापकर्षयोरवि-भावनाच्चानुभयव्यतिरेकत्वं द्रष्टव्यम् । काव्यप्रकाशकारस्तु, 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।' इति व्यतिरेकशब्दस्याधिक्यरूपोत्कर्षपरत्वमाश्रित्य व्यतिरेकं लक्षयित्वा, 'हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते । शब्दार्थाभ्यामथाक्षिप्ते श्लेषे तद्वत्त्रिरष्ट तत् ।' इत्यनेन व्यतिरेकस्य हेतुर्हि उपमेयगतोत्कर्षनिमित्तमुपमानगतानिकर्षकारणं च । तयोर्द्वयो-रुक्तिस्तयोरेकतरस्यानुक्तिर्द्वयोर्वानुक्तिरित्यनुक्तित्रितयमुक्त्या सह भेदचतुष्टयम् । उपमानोप-मेयभावस्य शाब्दत्वाशाब्दत्वाभ्यामष्टौ । आक्षिप्ते च तस्मिन् चत्वारो भेदाः । एवं द्वाद-श ते श्लेषेऽश्लेषे च भवन्तीति चतुर्विंशतिर्भेदाः।" इति विभागं प्रतिपादयामास । एषामुदा-हरणानि तत्रैव द्रष्टव्यानि । विस्तरभीतेरनतिचमत्कारत्वाच्चास्माभिरुपेक्षितानि। इति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां व्यतिरेकप्रकरणम् ॥ १९ ॥

सहोक्तिं लक्षयति—**सहोक्तिरिति**। जनरञ्जनः सहृदयहृदयाह्लादी। ईदृशसहभा-

**दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिस्सह ॥**

यथा वा—

'छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैस्समं
मूलं याति सरोजलस्य जडता ग्लानेव मीनैस्सह ।
आचामत्यहिमांशुदीधितिरपस्तप्तेव लोकैस्समं
निद्रा गर्भगृहं सह प्रतिशति क्लान्तेव कान्ताजनैः ॥'

'जनरञ्जन'इत्युक्तेः 'अनेन सार्धं विहराम्बुराशे'रित्यादौ न सहोक्तिरलंकारः॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे सहोक्तिप्रकरणम् ॥२०॥

अथ विनोक्तिः—

**विनोक्तिश्चेद्विना किंचित् प्रस्तुतं हीनमुच्यते ।**
**विद्या हृद्यापि साऽवद्या विना विनयसंपदा ॥**

---

ववर्णनं सहोक्तिरित्यर्थः । उत्तरार्धे कीर्तेर्दिगन्तगमनं प्रति प्रत्यर्थिदिगन्तगमनं हेतुः । अतस्तयोः सहभावो वर्ण्यमानो रसिकजनमनोरञ्जन इति लक्षणवाक्यार्थलक्षणानुगमौ स्फुटत्वादुपेक्ष्य, स्वयमुदाहरणान्तरमाह—**छायेति** । अत्र छायायां श्रान्तिरुत्प्रेक्ष्यते । छायागतं तरुतलसंश्रयणं निमित्तम् । तस्मिंश्च पान्थसहभावोक्तेः सहोक्तिरुत्प्रेक्षानुप्राणिता । एवमुत्तरेष्वपि पादेषु स्वयमूहनीयम् । अत्रापि छायायास्तरुतलसंश्रयणं पान्थानां तदाश्रयणे निमित्तमिति तयोर्निमित्तनिमित्तिनोर्यौगपद्यवर्णनात्सहभावस्य जनरञ्जनता द्रष्टव्या। ननु, 'जनरञ्जन' इति विशेषणमनर्थकमित्यत आह—**जनरञ्जन इति** । न च सहभावस्य 'दिगन्तमगम'दित्यादाविव अत्रापि वर्ण्यमानतया अविशेषात्कुतो न सहोक्तिरिति वाच्यम् । सहभावो ह्यतिशयोक्तिमूलक एव वर्ण्यमानो विच्छित्तिविशेषशालितयाऽलङ्कारः । अत एव सर्वस्वकारादयः तथैवावादिषुः । सा तु कार्यकारणपौर्वापर्यविपर्ययरूपा अभेदाध्यवसायरूपा च । तत्राद्योदाहृता ग्रन्थकृता । द्वितीया यथा—'अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि' अत्रास्तगमनं श्लिष्टम् । प्रत्यर्थिभूपास्तगमनभास्वदस्तगमनयोः श्लेषेणाभेदाध्यवसायः । श्लेषं विनाऽभेदाध्यवसायोऽपि क्वचित् । 'कुमुददलैस्सह सम्प्रति विघटन्ते चक्रवाकमिथुनानि ।' अत्र 'विघटन्ते' इत्येकशब्दोपादानात्सम्बन्धिभेदेन भिन्नयोर्विप्रलम्भविभागयोरभेदाध्यवसायः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां सहोक्तिप्रकरणम् ॥ २० ॥

सहोक्तिप्रतिभटभूतां विनोक्तिं लक्षयति—**विनोक्तिश्चेदिति** । किञ्चिद्विरहप्रयुक्तप्रकृतारम्यत्वोक्तिर्विनोक्तिरित्यर्थः । उत्तरार्धे विनयविरहप्रयुक्तविद्याऽशोभनत्वोक्तेर्विनो-

यथा वा—

'यश्च रामं न पश्येत्तु यं च रामो न पश्यति ।
निन्दितस्स भवेल्लोके स्वात्माप्येनं विगर्हते ॥'

अत्र च रामदर्शनेन विना हीनत्वं विनाशब्दमन्तरेणैव दर्शितम् ।

**[1]तच्चेत्किञ्चिद्विना रम्यं विनोक्तिस्सापि कथ्यते ।**
**विना खलैर्विभात्येषा राजेन्द्र ! भवतस्सभा ॥**

यथा वा—

'आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम् ॥'

अत्र तमःप्रभृतीन् विना निशादीनां रम्यत्वं विनाशब्दमन्तरेण दर्शितम् ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विनोक्तिप्रकरणम् ॥२१॥

क्तिरित्यभिसन्धिः । उदाहरणान्तरमाह—**यश्चेति** । अत्र विनाशब्दाभावेऽपि रामकर्मकदर्शनाश्रयस्य रामकर्तृकदर्शनकर्मताशून्यस्य च लोकनिन्दितत्वोक्त्या तद्दर्शनाभावप्रयुक्तारम्यताप्रतीतेर्विनोक्तिः । एवं किञ्चिदभावप्रयुक्तकिञ्चिद्रम्यत्वोक्तिरपि विनोक्तिरित्याह—**तच्चेदिति** । तदिति बुद्धिस्थपरामर्शः । उदाहरणे 'विना खलैर्विभात्येषा राजेन्द्र ! भवतः सभा ।' इत्यत्र खलाभावप्रयुक्तसभारम्यतोक्तेरियमपि विनोक्तिरिति भावः । उदाहरणान्तरमाह—**आविर्भूत इति** । नन्वत्र विनाशब्दाभावात्कथं विनोक्तिरित्यत आह—**अत्रेति** । तमःप्रभृतिविरहप्रयुक्तं निशादीनां रम्यत्वमौचित्येन गम्यत इति आर्थी विनोक्तिरित्यर्थः । न चात्र विनोक्तिलक्षणे किञ्चिदभावप्रयुक्तकिञ्चिदरम्यत्वरम्यत्वान्यतरवर्णनात्मके किञ्चिदभाववर्णनमात्रस्य वा किञ्चिदरम्यत्वरम्यत्वान्यतरवर्णनस्य वा विनोक्तित्वमस्त्विति वाच्यम् । 'अयमास्ते विना शम्भु'रित्यत्र तृतीयलोचनविनाभावोक्तेः 'विनापि तन्वि ! हारेण वक्षोजौ तव हारिणौ ।' इत्यत्र किञ्चिदभावकिञ्चिद्रम्यत्वयोः प्रतिपादनादतिप्रसङ्गात् । अतः 'किञ्चिदभावप्रयुक्ते'त्यादिविशिष्टलक्षणमुपात्तम् । उक्तोदाहरणयोस्तृतीयलोचनाभावमात्रस्य हाराभाववक्षोजरम्यतामात्रस्य च प्रतिपादनेन तत्तदभावप्रयुक्तरम्यत्वादेरनुक्तेः । 'निरर्थकं जन्म गतं नलिन्याः यया न दृष्टं तुहिनांशुबिम्बम् । उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥' इत्यादावेषा परस्पराभावप्रयुक्तपरस्परारम्यत्ववर्णनाच्चमत्कारातिशयकारिणी द्रष्टव्या ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विनोक्तिप्रकरणम् ॥२१॥

१. अयं विनोक्तिभेदः चन्द्रालोके न दृश्यते ।

अथ समासोक्तिः—

**समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।**
**अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥**

यत्र प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाम्यबलादप्रस्तुतवृत्तान्तस्यापि परिस्फूर्तिस्तत्र समासोक्तिरलङ्कारः । समासेन संक्षेपेण प्रस्तुताप्रस्तुतवृत्तान्तयोर्वचनात् । उदाहरणमयमैन्द्रीति । अत्र हि चन्द्रस्य प्राचीप्रा-

---

उक्तिगर्भालङ्कारप्रस्तावात्समासोक्तिं लक्षयति—**समासोक्तिरिति** । प्रस्तुते वाच्ये अप्रस्तुतस्य परिस्फूर्तिः समासोक्तिरित्यर्थः । इदं च यथाश्रुतं उपमायामपि प्रस्तुते वाच्ये सत्यप्रस्तुतस्योपमानस्यापि प्रतीतेरतिप्रसक्तम् । अतः परिस्फूर्तिरिह वैयञ्जनिकी विवक्षणीया । न च तथापि 'सौमित्रे! ननु सेव्यता'मिति प्रागुदाहृतव्यङ्ग्यस्मृतावतिव्याप्तिः । तत्र प्रस्तुते चन्द्रोदये वर्ण्यमाने अप्रस्तुतसीतादिपरिस्फूर्तेर्वैयञ्जनिकत्वादिति वाच्यम् । विशेषणसाम्यहेतुकत्वेनापि परिस्फूर्तेर्विशेषणीयत्वात् । न च तथापि 'निरीक्ष्य विद्युन्नयनै'रित्याद्येकदेशविवर्तिरूपके अतिव्याप्तिः । आर्ततररसितादिविशेषणसाम्यहेतुकाप्रस्तुतद्रष्टृपुरुषाभेदस्य प्रस्तुते पयोदे गम्यत्वादिति वाच्यम् । अप्रस्तुतवृत्तान्तगोचरत्वेनापि विशेषणीयत्वात् । इदं चानुपदमेव ग्रन्थकृता स्फुटीकरिष्यते । न च तथापि 'असावुदयमारूढः कान्तिमान् रक्तमण्डलः । राजा हरति लोकस्य मानसं मृदुभिः करैः ॥' इति प्रकृताप्रकृतश्लेषे प्रकरणसनाथेनाभिधाव्यापारेण प्रस्तुतचन्द्रादिप्रतीतौ प्रकरणेनाभिधानियन्त्रणे अप्रस्तुतनृपग्राह्यमृदुकरादाननिबन्धनजनमानसेहितसम्पादनादेरप्रस्तुतवृत्तान्तस्य परिस्फूर्तिर्व्यञ्जनयैवेति लक्षणसत्त्वादतिव्याप्तिरिति वाच्यम् । परिस्फूर्तिपदेनारोपस्य विवक्षितत्वात् । एवं च परिस्फूर्तेरारोपत्वेन विवक्षायामुपमाव्यङ्ग्यस्मृत्यादेस्तत एव व्यावृत्तेः । 'विशेषणसाम्येने'त्यस्य ललितालङ्कारातिप्रसङ्गवारकतया सप्रयोजनत्वम् । इतरथा 'सलिले निर्गते तन्वि! सेतुमेषा चिकीर्षति ।' इत्यत्र प्रस्तुतनायिकारूपे धर्मिणि अप्रस्तुतवृत्तान्तसमारोपसत्त्वादतिव्याप्तिप्रसङ्गात् । इत्थं च लक्षणे परिस्फूर्तौ वैयञ्जनिकत्वविशेषणं स्वरूपकथनम् । अतश्च विशेषणसाम्यहेतुकप्रस्तुतधार्मिकाप्रस्तुतवृत्तान्तसमारोपस्समासोक्तिरिति निर्गलितोर्थः । सारूप्यनिबन्धनाप्रस्तुतप्रशंसादौ विशेषणसाम्यबलादप्रस्तुतवर्णनेन प्रस्तुतस्य गम्यत्वमिति समासोक्तिवैपरीत्यम् । तदेतत्सर्वमभिप्रेत्याह—**यत्रेति** । समासोक्तिनामनिर्वचनमाह—**समासेनेति** । विशेषणसाम्यं चतुर्धा । श्लेषेणानुगामितया सादृश्येन समासभेदाश्रयणेन चेति । तत्रोदाहरणमुत्तरार्धमित्यभिप्रेत्योपपादयति । **अत्र हीति** । मुखशब्दस्य प्रारम्भवदनयोः रक्तपदस्यानुरागारुण्ययोः श्लिष्टतया प्रस्तुते प्राचीप्रारम्भलक्षणोदयवर्णनेन मुखादिशब्दश्लेषभित्तिकाभेदाध्यवसायसम्पादितप्रारम्भवदनाद्यभेदनिबन्धनविशेषणसाधारण्यात् 'चुम्बती'त्यस्य वक्त्रसंयोगरूपविशेषार्थकस्य प्रस्तुते चन्द्रमसि बाधाद्विशेषरूप प

रम्भलक्षणमुखसम्बन्धलक्षणे उदये वर्ण्यमाने मुखशब्दस्य प्रारम्भवदनसाधारण्यात् रक्तशब्दस्य अरुणकामुकसाधारण्यात् 'चुम्बती'त्यस्य प्रस्तुतार्थसम्बन्धमात्रपरस्य शक्त्यार्थान्तरसाधारण्याच्च चन्द्रमश्शब्दगतपुल्लिङ्गेन ऐन्द्रीशब्दगतस्त्रीलिङ्गेन तत्प्रतिपाद्येन्द्रसम्बन्धित्वेन चोपस्कृतादप्रस्तुतपरवनितासक्तपुरुषवृत्तान्तः प्रतीयते ।

यथा वा—

'व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि
प्रेङ्खत्कुण्डलशोभिगण्डयुगलं प्रस्वेदिवक्त्राम्बुजम् ।
शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया
यस्मात्कन्दुक ! सादरं सुभगया संसेव्यसे तत्कृती ॥'

अत्र कन्दुकवृत्तान्ते वर्ण्यमाने 'व्यावल्गत्कुचभार'मित्यादि क्रियाविशेषणसाम्याद्विपरीतरतासक्तनायिकावृत्तान्तः प्रतीयते । पूर्वत्र विशेषणानि श्लिष्टानि । इह साधारणानीति भेदः ।

सारूप्यादपि समासोक्तिर्दृश्यते ।

यथा वा—

'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।

---

रित्यागेन साधारण्याच्च परवनितासक्तजारवृत्तान्तः प्रतीयत इत्यर्थः । नन्वस्तूक्तविशेषणसाम्याच्चन्द्रमसि पुरुषवृत्तान्तप्रतीतिः, परवनितासक्तपुरुषसम्बन्धिता तु कुतः प्रतीयत इत्यत आह—**चन्द्रमश्शब्देति** । पुल्लिङ्गेन पुंस्त्वस्य 'ऐन्द्री'ति स्त्रीलिङ्गेन स्त्रीत्वस्य 'ऐन्द्री'ति प्रातिपदिकेन इन्द्रसम्बन्धित्वस्य च व्यक्तौ (इन्द्रचन्द्रमःपदप्रयोगमहिम्ना च) परवनितासक्तपुरुषसम्बन्धिताप्रतीतेरिति भावः । **वृत्तान्त इति** । 'वार्ता प्रवृत्तिर्वृत्तान्त' इति निघण्टूक्तेश्चरित्रापरनामा परस्परानारोपितावयवो व्यापारसमुदायो वृत्तान्तशब्दार्थ इति भावः । अनुगामितया विशेषणसाधारण्यहेतुकां तामुदाहरति—**व्यावल्गदिति** । अत्र 'चलत्कुचभार' मित्यनुक्त्या 'व्यावल्ग'दिति कम्पनातिशयस्य 'आकुले'ति अत्यन्तविस्रंसनस्य 'व्यालोले'ति चाञ्चल्यातिशयस्य 'प्रेङ्ख'दिति व्याधूननातिशयस्य 'प्रस्वेदी'ति प्रोपसर्गेण स्वेदप्रकर्षस्य 'शश्व'दिति श्वासाधिक्यस्य च प्रतीत्या पुरुषायितव्यक्त्यानुकूल्याय । एवमभिस्साधारणैर्विशेषणैः पुरुषायितासक्तनायिकावृत्तान्तः प्रतीयत इत्यर्थः । सारूप्यनिबन्धनां तामुदाहरति—**पुरा यत्रेति** । अत्र नदीस्रोतःपु-

---

१. इदं ख. पुस्तक एव दृश्यते । नान्येषु ॥

बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥'

अत्र वनवर्णने प्रस्तुते तत्सारूप्यात् कुटुम्बिषु धनसन्तानादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते । अत्र च प्रस्तुताप्रस्तुतसाधारणविशेषणबलात्सारूप्यबलाद्वा यदप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत् प्रस्तुते विशेष्ये समारोपार्थम् । सर्वथैव प्रस्तुतानन्वयिनः कविसंरम्भगोचरत्वायोगात् । ततश्च समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः । न तु रूपक इव प्रस्तुते अप्रस्तुतरूपसमारोपोऽस्ति । 'मुखचन्द्र' इत्यत्र मुखे चन्द्रत्वारोपहेतुचन्द्रपदसमभिव्याहारवत् 'रक्तश्चुम्बति चन्द्रमा' इत्यादिसमासोक्त्युदाहरणे चन्द्रादौ जारत्वाद्यारोपहेतोस्तद्वाचकपदसमभिव्याहारस्याभावात् ।

'निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।

---

लिनतरुघनविरलभावादेरनेकस्यैकत्र वर्णनात्मकपर्यायालङ्कारमाश्रित्य वनवर्णने प्रस्तुते तत्सदृशतया कुटुम्बिगतधनादिसमृद्ध्यसमृद्धिविपर्यासाश्रयाप्रस्तुतग्रामनगरवृत्तान्तः प्रतीयत इति सारूप्यनिबन्धना समासोक्तिरिति भावः । तुरीया तु वक्ष्यते । नन्वत्राप्रस्तुतावगमकश्लिष्टसाधारणविशेषणविन्यासोऽनर्थकः । न चाप्रस्तुतावगतये तथाविधविशेषणविन्यासः । अप्रस्तुतस्य कवितात्पर्याविषयतया तदवगमकविशेषणविन्यासे कवेश्शून्यहृदयत्वापत्तेरित्यत आह—**अत्र चेति** । विशेषणसाम्यात् सारूप्यादित्युपलक्षणम् । श्लेषादेरित्यपि द्रष्टव्यम् । तथा च कविसंरम्भाविषयस्याप्यर्थस्य तस्यावगतिः प्रस्तुते धर्मिण्यप्रस्तुतव्यवहारससारोपेण चमत्कारकारितया अलङ्कार इति न कवेः शून्यहृदयतापत्तिः । प्रत्युतैतादृशसन्दर्भघटनया कवेर्वैदग्ध्यमेव प्रकटितं भवतीति भावः । ननु, रूपक इवाप्रस्तुतरूपसमारोपेणापि विच्छित्तिविशेषसद्भावादप्रस्तुतनायिकानायकत्वरूपसमारोपः किं न स्यादित्यत आह—**न तु रूपक इवेति** । रूपके हि 'मुखचन्द्र' इत्यादौ मुखशब्दसमभिव्याहारस्य चन्द्रत्वाद्यारोपप्रयोजकस्य सद्भावाद्रूपसमारोपो युक्तः । न चात्र प्रस्तुतधर्मिवाचकशब्दस्याप्रस्तुतजारादिपदसमभिव्याहारोऽस्ति । नापि विषयविषयिवाचकपदसामानाधिकरण्याभावेऽप्याद्यातिशयोक्ताविवाप्रस्तुतविषयिवाचकपदोपादानमस्ति । तत्रोभयत्रापि विषयिवाचकपदोपादानं नैवास्ति । अतोऽत्र प्रस्तुतचन्द्रादौ जारत्वाद्यारोपोऽसम्भावित एवेति नात्र रूपसमारोपो युक्त इति भावः । ननु, विषयिपुरुषादिवाचकपदसमभिव्याहाराभावेऽपि 'निरीक्ष्य विद्युन्नयनैः पयोद' इत्यत्र पयोदे द्रष्टृपुरुषत्वारोपवदिह जारादिपदाभावेऽपि जारत्वाद्यारोपः स्यादेवेत्यत आह—**निरीक्ष्येति** । अत्र 'विद्युन्नयनै'रिति विद्युतो नयनानीवेति नोपमितस-

धारानिपातैस्सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररासे ॥'

इत्येकदेशविवर्तिरूपकोदाहरण इव प्रस्तुते अप्रस्तुतरूपसमारोपगमकस्याप्यभावात्। तत्र हि 'विद्युन्नयनै'रित्यत्र निरीक्षणानुगुण्यादुत्तरपदार्थप्रधानरूपमयूरव्यंसकादिसमासव्यवस्थितात् उत्तरपदार्थभूतनयनान्वयानुरोधात्पयोदे अनुक्तमपि द्रष्टृपुरुषत्वरूपणं गम्यमुपगम्यते । न चेह तथा निरीक्षणवत् 'त्वय्यागते किमिति वेपत एष सिन्धु'रिति श्लोके सेतुकृत्त्वादिवच्चाप्रस्तुतासाधारणवृत्तान्त उपात्तोऽस्ति । नापि श्लिष्टसाधारणादिविशेषणसमर्पितयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरप्रस्तुतवृत्तान्तस्य विद्युन्नयनवत् प्राधान्यमस्ति । येन तदनुरोधात् 'त्वं सेतुमन्थकृ'दित्यत्रेव प्रस्तुतेऽनु-

---

मासः । तथात्वे पूर्वपदार्थप्राधान्यापत्त्या विद्युतां निरीक्षणक्रियानन्वयापत्तेः । अतस्तदानुगुण्यायोत्तरपदार्थप्रधानात् विद्युत एव नयनानीति रूपकसमासादवयवयोर्विद्युन्नयनयोः रूपकसिद्धौ तदुत्थापितं पयोदे द्रष्टृपुरुषत्वरूपणं पुरुषशब्दसमभिव्याहाराभावाद्गम्यमित्येकदेशविवर्ति रूपकमिदम् । तद्बलात् 'आर्ततरं ररासे'इति पयोदपुरुषे आर्तिविशिष्टरसितक्रियोत्प्रेक्ष्यते । रसितमात्रस्य पयोदे सिद्धत्वेऽपि आर्तिविशिष्टरसितस्यासिद्धत्वादुत्प्रेक्ष्यता । आर्तेश्चेतनधर्मस्याचेतने पयोदे असम्भवादार्तौ च वदने चन्द्रत्वभ्रान्तिर्निमित्तमिति तदुत्थापितार्तिरूपविशेषणासिद्ध्या विशिष्टरसितासिद्धेः । अस्याश्चोत्प्रेक्षायामारोपितपयोदभावः पुरुषो विषयः । विशिष्टं रसितमुत्प्रेक्ष्यम् । चन्द्रसदृशाभिसारिकामुखदर्शनं निमित्तमित्येवमत्र वाक्यार्थः । एवमत्र 'विद्युन्नयनै'रिति अवयवरूपकस्य शाब्दस्य सत्वादवयविरूपकस्य गम्यस्य पुरुषवाचकपदाभावेऽपि सम्भवः । इह जारत्वारोपगमकस्य रूपकस्याभावान्न रूपकसमारोपो युक्त इति भावः । ननु, 'त्वय्यागते किमिति वेपत एष सिन्धुः' इत्यादौ वर्णनीये राज्ञि पुरुषोत्तमत्वरूपणगमकस्यावयवरूपकस्याभावेऽपि तद्रूपकोत्थानवदिहापि तथैव स्यादित्यत आह—**त्वय्यागत इति** । तत्र पुरुषोत्तमत्वरूपकगमकसेतुमन्थकृत्त्वाद्यप्रस्तुतासाधारणवृत्तान्तोपादानात्पुरुषोत्तमत्वभावरूपणं तद्वाचकपदसमभिव्याहारावयवरूपकयोरभावेऽपि युज्यते । न त्वत्र तथाविधः कश्चिदप्रकृतवृत्तान्त उपात्त इति भावः । अत्र 'निरीक्षणव'दिति निरीक्षणस्य पयोदे द्रष्टृपुरुषत्वरूपकगमकत्वाभिधानं न साक्षात् । किं तु 'विद्युन्नयनै'रिति रूपकसमासोत्थापनद्वारेति मन्तव्यम् । ननु, तथापि श्लिष्टविशेषणायां साधारणविशेषणायां चास्यां श्लिष्टसाधारणविशेषणसमर्पितयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरप्रस्तुतवृत्तान्तस्य प्रतीतत्वात्तदनुरोधेन प्रस्तुतवृत्तान्ते अप्रस्तुतवृत्तान्तारोपसिद्धौ तदुत्थापितः प्रस्तुते धर्मिणि अप्रस्तुतवृत्तान्तात्मगतिः । तथापि विद्युन्नयनवदवगतस्य तस्य विधेयत्वलक्षणप्राधान्यगमकमस्ति न किञ्चित्। येन तदन्वयानुरोधेन 'सेतुमन्थकृ' दित्यादाविवाप्रस्तुत-

क्तमप्यप्रस्तुतरूपसमारोपमभ्युपगच्छेम । तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुताहेतुः । यद्यपि प्रस्तुताप्रस्तुतवृत्तान्तयोरिह श्लिष्टसाधारणविशेषणसमर्पितयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वयादस्ति समप्राधान्यम् । तथाप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुते अप्रस्तुतरूपसमारोपोऽङ्गीकार्यः । तथाहि —यथा प्रस्तुतविशेष्ये नास्त्यप्रस्तुतवृत्तान्तस्यान्वययोग्यता, तथैवाप्रस्तुतेऽपि जारादौ नास्ति प्रस्तुतवृत्तान्तस्यान्वययोग्यता । एवं च समप्रधानयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरन्यतरस्यारोपे अवश्यमभ्युपगन्तव्ये श्रुत एव प्रस्तुते अप्रस्तुतवृत्तान्तस्यारोपश्चारुताहेतुरिति युक्तम् । नन्वेवं सति 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः ।'

---

रूपसमारोपः समाश्रयणीयः । अतो विशेषणसमर्पिताप्रस्तुतव्यवहारस्य प्रस्तुतव्यवहारे आरोपासम्भवात् प्रस्तुते धर्मिण्येव तत्समारोपो युक्त इति भावः । ननु, तथापि प्रस्तुताप्रस्तुतवृत्तान्तयोः परस्परमुद्देश्यविधेयभावेनान्वये विनिगमकाभावात् द्वयोरपि भिन्नपदसमर्पितविशेषणयोः 'दण्डी कुण्डली देवदत्त' इत्यादाविव विशेष्येण प्रस्तुतधर्मिणैवान्वयादुभयोरपि विधेयत्वलक्षणप्राधान्यस्य साम्यादप्रस्तुतवृत्तान्तस्यारोप्यत्वसिद्धौ तदुत्थापितः प्रस्तुतचन्द्रादौ जारत्वाद्यारोपः किं न स्यादित्यभिप्रेत्य शङ्कते—**यद्यपीति । तथापीति** । उभयोः प्रस्तुताप्रस्तुतवृत्तान्तयोः प्रस्तुतधर्मिण्यन्वयसिद्धौ तत एव रसानुगुणविभावाद्यभिव्यक्त्या विच्छित्तिविशेषसिद्धौ तत्पश्चात्प्रस्तुते अप्रस्तुतरूपसमारोपाङ्गीकारो मुधेति भावः । ननु, प्रस्तुतवृत्तान्तस्याप्रस्तुते जारादावारोपः किं न स्यात् । न च तत्र तस्य योग्यताविरहान्न विधेयत्वेनान्वय इति शङ्क्यम् । अप्रस्तुतवृत्तान्तस्यापि विशेषणसमर्पितस्य योग्यताविरहसाम्येनान्वयानुपपत्तिप्रसङ्गादित्यत आह—**यथा हीति । समप्रधानयोरिति** । परस्परानन्वयेनैकविशेष्यगामिनोरित्यर्थः । तथा च प्रस्तुताप्रस्तुतवृत्तान्तयोरेकस्मिन्विशेष्ये प्रस्तुते अन्वयसिद्धौ तत एव प्रस्तुते अप्रस्तुतव्यवहारसमारोपरूपायास्समासोक्तेर्लब्धप्रसरतया अप्रस्तुते धर्मिणि जारादौ प्रस्तुतव्यवहारसमारोपस्याप्यनङ्गीकार्यत्वात् तावतैव रसाभिव्यक्तेस्सम्भवात् । न च प्रस्तुतव्यवहारसमारोपादेव तत्र चारुतेति युक्तम् । तथा सति प्रस्तुते चन्द्रादौ कविसंरम्भाभावप्रसङ्गात् । अतः शाब्दोपात्ते प्रस्तुते धर्मिण्येव भिन्नपदोपात्तविशेषणयोरिवान्वये अप्रस्तुतवृत्तान्तसमारोप एव युक्त इति भावः । भिन्नपदोपात्तविशेषणयोरेकत्र द्वयमिति रीत्या विशिष्टवैशिष्ट्यबोधः । अत्र पदादुपस्थितयोर्द्वयोरेकस्य प्राकरणिकतया प्रकरणादिबलेन प्रथमं विशेष्यान्वयबोधः । ततो वक्ष्यमाणरीत्या विशिष्टवैशिष्ट्यावगाही बोध इति भेदः । स वैयञ्जनिकः आभिधानिको वेत्यन्यदेतदिति सिद्धान्तरहस्यं सुधियो विदांकुर्वन्तु । **एवं सतीति** । अप्रस्तुतरूपसमारोपा-

'विशेषणानां साम्येन यत्र प्रस्तुतवर्तिनाम् ।
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥'

इत्यादीनि प्राचीनानां समासोक्तिलक्षणानि न संगच्छेरन् । प्रस्तुते श्लिष्टसाधारणादिरूपविशेषणसमर्पितानुरागपूर्वकवदनचुम्बनाद्यप्रस्तुतवृत्तान्तसमारोपमात्रस्य चारुताहेतुत्वाभ्युपगमेन विशेषणसाम्यकृतकामुकाद्यप्रस्तुतधर्मिव्यञ्जनानपेक्षणादिति चेत्, उच्यते । स्वरूपतोऽप्रस्तुतवृत्तान्तस्यारोपो न चारुताहेतुः । किं त्वप्रस्तुतकामुकादिसम्बान्धित्वेनावगम्यमानस्य तस्यारोपः । तथाभूतस्यैव रसानुगुणत्वात् ।

---

नङ्गीकारेण अप्रस्तुतव्यवहारमात्रसमारोपाभ्युपगमे । 'विशेषणसाम्या'दिति लक्षणं सर्वस्वकारस्य । 'विशेषणानां साम्येने'ति विद्यानाथस्य । **इत्यादीनीति** । आदिशब्दग्राह्याणि 'यत्रोक्ते गम्यतेऽन्योर्थस्तत्समानविशेषणः । सा समासोक्तिरुदिता सङ्क्षिप्तार्थतया यथा ॥' इति विवरणकारस्य । 'कस्मिंश्चिद्गम्यते यत्र गम्यो भेदकसाम्यतः । अप्रस्तुतः सा विज्ञेया समासोक्तिः कवीश्वरैः ॥' इति चन्द्रिकाकारस्य । अन्येषां च भामहादीनामेवञ्जातीयकानि लक्षणानि । अयमभिसन्धिः । 'अयमैन्द्री'त्यादौ श्लिष्टविशेषणप्रतिपादितानुरागपूर्वकवदनचुम्बनादेरप्रस्तुतजारवृत्तान्तस्यारोपेणैव विच्छित्तिविशेषनिर्वाहादप्रस्तुतधर्मिव्यक्तेरनपेक्षिततया तद्व्यक्तिगर्भप्राचीनलक्षणानि विरुध्येरन् । न[1] च अप्रस्तुतव्यवहारसमारोपाभ्युपगमेऽपि 'व्यावल्गत्कुचभार' मित्यादिसाधारणविशेषणायां कुचव्यावल्गनादीनां वस्तुतः कन्तुके सत्वादारोपासम्भवेन अप्रस्तुतरूपसमारोपेणैव विच्छित्तिर्वाच्या[2], सा चाप्रस्तुतव्यक्तिं विना न सम्भवतीति तदभिप्रायेणैव युज्यन्ते प्राचां तद्गर्भाणि लक्षणानीति वाच्यम्[3] । साधारणविशेषणायां तथात्वेऽपि श्लिष्टविशेषणायामप्रस्तुतवृत्तान्तसमारोपेणैव चारुतोपपत्तेस्समासोक्तिमात्रे अप्रस्तुतधर्मिवृत्त्याभिप्रायगर्भप्राचीनलक्षणानुपपत्तिदोषतादवस्थ्यात् । **तथाभूतस्यैवेति** । अप्रस्तुतकामुकादिसम्बन्धित्वेनावगतस्यैवेत्यर्थः । स्वरूपतः अप्रस्तुतवृत्तान्तमात्रसमारोपेऽपि न रसोद्बोधः । 'अयमैन्द्रीमुखं पश्ये'त्यादौ शृङ्गाररसः सहृदयानुभवसाक्षिकः प्रतीयत इति निर्विवादम् । स च न विभावादिप्रतिपादनमन्तरेणेत्यपि । यतो विभावादिप्रतिपत्तिजीवितावधिः शृङ्गारादिको रस इति घण्टाघोषः । न च निरालम्बनस्सोऽस्ति[4] । न च कामिनावन्तरेण तदालम्बनमन्यद्भवितुमर्हतीति प्रस्तुते चन्द्रैन्द्र्योरनारोपितनायिकानायकव्यवहारयोः प्रतिपादनेऽपि रसास्वादासम्भवाद्व्यवहारसमारोपोऽवश्यमङ्गीकार्यः । सोऽपि व्यवहारिणं

---

१. 'किं च' इति ङ. पाठः । २. 'वाच्येति सर्वत्र रूपसमारोप एवाङ्गीकर्तुं युक्तः । स च' इति ग. ङ. पाठः । ३. 'वाच्यम्' इत्यारभ्य 'तादवस्थ्या'दित्यन्तं ङ. पुस्तके नास्ति । ४. 'समस्ती'ति पाठान्तरम् । सम्भवतीत्यर्थः ।

न च तावदवगमने विशेषणपदानां सामर्थ्यमस्ति । अतः श्लेषादिमहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन वदनचुम्बनादिना तत्सम्बन्धिनि कामुकादावभिव्यक्ते पुनस्तदीयत्वानुसन्धानं तत्र भवति । यथा स्वरूपतो दृष्टेन राजाश्वादिना तत्सम्बन्धिनि राजादौ स्मारिते पुनरश्वादौ तदीयत्वानुसन्धानं, तद्वदिति विशेषणसाम्येन वाच्योपस्कारकस्याप्रस्तुतव्यंजनस्यास्त्यपेक्षा । अत एव श्लिष्टविशेषणायामिव साधारणविशेषणायामप्यप्रस्तुतव्यवहारसमारोप इत्येव

---

सम्बन्धिनमनासाद्य नात्मानं लभत इति तत्सम्बन्धितापि व्यवहारस्य प्रत्येतव्या । तथाभूतव्यवहारश्चैन्द्रीदिशौ वाच्यभूते श्रृङ्गारविभावरूपतयोपस्कुर्वन्नलङ्कारतां भजमानस्तदालम्बनं श्रृङ्गाररसं रसिकजनमनोमन्दिरमासादयतीति तदर्थमप्रस्तुतव्यक्तिरपेक्षणीया । अत एव द्वितीयोद्योते लोचनकारः—'नायकव्यवहारो निशाशशिनाविवे'त्युपक्रम्य, ततस्तु वाच्याद्विभावीभूताद्रसनिष्यन्द इत्यभिदधानः स्फुटमेव विशिष्टव्यवहारसमारोपं स्पष्टीचकारेति भावः । नन्वस्तु तथावृत्तान्तस्यैव तत्सम्बन्धिनोऽपि शब्देनाभिधया प्रतिपादनं कुतो न स्यादित्यत आह—**न चेति** । तावदवगमने विशिष्टव्यवहारावगमने । **सामर्थ्यमिति** । स्वरूपतो वृत्तान्तावगमकशब्दोपादानमहिम्ना वृत्तान्तस्याभिधया प्रतीतावपि नाप्रस्तुतधर्मिणस्तेन प्रतिपादनं सम्भवति । तद्वाचकपदाभावादिति भावः । ननु, विशेषणपदैः समर्पिताप्रस्तुतवृत्तान्तस्य सम्भृतसामग्रीकतया निरूपितसम्बन्धिन एव प्रस्तुते धर्मिणि समारोपः स्यादित्यत आह—**अत इति** । स्वरूपतः पदोपस्थितानामपि तेषां समारोपो न श्रृङ्गारानुगुण इति तदनुगुणारोपानुगुण्यायार्थशक्तिमूलव्यञ्जनव्यापारसाहाय्येन ततस्तत्सम्बन्धिकामुकाभिव्यक्तावेव तस्मिन् तदीयत्वानुसन्धाने तेनैव तत्र जनिते रसानुगुणारोपसामग्रीपौष्कल्यमिति न ततः प्रागारोप इति भावः । समुचितदृष्टान्तप्रदर्शनेनामुमेवार्थं विशदयति—**स्वरूपत इति** । अत्रायं बोधक्रमः । श्लिष्टैर्विशेषणैः प्रथमं प्रस्तुताप्रस्तुतवृत्तान्तावगतिः, ततोऽप्रस्तुतवृत्तान्तेन व्यञ्जनसनाथेन तत्सम्बन्धिनः कामुकादेरुपस्थितिः । ततो विशेषणज्ञानस्य वृत्ततया प्रस्तुतवृत्तान्ते कामुकवैशिष्ट्यावगाहिनि तदीयत्वप्रतीतिः कामुकीयोऽयं व्यवहार इत्याकारा । ततो विशेषणतावच्छेदकप्रकारबोधसम्पत्तेः कामुकविशिष्टव्यवहारवैशिष्ट्यावगाहिचन्द्रादिधर्मिक आरोपो भवतीति मध्यकक्ष्यानिविष्टाप्रस्तुतधर्मिव्यक्तिरिति तदपेक्षात्र दुर्वारेति । **अत एवेति** । सम्बन्धिरूपिताप्रस्तुतव्यवहारस्यारोपणीयत्वादेवेत्यर्थः । **साधारणविशेषणायामिति** । न च तत्राप्रस्तुतस्वरूपसमारोप एवास्त्विति वाच्यम् । तद्गमकसामग्र्यभावस्य तत्र पूर्वमेवोक्तत्वात् । न च व्यवहारस्य स्वरूपतः तत्र सत्वेनानारोपणीयत्वमिति वाच्यम् । अप्रस्तुतकामुकसम्बन्धित्वेनैव विशिष्टरूपेण तत्समारोपाभ्युपगमात् । ननु, श्लिष्टविशेषणायां यथा तथास्तु । साधारणविशेषणायां तु व्यवहारसमारोपस्यैवासिद्ध्या विशिष्टव्यवहारसमारो-

प्राचीनानां प्रवादः । कन्दुके व्यावल्गत्कुचभारत्वादिविशिष्टवनितासेव्यत्वस्य कामुकसम्बन्धित्वेनैव समारोपणीयत्वात् स्वरूपतः कन्दुकेऽपि तस्य सत्वेनासमारोपणीयत्वात् । किं च सारूप्यनिबन्धनत्वेनोदाहृतायां समासोक्तावप्रस्तुतवृत्तान्तस्याशब्दार्थस्याप्रस्तुतवृत्तान्तरूपेणैवावगम्यतया तेन रूपेणैव तत्र समारोपसिद्धेः । अन्यत्रापि तथैव युक्तमिति युक्तमेव

---

पसिद्ध्यनुकूलतया अप्रस्तुतधर्मिव्यक्तिर्दूरनिरस्ता । न च तत्राप्रस्तुतवृत्तान्तावगतेरारोपानङ्गत्वे तदवगमकसाधारणविशेषणविन्यासोऽनर्थक इति वाच्यम् । कुचव्यावल्गनादीनां पुरुषायितकंतुकक्रीडोभयासक्तवनितासाधारण्यात्तादृशवनितासेव्यत्वस्य कामुकेऽपि सत्त्वेन तस्य कामुकावगमकतया सेतुमन्थकृत्त्वादिनिबन्धनपुरुषोत्तमभावरूपणवत्कामुकत्वरूपणस्यापि सम्भवेन व्यवहारसमारोपस्यानाश्रयणीयत्वात् । विनापि कामुकसम्बन्धितां व्यावल्गनादिविशिष्टवनितासेव्यत्वस्य विपरीतरतासक्तवनितासेव्यत्वात्मना आरोपेणापि विच्छित्तिसद्भावेन कामुकव्यक्तेरनपेक्षितत्वाच्च । अपिच । श्लिष्टविशेषणायां शब्दतो द्वयोरपि वृत्तान्तयोः पार्थक्येनावगतावप्रस्तुतधर्म्यवगतिप्रणाड्या विशिष्टव्यवहारसमारोपो युक्तः । नचेह तथा सम्भवति 'व्यावल्गत्कुचभार'मित्यादौ कुचभारव्यावल्गनत्वादिना रूपेणैवोपस्थित्या प्रस्तुतवृत्तान्तस्य ततः पार्थक्येनोपस्थित्यभावेन कुतस्तस्यारोपणीयता, कुतस्तरां च अप्रस्तुतकामुकव्यक्तिस्तदनुरोधेन, कुतस्तमां च विशिष्टव्यवहारसमारोप इत्यस्वरसादाह—**किञ्चेति** । 'पुरा यत्र स्रोत'इत्यस्यां सारूप्यनिबन्धनायां समासोक्तावप्रस्तुतैश्वर्यसद्ध्यसमृद्धिसमाश्रयग्रामनगरादिवृत्तान्तस्य कथमपि शब्देन प्रतीयमानतया वनवर्णनप्रस्तावे वर्ण्यमाननदीस्रोतःपुलिनादिविपर्याससादृश्येन गम्यमानस्य तथैवारोपोऽङ्गीकार्य इति तत्र क्लृप्तत्वादवैरूप्याय साधारणविशेषणादिभेदेऽपि विशिष्टव्यवहारसमरोप एवाभ्युपगन्तुं युक्त इति भावः । उपसंहरति—**युक्तमेवेति** । अत्रेदं विचारणीयम् ।'पुरा यत्रे' त्युदाहरणे सारूप्यनिबन्धना समासोक्तिरिति तावदयुक्तम् । प्रस्तुतविशेषणसदृशतया अप्रस्तुतवृत्तान्तावगतिर्हि विशिष्टयोरौपम्यगामिका पर्यवस्यतीति यथा ग्रामनगरादिः पूर्वदृष्टश्चिरकालव्यवधानेन पश्चादवलोक्यमानः प्राग्दृष्टविपरीततया सम्पत्तिदारिद्र्यगृहादिविरलाविरलभावादिना अन्य इव प्रतीयमानः तद्गतचिरकाललुप्यमानप्राकारदीर्घिकातटाकादिभिः स एव ग्रामः तदेवेदं नगरमिति प्रतीयते । तथेदमपि वनं प्राग्लक्ष्मणसीतासहितेन मया दृष्टं सम्प्रति चिरकालपरावृत्तेन परिदृश्यमानं वनगतनदीस्रोतःपुलिनविपर्यासघनविरलभावादिमत्तया अन्यदिव प्रतीयमानं तदवस्थ एवायं शैलसन्निवेशः तदेवेदमिति प्रत्यभिज्ञायत इत्युपमाध्वनेरेवोन्मेषात्समासोक्तिगन्धस्यैवाभावात् । अत एव प्राचां ग्रन्थेषु विशेषणसाधारण्यश्लिष्टत्वसमासभेदाश्रयणैरप्रस्तुतव्यक्तावेव तस्या

लक्षणं वर्णितमुपपद्यते। न च प्रस्तुतवृत्तान्तसादृश्यादप्रस्तुतवृत्तान्तारोप एवास्तु, सादृश्यस्य रूपकोत्थापकताया अपि स्वीकारादिति वाच्यम्। विशेषणसादृश्यस्य विशेष्योपमोत्थापकत्वस्यैवोचितत्वात्। 'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः। पदे पदे विभाति स्म चक्रवाकैः स्तनैरिव॥' इत्यत्र उत्पलनयनादिसादृश्येन सरःश्रियां नायिकौपम्यं गम्यत इति हि सिद्धान्तः। विशेषणानां रूपके सति तेन विशेष्यरूपकगम्यंतायामेकदेशविवर्ति रूपकं प्रागुदाहृतम्। अतस्सारूप्यनिबन्धनत्वमस्या अयुक्तमेवेति तदवलम्बनात्र व्यवहारसमारोपोक्तिश्चिन्त्या। अस्तु वा प्रस्तुतवृत्तान्तसादृश्यादप्रस्तुतग्रामनगरादिवृत्तान्तावगतिः, तस्या अप्रस्तुतरूपकोत्थापकतैवास्तु। न चाप्रस्तुतग्रामनगरादिवाचकपदनिर्देशाभावान्न रूपकं युज्यत इति शङ्क्यम्। तावता वाच्यरूपकासम्भवेऽपि रूपकध्वनिसम्भवात्। अत एव 'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मि'न्निति लोचनकारीयप्रागुदाहृतश्लोके पयोधौ जाड्यावासत्वमुत्प्रेक्ष्यम्। तत्र क्षोभाभावो निमित्तम्। सोऽपि क्षोभकारणसद्भावदशाभावित्वात् विभावनालङ्कारोपस्कृत उत्प्रेक्षाङ्गम्। एवं हि वाक्यार्थः। लावण्यकान्तिभ्यां परिपूरितानि संविभक्तानि हृद्यानि सम्पादितानीति यावत्। तादृशानि दिङ्मुखानि येन। अधुना कोपकषायकालुष्यादनन्तरं प्रसादौन्मुख्येन स्मेरे ईषद्विहसनशीले। तरलायते प्रसादान्दोलनविकाससुन्दरे अक्षिणी यस्यास्तस्याः सम्बोधनम्। कोपकषायपाटलं स्मेरं च तन्मुखं सन्ध्यासमासादितारुणिमपूर्णशशधरमण्डलमेवेति भाव्यम्। क्षोभेण चलितचित्ततया सहृदयस्य न चायं तथेति तत्सुव्यक्तमन्वर्थतया जाड्याश्रय इति मन्ये इति। अत्र लावण्यकान्तिस्मितादिभिर्मुखादिगतैरप्रस्तुतचन्द्रादिगतकान्त्यादीनां सादृश्येनाभिव्यक्तावुक्तरूपरूपकध्वनिरिति व्यक्तमुद्योते। इतरथा तत्रापि मुखे चन्द्रव्यवहारसमारोपस्य दुर्वारत्वापत्तेः। अत एव साधारणविशेषणायामपि व्यवहारसमारोप इति प्राचां प्रवादोऽनुपादेयः। विशेषणसाधारण्यस्य उपमारूपकान्यतरोत्थापकतया साधारणविशेषणव्यक्तविपरीतरतासक्तवनितासेव्यकामुकौपम्यस्य तद्रूपकस्य वा सम्भवेन व्यवहारस्यासमारोपणीयत्वात्। न चैवं रूपकेण विषयापहारादसा न क्वचिदात्मलाभः स्यादिति वाच्यम्। प्रस्तुतवर्णने विशेषणसाधारण्यादिना अप्रस्तुतवृत्तान्ताभिव्यक्तिमुखेनाप्रस्तुतधर्मिव्यक्तावेवास्या लब्धप्रसरत्वात्[1]। 'निरीक्ष्य विद्युन्नयनै'रित्यादौ विशेषणसाधारण्यादिना प्रस्तुतवृत्तान्ताभिव्यक्तिमुखेनाप्रस्तुतधर्मिव्यक्तेरभावान्न समासोक्तिः[2]। अप्रस्तुतावयविरूपसमारोपस्यापि ([3]उक्तैकदेशविवर्तिरूपकविधया) रसाभिव्यक्त्यनुगुणत्वात्। ([4]अत एव विशेषणसादृश्यस्यान्यत्रोपमाप्रयोजकत्वेऽपि नात्र तत्सम्भवः। रसाननुगुणत्वादिति तत्परित्यागः।) व्यवहारसमारोपफलकतायां हि अप्रस्तुतवृत्तान्तस्य सर्वथैव प्रस्तुतानन्वयित्वे तत्र कविसंरम्भाभावेन तदवगमानर्थक्यं

---

१. अयं घ. पाठः। 'मुखेनाप्रस्तुतरूपारोपोत्थाने तस्या लब्धप्रसरत्वात्' इति ग. ङ. पाठः। 'मुखेनाप्रस्तुतस्यालब्धप्रसरत्वात्' इति क. पाठः। 'मुखेन तस्यालब्धप्रसरत्वात्' इति ख. पाठः। २. मुखेन रूपकोत्थानाभावान्न समासोक्तिः।' इति ग. ङ. पाठः। ३. इदं ग. ङ. पुस्तकयोर्नास्ति। ४. इदं ग. ङ. पुस्तकयोरेव दृश्यते।

बीजम् । न च साधारणविशेषणायामिदं सम्भवति । अप्रस्तुतवृत्तान्तावगमकपदविन्यासाभावे तदवगमस्यैवासम्भवात् । [1]यदि तु तद्वाचकपदाभावेऽपि विपरीतरतिकार्यभूतकुचव्यावल्गनादिमुखेनाप्रस्तुतपुरुषायितासक्तवनितासे[2]व्यत्वाभिव्यक्तस्तदारोपः कन्तुके सम्भवतीति विभाव्यते । तदा अस्तु समासोक्तिर्विशेषणसाधारण्यनिबन्धना । यदि तावन्मात्रे न कविसंरम्भः, कन्तुके कामुकत्वारोपेऽपि तदा समासोक्तेः रूपकोत्थापकतया अङ्गत्वमिति नात्र समासोक्तौ विवादः । सर्वथा विशेषणसादृश्यनिबन्धना सा न युक्तेति । श्लिष्टविशेषणायां तु युक्तो व्यवहारसमारोपः । यतस्तत्र श्लिष्टविशेषणैः स्वरूपतोऽर्थद्वयोपस्थितौ प्रस्तुतार्थगोचरशाब्दबोधे वृत्ते अप्रस्तुतानुरागादिप्रतीतिः धर्मिविशेषोपरागं प्रतीक्षमाणा स्वसम्बन्धिनायकमभिव्यञ्जयन्ती तद्रूषिता सती प्रस्तुते धर्मिण्यन्वयमन्तरा कविसंरम्भागोचरतया तत्र स्वसंसर्गमादधातीति युक्तमुत्पश्यामः । यत्तु, सर्वस्वकृता 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्ति'रिति समासोक्तिं लक्षयित्वा, 'विशेषणसाम्यं श्लिष्टतया साधारण्येन समासभेदाश्रयणेनेति त्रेधा विभज्य, श्लेषमूलकविशेषणसाम्यं 'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् । यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ।' इत्यत्र ( [3]सर्वथा विशेषणसादृश्यनिबन्धना सा न युक्तेति विशेषणसाधारण्यम्,) 'तन्वी मनोरमा बाला लोलाक्षी पुष्पहासिनी । विकासमेति सुभगा भवद्दर्शनमात्रतः[4] ।' इत्यत्र च प्रदर्श्य समासभेदाश्रयणकृतसमासोक्तावुदाहृतम् । 'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिबृन्देन सुवेषा हरिणेक्षणा ।' अत्र दन्तप्रभाः पुष्पाणीवेत्युपमितसमासः । सुवेषत्वस्य तत्साधकत्वात् । तस्मिन् कृते पश्चाद्दन्तप्रभासदृशैः पुष्पैरिति मध्यमपदलोपिसमासाश्रयणेन तदुभयलब्धार्थद्वयस्य एकशब्दोपादाननिबन्धनाभेदाध्यवसायेन विशेषणसाधारण्यादप्रस्तुतलताव्यवहारसमारोपप्रतीतेः समासभेदाश्रयणकृतविशेषणनिबन्धना समासोक्तिरिति प्रतिपाद्य, रूपकसमासाश्रयणकृतो भेदो नास्या विषयः । 'निरीक्ष्य विद्युन्नयनै'रित्यादौ रूपकसमासाश्रयणेन एकदेशविवर्तिरूपकस्यैव तत्र लब्धप्रसरत्वात् । तदेवं श्लिष्टविशेषणसमुत्थापिता एका । साधारणविशेषणसमुत्थापिता तु धर्मकार्यसमारोपाभ्यां द्विविधा । 'तन्वी मनोरमा बाले'ति प्रागुदाहृते लतैकवृत्तिविकासाख्यधर्मसमारोपः लताव्यवहारप्रतीतौ कारणम् । अन्यथा नियतस्य लताव्यवहारस्य विशेषणसाम्यमात्रेण प्रतीत्यसम्भवात् । कार्यसमारोपो यथा—'सर्वानवद्यं प्रतिजानते त्वां सन्तः कथं नाम यदुप्रवीर! । करे गृहीता भवता कृपाणी कण्ठग्रहं यत्तनुते परेषाम् ॥' अत्र कृपाण्यां दुष्टनायिकाव्यवहारप्रतीतिः । 'करे गृहीते'ति साधारणं विशेषणम् । परकण्ठग्रहलक्षणकार्यसमारोपो-

---

१. 'न च तद्वाचक' इति ग. ङ. पाठः । २. 'सेव्यत्वाभिव्यक्तिः सम्भवतीति पाठ्यम् । तावतास्याः कामुकत्वरूपारोपगमकत्वसम्भवात् । तत एव रसाभिव्यक्तिसम्भवात् । श्लिष्टविशेषणायां तु' इति ग. ङ. पाठः । ३. इदं ग. ङ. पुस्तकयोर्नास्ति । किं तु ४. 'मात्रतः । इत्यत्र च' इत्यनन्तरं 'विशेषणसाधारण्यं प्रदर्श्य' इति पाठो वर्तते ।

प्राचीनानां लक्षणमिति विभावनीयम् ॥

इति श्रीमदप्पय्यदीक्षितकृतौ कुवलयानन्दे समासोक्तिप्रकरणम् ॥ २२ ॥

---

निमित्तमिति। समासभेदाश्रयणकृता तु उपमासङ्करसमासाभ्यां द्विप्रकारेति पञ्चप्रकारा समासोक्तिरित्युक्तम् । तत्र समासभेदाश्रयणकृतं भेदद्वयं यदुक्तं तन्नोपपद्यते । 'दन्तप्रभापुष्पचिते'त्यत्र सुवेषत्वविशेषणलब्धोपमितसमासाश्रयणे विशेषणोपमया विशेष्योपमानिमित्तभूतया विशेष्यभूतायां तन्व्यां लतोपमाया एव प्राप्त्या व्यवहारप्रतीतिरसम्भवाद्दन्तप्रभासदृशैरिति समासान्तराश्रयणेऽपि तदुत्थापिता लतायां लोलाक्षिसाम्यप्रतीतिरित्युभयथा रूपकगर्भसमासस्थल इवाप्रस्तुतव्यवहारप्रतीतिर्विशेषणसाधारण्याभावेनाशक्यप्रतिपादनत्वात्समासभेदाश्रयणे प्रमाणाभावेन तल्लम्भितार्थद्वयाभेदाध्यवसायासम्भवात् । अतः श्लेषविशेषणसाधारण्यनिबन्धनतया द्विप्रकारैव समासोक्तिः । अधिकं चात्र वक्तव्यं सङ्करप्रकरणे प्रदर्शयिष्यते। अस्यां च व्यवहारसमारोपश्चारुता हेतुः। सोऽपि लौकिके लौकिकस्य । शास्त्रीये शास्त्रीयस्य । लौकिके शास्त्रीयस्य । शास्त्रीये लौकिकस्य व्यवहारस्येति चतुर्धा । चतुर्भेदोऽप्यसौ लौकिकशास्त्रीयव्यवहारयोः बहुविधत्वाद्बहुविधः । तत्र लौकिके वस्तुनि लौकिकस्य यथा—'द्यामालिलिङ्ग मुखमाशु दिशां चुचुम्ब रुध्वाम्बरं शशिकलामलिखत्कराग्रैः । अन्तर्निमग्नचरपुष्पशरातिवातात्किं किं चकार तरुणो न यदीक्षणाग्निः ॥' अत्र प्रकृतभगवदीक्षणाग्न्यादीनां कामुकादीनां च लौकिकत्वमिति लौकिके भगवन्नयनानले लौकिकस्य कामुकव्यवहारस्य समारोपः । अत्र प्रस्तुते रौद्रे श्रृङ्गाररसव्यवहारः । द्वितीयो यथा—'यैरेकरूपमखिलास्वपि वृत्तिषु त्वां पश्यद्भिरव्ययमसंख्यतया प्रवृत्तम् । लोपः कृतः किल परत्वजुषो विभक्तेस्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥' अत्र वेदान्तशास्त्रप्रसिद्धेऽर्थे व्याकरणशास्त्रसिद्धव्यवहारसमारोपः । 'सीमानं न जगाम यन्नयनयोर्नान्येन यत्सङ्गतं न स्पृष्टं वचसा कदाचिदपि यद्दृष्टोपमानं न यत् । अर्थादापतितं न यत्र च न यत्तत्किञ्चिदेणीदृशो लावण्यं जयति प्रमाणविधुरं चेतश्चमत्कारकृत् ॥' अत्र लौकिके लावण्ये मीमांसाशास्त्रसिद्धव्यवहारसमारोपः । भट्टनयसिद्धप्रमाणषट्कस्य निषेध्यत्वात् । तत्र 'सीमान'मित्यादि 'नयनयो'रित्यन्तेन प्रत्यक्षस्य, 'नान्येने'त्यनुमानस्य 'न स्पृष्ट'मित्यागमस्य, 'दृष्टोपमान'मित्युपमानस्य, 'अर्थादापतित'मित्यर्थापत्तेः, 'न च न यदि'त्यभावस्येति । अथ वा वेदान्तशास्त्रसिद्धालौकिकसकलवाङ्मनसपथातीतब्रह्मव्यवहारसमारोपः । 'स्वपक्षलीलालतितैरुपोढहेतौ स्मरे दर्शयतो विशेषम् । मानं निराकर्तुमशेषयूनां पिकस्य पाण्डित्यमखण्डमासीत् ॥' अत्र लौकिके वस्तुनि तर्कशास्त्रसमारोपः । एवं शास्त्रस्य बहुविधत्वात् शास्त्रान्तरसमारोपोऽपि द्रष्टव्यः । एवं शास्त्रीये लौकिकसमारोपोऽपि द्रष्टव्य इत्येषा दिक् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां समासोक्तिप्रकरणम् ॥ २२ ॥

अथ परिकरः—

**अलङ्कारः परिकरः साभिप्राये विशेषणे ।**
**सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥**

अत्र 'सुधांशुकलितोत्तंस' इति विशेषणं तापहरणसामर्थ्याभिप्रायगर्भम् ।

यथा वा—

'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥'

अत्र 'पिनाकपाणे'रिति हरविशेषणं 'कुसुमायुध' इत्यर्थलभ्याहमर्थविशेषणं च सारासारायुधत्वाभिप्रायगर्भम् ।

यथा वा—

'सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥'

अत्र शरीरविशेषणानि तस्य हेयत्वेनासंरक्षणीयत्वाभिप्रायगर्भाणि ।

यथा वा—

'व्यास्थं नैकतया स्थितं श्रुतिगणं जन्मी न वल्मीकतो
नाभौ नाभवमच्युतस्य सुमहद्भाष्यं न चाभाषिषि ।
चित्रार्थां न बृहत्कथामचकथं सुत्राम्णि नासं गुरु-
र्देव ? त्वद्गुणबृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥'

---

विशेषणाश्रयालङ्कारेषु समासोक्तिं निरूप्य तदाश्रयं परिकरं लक्षयति—**अलङ्कार इति** । विशेषणस्य साभिप्रायत्वे परिकरालङ्कार इत्यर्थः । उदाहरणं व्याचष्टे—**अत्रेति** । 'तापं हरतु वश्शिव'इत्यनेन प्रकृतवाक्यार्थे निष्पन्ने विशेषणमिदमतिरिच्यमानं तस्य तापहरणसामर्थ्यसत्त्वात्तापहरणाशासनं युक्तमित्याभिप्रायेणेति विशेषणमलङ्कारान्तरलम्भकतया चारुताहेतुत्वात्सफलमिति युक्तोऽत्र परिकरालङ्कार इति भावः । उदाहरणान्तरमाह—**तव प्रसादादिति** । अत्र, एकोऽहमेव मधुं सहायं लब्ध्वा हरस्य धैर्यच्युतिं कुर्यामिति वाक्यार्थपौष्कल्यात् 'कुसुमायुध इति कुर्यामित्युत्तमपुरुषलभ्याहमर्थविशेषणं, 'पिनाकपाणे'रिति हरविशेषणञ्च वाक्यार्थाननुप्रवेशाद्व्यर्थीभवत् हरसम्बन्धिधैर्यस्य सारतरायुधतया नान्योच्छेद्यस्योच्छेदं कर्तुमसारतरायुधोऽप्यहं शक्त इत्यभिप्रायगर्भतया सार्थकमिति युक्तः परिकर इति भावः । **व्यास्थमिति** । अत्र पर्यायोक्तविधया व्यासस्यैव वेदविभागकर्तृत्वेन रूपान्तरेणाभिधानमुखेन

अत्र 'श्रुतिगणं न व्यास्थ'मित्यादीनि विशेषणानि स्वस्मिन् व्यासाद्यसाधारणकार्यकर्तृत्वप्रतिषेधमुखेन 'नाहं व्यास' इत्याद्यभिप्रायगर्भाणि । अत्राद्ययोरुदाहरणयोरेकैकं विशेषणम् । समनन्तरयोरुदाहरणयोः प्रत्येकं बहूनि विशेषणानि । तत्रापि प्रथमोदाहरणे सर्वाणि विशेषणान्यभिप्रायगर्भाणि पदार्थरूपाणि च । द्वितीयोदाहरणे भिन्नाभिप्रायगर्भाणि वाक्यार्थरूपाणि चेति भेदः । एतेषु व्यङ्ग्यार्थसद्भावेऽपि न ध्वनिव्यपदेशः । शिवस्य तापहरणे, मन्मथस्य कैमुतिकन्यायेन सर्वधन्विधैर्यभञ्जकत्वे, शरीरसंरक्षणार्थं पापमाचरतां मूढत्वे, स्वस्य वर्णनीयराजगुणकथनाशक्तत्वे च, वाच्य एवोपस्कारकत्वादत एव व्यङ्ग्यार्थस्य वाच्यपरिकरत्वात्परिकर इति नामास्यालङ्कारस्य । केचित्तु—निष्प्रयोजनविशेषणोपादाने अपुष्टार्थदोषस्योक्तत्वात् सप्रयोजनत्वं विशेषणस्य दोषाभावमात्रं, न कश्चिदलङ्कारः । एकनिष्ठतादृशानेकविशेषणोपन्यासः परं

---

'नाहं व्यास'इत्यभिप्रायगर्भाणि वाक्यानि वर्णनीयनृपगुणवर्णनाशक्तत्वं बोधयन्ति सन्ति सार्थकानीति, इदमपि परिकरोदाहरणमिति भावः । अत्रोदाहरणभेदाभिधाने हेतुमाह—**अत्रेति** । शेषमतिरोहितार्थम् । नन्वत्रोदाहरणेषु आद्ये 'शिव'इति सकलकल्याणकरत्वप्रवृत्तिनिमित्तेन नाम्ना देवतान्तराणां तापहरणसामर्थ्याभावद्योतनेन तेभ्यःशिवस्य व्यतिरेको गम्यते । द्वितीये सारायुधहरधैर्यभञ्जकत्वोक्त्या मन्मथस्य सर्वातिशायिपराक्रमशालिता । तृतीये ईदृशशरीरसंरक्षणार्थं पापमाचरतां मूढत्वोक्त्या शरीरानित्यताबुद्ध्या ततो वैराग्यसम्पादनेन नित्यशुद्धाविनाशिब्रह्मावगतिसाधनतया शरीरिणां धर्माचरणमेव युक्तमिति । चतुर्थे स्वस्य वर्णनीयनृपगुणकथनाशक्तत्वोक्त्या अपरिच्छेद्यगुणशाली भवानेव निखिलपुरुषार्थप्रेप्सुभिरुपसर्पणीयो नान्ये क्षुद्रभूपा इति सर्वत्र व्यङ्ग्यसद्भावेन ध्वनित्वस्यैव वक्तव्यत्वादित्यत आह—**एतेष्विति** । उक्तोदाहरणेष्वित्यर्थः । **तापहरण इति** । व्यङ्ग्यो हि देवतान्तरापकर्षो वाच्ये तापहरणाशासने मन्मथस्य काव्यार्थापत्तिसमर्थितसकलधनुर्धरधैर्यभञ्जने निरतिशयपराक्रमशालितायाः शरीरसंरक्षणार्थपापाचरणकर्तृमूढतायां निदर्शितव्यङ्ग्यस्य पुरुषार्थलिप्सूनां क्षुद्रनृपसेवनपरित्यागस्य च वर्णनीयनृपगुणकथनासमर्थत्वे वाच्य एवोपस्कारकतया गुणभावेन न ध्वनित्वव्यपदेश इत्यर्थः । गुणीभूतव्यङ्ग्यता तु सम्भवन्त्यपि नानिष्टमादधाति । **एवं च** वाच्यार्थोपस्कारकत्वादेव परिकर इत्यन्वर्थं नामेत्याह—**अत एवेति** । **केचिदिति** । तेषामयं भावः । विशेषणसाभिप्रायत्वे हि परिकरो नामालङ्कार उक्तः प्राचीनैः । न चैतद्युज्यते । 'अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः । मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥' इत्यादावर्णितविततत्वादयोऽर्था न वाक्यार्थोपस्कारका इति

वैचित्र्यविशेषात् परिकर इत्यलङ्कारमध्ये परिगणित इत्याहुः । वस्तुतस्तु अनेक विशेषणोपन्यास एव परिकर इति न नियमः । श्लेषयमकादिष्वपुष्टार्थदोषाभावेन तत्रैकस्यापि विशेषणस्य साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात् परिकरत्वोपपत्तेः ।

यथा वा—

'अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेऽप्यघम् ।
क्षितिभृतैव सदैवतका वयं वनवताऽनवता किमहिद्रुहा ॥'

अत्र हि पुरुहूतपूजोद्युक्तान्नन्दादीन् प्रति भगवतः कृष्णस्य वाक्ये 'गोवर्धनगिरिरेवास्माकं रक्षकत्वेन दैवतमिति स एव पूजनीयः, नत्वरक्षकः पुरुहूतः' इत्येवम्परे, 'वनवते'ति गोवर्धनगिरिविशेषणं काननवत्त्वान्निर्झरादिमत्त्वाच्च पुष्पमूलफलतृणजलादिभिरारण्यकानामस्माकमस्मद्धनानां गवां चायमेव रक्षक इत्यभिप्रायगर्भम् । एवमत्र साभिप्रायैकविशेषणविन्यासस्यापि विच्छित्तिविशेषवशादस्य साभिप्रायस्यालङ्कारत्वसिद्धावन्यत्रापि 'सुधांशुकलितोत्तंस' इत्यादौ तस्यात्मलाभो न निवार्यते । अपि च ए-

---

तद्विशेषणानामपुष्टार्थतया दोषत्वेनोक्तत्वाद्विशेषणसाभिप्रायत्वे अपुष्टार्थत्वदोषाभावमात्रं,न तु कश्चिदलङ्कारः। न च दोषाभाव एवालङ्कारः। 'न कान्तमपि निर्भूषं विभाति वनिताननम् ।' इति ध्वनिकारोक्तन्यायेन लौकिकहाराद्यलङ्कारतुल्यस्थितीनामलङ्काराणां शब्दार्थगतानां दोषाभावानतिरेकात् ।अतस्साभिप्रायैकविशेषणविन्यासे दोषाभावमात्रतया अनलङ्कारत्वेऽपि एतद्विशेष्यगततथाविधानेकविशेषणविन्यासे विच्छित्तिविशेषसद्भावादलङ्कारतैव युक्ता। अत एव 'विशेषणानां साभिप्रायत्वे परिकर' इति लक्षणं वदता सर्वस्वकृता 'विशेषणाना'मिति बहुवचनप्रयोगः कृत इति। आहुरिति सूचितमस्वरसं वस्तुतस्त्वित्यादिना विवृणोति । नह्यनेकविशेषणोपन्यास एव परिकर इति नियन्तुं शक्यम् । तत्कृतविच्छित्तिविशेषस्यानेकविशेषणविन्यास इवैकविशेषणविन्यासेऽपि भवतो निवारयितुमशक्यत्वात् । श्लेषयमकादिष्वपुष्टार्थत्वदोषाभावेन तत्र तथाविधैकविशेषणविन्यासस्य दोषाभावत्वासम्भवेनालङ्कारत्वस्थितावन्यत्रापि तस्य तथात्वे बाधकाभावाच्चेति भावः । एतदेवोदाहरणमुखेन दर्शयति—**अतियजतेति** । एषोऽत्र वाक्यार्थः । स्वाराधनीयदेवतापरित्यागेन इतरदेवतामाराधयतः 'यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान्भवती' ति श्रुत्यनुसारेण इष्टानवाप्तिप्रतीतेः । अस्माकं संरक्षकत्वेन कुलक्रमागतः श्रीमान् गोवर्धन एवाराधनीयः, न त्वसंरक्षकः शचीपतिरिति तदाराधने इष्टानवाप्तेरिति । अत्र वनवतेति विशेषणं स्वरक्षकत्वाभिप्रायगर्भमिति। शेषं निगदव्याख्यातम् । **अपि चेति** । इदं चाभ्युच्चयवादेन एकप-

कपदार्थहेतुकं काव्यलिङ्गमलङ्कार इति सर्वसम्मतम् । तद्वदेकस्यापि विशेषणत्य साभिप्रायस्यालङ्कारत्वं युक्तमेव ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे परिकरप्रकरणम् ॥२३॥

अथ परिकरांकुरः—

**साभिप्राये विशेष्ये तु भवेत्परिकरांकुरः ।**
**चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥**

अत्र 'चतुर्भुज' इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम् ।

यथा वा—

'फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलश्शक्तः क्वाहमेष क्व ते गुणाः ॥'

'फणीन्द्र' इत्यादिविशेष्यपदानि सहस्रमुखत्वाद्यभिप्रायगर्भाणि ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे परिकरांकुरप्रकरणम् ॥२४॥

अथ श्लेषः—

**नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रितः ।**
**सर्वदोमाधवः पायात्स योगङ्गामदीधरत् ॥**

---

दार्थहेतुककाव्यलिङ्गस्यालङ्कारत्वं युक्तम् । तत्र दोषाभावेन तत्कृतविच्छित्तिविशेषस्यान्यथासिद्धसम्भवात् । इह तु साभिप्रायैकविशेषणविन्यासे दोषाभावेनान्यथासिद्धिर्वारयितुमशक्यत्वात् । इति॥इति कुवलयानन्दटीकायां रसिकरञ्जन्यां परिकरप्रकरणम् ॥ २३ ॥

परिकरांकुरं लक्षयति—**साभिप्राय इति** । विशेष्यस्य साभिप्रायत्वे परिकरांकुर इत्यर्थः । इदं परिकरेण व्याख्यातम् । इदं तु चिन्त्यते । परिकरांकुरो नालङ्कारान्तरम् । साभिप्रायपदविन्यासे परिकर इति तं लक्षयित्वा विशेषणविशेष्यपदत्वाभ्यां तस्य द्वैविध्यसम्भवेनास्य तदवान्तरभेदत्वसम्भवात् । विच्छित्तिवैलक्षण्याधीनं ह्यलङ्कारवैलक्षण्यम्। न चैकवाक्यानुप्रविष्टपदसाभिप्रायत्वनिबन्धने तदस्तीत्यलमनेन ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां परिकरांकुरप्रकरणम् ॥ २४ ॥

श्लेषं निरूपयति—**नानार्थेति** । अनेकार्थशक्तविशेषणविशेष्यपदविन्यासः श्लेषः । नानार्थशक्तपदविन्यासमात्रस्य समासोक्तिदीपकादिषु सत्त्वेनातिव्याप्तिः । अतो विशेषणविशेष्यपदविन्यस्य इति । तत्रान्यतरमात्रस्य श्लिष्टत्वेनोभयपदविन्यासाभावादिति केचित् । तन्न । समासोक्त्यादावन्यतरपदविन्यासेऽपि श्लेषव्यवहारस्य सिद्धान्तसम्मतत्वात् । अन्यथा श्लेषेण विशेषणसाम्यं श्लिष्टशब्दनिबन्धनपरम्परितमित्यादिव्यवहारविलोपप्रसङ्गादित्यभि

---

१. चन्द्रालोके तु '**खण्डश्लेषः पदानां चेदेकैकं पृथगर्थता। उच्चलद्भूरि-**

अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना ।
उच्चरद्भूरिकीलालश्शुशुभे वाहिनीपतिः ॥

अनेकार्थशब्दविन्यासः श्लेषः । स च त्रिविधः प्रकृतानेकविषयः अप्रकृतानेकविषयः प्रकृताप्रकृतानेकविषयश्चेति । 'सर्वदे'त्यदीनि क्रमेणोदाहरणानि । तत्र 'सर्वदोमाधव' इति स्तोतव्यत्वेन प्रकृतयोर्हरिहरयोः कीर्तनं प्रकृतश्लेषः । अब्जं कमलं अब्जश्चन्द्रस्तयोरुपमानमात्रत्वेनाप्रकृतयोः कीर्तनमप्रकृतश्लेषः । वाहिनीपतिस्सेनापतिः समुद्रश्च, तत्र समितौ शस्त्रप्रहारोत्पतद्रुधिरस्य सेनापतेरेव वर्णनं प्रकृतमिति प्रकृताप्रकृतश्लेषः । यथा वा—

'त्रातः काकोदरो येन द्रोग्धापि करुणात्मना ।
पूतनामारणख्यातः समेऽस्तु शरणं प्रभुः ॥'

---

प्रेत्याह—**अनेकार्थेति** । वर्ण्येत्यादिद्वितीयपादं व्याचष्टे—**स चेति** । चस्त्वर्थः । प्रकृतानेकविषय इत्यादावनेकग्रहणं स्वरूपकथनम् । प्रकृतविषय इत्येतावतैव विवक्षितलाभादनेकार्थविषयतामन्तरा श्लेषाप्राप्तेः । उदाहरणानि व्याचष्टे—**तत्रेति** । अत्र सर्वदा उमाधवः सर्वदः माधव इति पदच्छेदेनार्थद्वयबोधकपदविन्यासात् द्वयोरपि वर्ण्यतयायमाद्यश्लेष इत्यर्थः । 'हरिणाहितसक्तिने'त्यब्जाविशेषणम् । कमलपक्षे हरिणेति भिन्नं पदम् । हरिणा सूर्येण आहिता सक्तिः स्वसम्बन्धो यस्य तेनाहितसक्तिनेति पदद्वयम् । चन्द्रपक्षे हरिणेन मृगेण आहिता सक्तिर्यस्येत्येकं पदम् । तृतीयार्धे समुद्रपक्षे उच्चरन्ति भूरीणि कीलालानि सलिलानीति, सेनापतिपक्षे कीलालानि रुधिराणि यस्य स तथाविध इति विशेषणं नानार्थमित्यर्थः । अनेनैव क्रमेणोदाहरणान्तरमाह—**त्रात इति** । अत्र यदुनाथरघुनाथयोर्द्वयोरपि वर्णनीयत्वम् । तत्र यदुनाथपक्षे काकोदरः सर्पः कालीयाख्यः येन त्रातः अभीष्टलम्भनेनानुगृहीतः । सः पूतनायाः मारणेन ख्यातः प्रसिद्ध इत्यर्थः । रघुनाथपक्षे काकः काकासुरः अदरः भयशून्यः त्रात इति पूर्ववत् । 'पूतनामा' 'रणख्यात' इति पदद्वयं स्पष्टार्थमिति । अत्र यदुनाथपक्षे सावरोधकालिन्दीसलिलविहारविश्रृङ्खलोत्साहे भगवति दुरन्त तथाविधापराधशाली कालीयोऽपि त्रात इत्युक्तेस्त्राणप्रतिबन्धकापराधसद्भावेऽपि त्राण-

---

**कीलालः शुशुभे वाहिनीपतिः ॥ भंगश्लेषः पदस्तोमस्यैव चेत्पृथगर्थता । अजरामरता कस्य नायोध्येव पुरी प्रिया ॥ अर्थश्लेषोऽर्थमात्रस्य यद्यनेकार्थसंश्रयः । कुटिलाः श्यामला दीर्घाः कटाक्षाः कुन्तलाश्च ते ॥'** इति पाठः ।

'नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः।
सदृशे वनवृद्धानां कमलानां त्वदीक्षणे ॥'
'असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति लोकस्य मानसं मृदुलैः करैः ॥'

अत्राद्ये स्तोतव्यत्वेन प्रकृतयोः रामकृष्णयोः श्लेषः। द्वितीये उपमानत्वेनाप्रकृतयोः पद्महरिणयोः श्लेषः। तृतीये रात्रिवर्णनप्रस्तावे प्रकृ-

---

रूपकार्यवर्णनाद्विभावनालङ्कारः। तत्र 'करुणात्मने'ति करुणापदार्थेन सापराधत्राणस्य समर्थनीयस्य समर्थनात्पदार्थहेतुकं काव्यलिङ्गमिति विभावनाकाव्यलिङ्गयोरङ्गाङ्गिभावसङ्करः। तस्य च श्लेषस्य च परस्परनिरपेक्षतया तिलतण्डुलन्यायेन संसृष्टिः। 'पूतनामारणख्यात' इति विशेषणं तथाविधाहिताचरणस्वभावराक्षसीसंहरणविख्यातस्य भगवतस्सर्वातिशायिबलशालितया रक्षकत्वं सम्भवतीति सामर्थ्याभिप्रायगर्भमिति परिकरालङ्कारः। तस्य च पूर्वोक्तानां च संसृष्टिः। **नीतानामिति**। अत्र कमलशब्दः पद्महरिणोभयार्थः। पद्मपक्षे लुब्धैस्तृष्णाशालिभिः। भूरिभिः शिलीमुखैः भ्रमरैराकुलतां नीतानां। वने जले संवृद्धानामित्यर्थः। हरिणपक्षे भूरिशिलीमुखैः भूरिशरैः लुब्धैर्लुब्धकैः व्याधैरिति यावत्। तैर्वने वृद्धानामुपचितानामित्यर्थः। अत्र पक्षद्वयेऽपि 'नीताना'मित्यादिविशेषणं झङ्कारचरणाभिघातसमाहारसमासादितान्दोलनविस्मरसौरभशालितालाभाय। तेन तादृशकमलौपम्यं व्याधविशिखकृताकुलीभावोक्त्या कान्दिशीकत्वव्यक्त्या तादृशहरिणनयनसादृश्यमीक्षणयोर्वर्णितमिति तद्विशेषणानामुक्ताभिप्रायगर्भतया परिकरालङ्कारः। तस्य च श्लेषस्य चैकवाचकानुप्रवेशसङ्करः। तदुत्थापिता चेक्षणयोः कमलोपमेति तयोरङ्गाङ्गिभावसङ्करः। **असावुदयमिति**। अत्र चन्द्रपक्षे उदयमुदयाचलमौलिमारूढः लोहितमूर्तिः मृदुभिरल्पप्रभैः करैः किरणैरिति। नृपपक्षे उदयं राज्याभिषेकं प्राप्तः अनुरक्तराज्यः मृदुभिः प्रजोपप्लवानाधायिभिः करैः स्वग्राह्यधनैः लोकस्य मनो रञ्जयतीति वाक्यार्थः। एषूदाहरणेषु क्रमेण श्लेषमुपपादयति—**अत्रेति**। प्रकृताप्रकृतश्लेषोदाहरणे न श्लेषोऽलङ्कारः। अर्थद्वयस्याभिधाव्यापारेण तुल्यवृत्तिकत्व एव तस्योन्मेषात्। अत एव प्रकृतश्लेषे अप्रकृतश्लेषे च प्रकरणादीनामभिधानियामकानामभावादर्थद्वयेऽपि शब्दस्य तुल्यवृत्तित्वात् श्लेषालङ्कारः। इह तु प्रकृतार्थे प्रकरणादिना नियन्त्रितायां तस्यां नाप्रकृतार्थं यावदभिधावति तत्राप्राकरणिकेऽर्थे कुण्ठितत्वेन तस्यामलब्धप्रसरायां शब्दो व्यञ्जनया वृत्त्या तमर्थमवगमयतीति शब्दशक्तिमूलानुरणनतुल्यव्यङ्ग्यध्वनिः। 'भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥' अत्र नृपे कस्मिंश्चिद्वर्ण्यमाने 'भद्रात्मन'इत्यादिविशेषणैः मङ्गलात्मकस्य विशालकुलोद्भवस्यानेकधाचक्रसङ्ग्रहशालिनः प्रत्यर्थिनिवारकस्य राज्ञः पाणिरभूदिति प्रकृतवाक्यार्थे प्रकरणसनाथे-

तस्य प्र यग्रोदितचन्द्रस्य अप्रकृतस्य नवाभिषिक्तनृपतेश्च श्लेषः । यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चः । तत्प्रकृताप्रकृताभिधानमूलकस्योपमादेरलङ्कारस्य व्यङ्ग्यत्वाभिप्रायं, नत्वप्रकृतार्थस्यैव व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्यापि शब्दशक्त्या प्रतिपाद्यस्याभिधेयत्वावश्यंभावेन व्यक्त्यनपेक्षणात् । यद्यपि प्रकृतार्थे प्रकरणबलात् झटिति बुद्धिस्थे सत्येव पश्चान्नृपतितद्राज्यधनादिवाचिनां राजकरादिपदानामन्योन्यसन्निधानबलात्तत्तद्विषयशक्त्यन्तरोन्मेषपूर्वकमप्रकृतार्थः स्फुरेत् । नैतावता तस्य व्यङ्ग्यत्वम् । शक्त्या प्रतिपाद्यमाने सर्वथैव व्यक्त्यनपेक्षणात् । पर्यवसिते प्रकृतार्थाभिधाने पश्चात्स्फुरतीति चेत् कामं गूढश्लेषो भवतु । अस्ति चान्यत्रापि गूढश्लेषः ।

---

नाभिधाव्यापारेण शब्दतः प्रतीते तत्पश्चाद्भद्रादिसामर्थ्यमहिम्ना भद्रजातीयस्य विशालपृष्ठास्थिसमुन्नतेर्भ्रमरपरीतस्योत्कृष्टगजस्य कर इत्यप्रकृतगजाद्यर्थस्य प्रतीतिस्तावदनुभवसिद्धा । सा च नाभिधाव्यापारेण । प्रकरणादिना तस्या नियमनात् । अतो व्यञ्जनव्यापारेण तत्प्रतीतिरित्यप्राकरणिकार्थस्य व्यङ्ग्यतया शब्दशक्तिमूलानुरणनोपमाव्यङ्ग्यध्वनिरत्रेति मम्मटोपाध्यायादयः । तत्कथं प्रकृताप्रकृतश्लेषोदाहरणे श्लेषोऽलङ्कार इति शङ्कते—**यदत्रेति**। सत्यमत्र शब्दशक्तिमूलव्यङ्ग्यध्वनिरिति तद्विषयो नाप्राकरणिकोऽर्थः । अभिधालक्षणासरणिसीमातिपातिविलक्षणव्यञ्जनव्यापारदवीयस्त्वात् । तस्य चाभिधागोचरत्वात् । न च प्रकरणादिना प्रकृतार्थे अभिधाया नियन्त्रणात् न तस्यास्तत्र प्रसर इति वाच्यम् । नियन्त्रणं हि तस्याः नाप्रकृतशाब्दबोधाजनकत्वापादनम् । प्रकृतार्थविषयकाभिधायाः अप्रस्तुतार्थशाब्दबोधाजनकत्वस्य स्वतास्सिद्धतया प्रकरणानियम्यत्वात् । न चाप्रकृतार्थगोचराभिधायास्तदजनकत्वापादनं नियन्त्रणम् । प्रकरणादीनां प्रकृतार्थशाब्दबोधमात्रहेतुत्वेन तदसामर्थ्यात् ।अपि च । प्रकरणादीनां प्रकृतार्थगोचरतात्पर्यग्राहकतयाऽन्यथासिद्धानां नाप्रकृतशाब्दबोधप्रतिबन्धकत्वमित्यप्रकृतार्थस्याप्यभिधाव्यापारेण प्रतीतेः न व्यङ्ग्यत्वं युक्तमित्यभिप्रेत्य, शब्दशक्तिमूलानुरणनव्यङ्ग्यध्वनेर्विषयमाह—**तदिति** । प्रकरणादिना प्रकृतार्थाभिधानपर्यवसाने अप्रकृताभिधाने वाक्यस्यासम्बन्धार्थकत्वं मा प्रसाङ्क्षीदिति तेन प्रकृतार्थसोपमा व्यज्यत इति शब्दशक्तिमूलानुरणनव्यङ्ग्या सेति प्राचां भाव इति भावः। **यद्यपीति**। प्रकरणेन प्रकृतार्थतात्पर्यग्रहेण प्रथमं तद्गोचरशाब्दबोधे जनिते पश्चादप्रकृतार्थस्य बोधोदयात् कुतो न व्यङ्ग्यत्वमिति न शङ्कनीयम् । पश्चात्तत्तदर्थगोचरशक्त्यन्तरोन्मीलनेनाप्रकृतार्थस्य स्फुरणेऽपि न व्यङ्ग्यत्वम् । पश्चात्प्रतीत्या हि स गूढश्लेष इति भण्यत इति भावः । अन्ये तु, प्रकरणादेरप्रकृतगोचराभिधासामर्थ्यप्रति-

यथा—

'अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥'
'मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत्तमः ।
दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसन्निधौ ॥'

अत्र हि समासोक्त्युदाहरणयोः प्राकरणिकेऽर्थे प्रकरणवशात् झटिति बुद्धिस्थे विशेषणसाम्यादप्रकृतोऽपि वृद्धवेश्यावृत्तान्तादिः प्रतीयते । तत्र समासोक्तिरभङ्गश्लेष इति सर्वेषामभिमतमेव । एवमन्यत्रापि गूढश्लेषे ध्वनिबुद्धिर्न कार्या ।

---

बन्धकत्वे द्वितीयस्मिन्नर्थे यत्र नाभिधा संक्रामति तत्रापि यदि संक्रामकशब्दसमभिव्याहारः स्यात् । तदा प्रकरणादेस्तेन कुण्ठनशक्तौ विहतायां पूर्वं बाधिताप्यभिधाशक्तिः प्रतिप्रसूयत इति तया अप्रकृतार्थस्फूर्तिरिति नासौ ध्वनेर्विषयः । यथा 'दृष्ट्या केशव-गोप! रागहृतया किञ्चिन्न दृष्टं मया तेनैव स्खलितास्मि नाथ! पतितां किं नाम नालम्बसे । एकस्त्वं विषमेषु दीनमनसां सर्वाबलानां गतिर्गोप्यैवं गदितस्सलेशमवताद्गोष्ठे हरिर्वाश्चिरम् ।' अत्र हे केशव! यतो गोधूलिहृतया दृष्ट्या न किञ्चिद्दृष्टं मया। तेन कारणेन मार्गे स्खलितास्मि । अतः पतितां सतीं मां किं नाम हस्तेन नालम्बसे । एको मुख्यः अतिशयेन बलवान् निम्नोन्नतेषु सर्वेषामबलानां बालवृद्धादीनां गन्तुमशक्नुवतां गतिरालम्बनोपाय इत्येवंविधेऽर्थे प्रकरणादिना यद्यप्येते नियमिताभिधाशक्तयः शब्दाः । तथापि सा द्वितीयेऽर्थे विवरिष्यमाणे निरुद्धा सती 'सलेश' मित्यनेन शब्देन प्रत्युज्जीविता । सलेशं ससूचनमित्यर्थः । अल्पीभवनं हि सूचनमेव । हे केशव! गोपस्वामिन्! रागान्धीकृतया दृष्ट्या स्खलिता खण्डितचारित्रा जातास्मि । 'पतिता' मिति भर्तृपरित्यागेन। ईदृशीं मां किमिति नालम्बसे नाधारोभवसि । 'एक' इति असाधारणसौभाग्यशाली त्वमेव। यतः सर्वासामबलानां मदनपरवशमानसानामीर्ष्याकालुष्यनिरोधेन सेव्यमानः सन् गतिः जीवितरक्षणोपाय इत्येवमयं द्वितीयोऽर्थः । प्रकरणादिना निरुद्धाभिधाशक्तिकशब्दप्रतिपाद्यमानो ध्वनिपदविगमनप्रस्थितः 'सलेश'मिति शब्देन सूचिततया ततो गलहस्तिताऽभिधाव्यापारमासाद्य वाच्यतामापन्नः श्लेषालङ्कारविषयः । अन्यत्र तु, तादृशाभिधाप्रत्युज्जीवनाभावे अर्थान्तरध्वनिपद्धतिमध्यास्त इति वदन्ति । अन्यत्रापि गूढश्लेषमुदाहरति—**अयमतिजरठा इति** । अयं प्रस्तुतो गिरिः । अतिजरठाः अतिजीर्णाः। अलघुभिर्महद्भिः। विलम्बिभिर्लम्बमानैः पयोधरैर्मेघैः। उपरुद्धा आक्रान्ताः । असुमतां प्राणिनां औन्नत्यकण्टकिगुल्मलताभिरगम्यरूपाः परिणतदिक्करिकाः वप्रक्रीडादिषु परितो नम्रदिग्गजाः। तटीः प्रपातान्। बिभर्तीति प्राकरणिकार्थे प्रकरणेन प्रथममवगते पश्चाद्विशेषणसाम्यात् 'अतिजरठा' इति प्राग्वत् । अलघुविलम्बिपयोधरैः स्तनैरुपरुद्धाः । प्रा-

यथा वा—

'रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकास्समं वधूभिर्वलभीर्युवानः ॥'

अत्र द्वितीयान्तविशेषणसमर्पितार्थान्तराणां न शब्दसामर्थ्येन वधूभिरन्वयः । विभक्तिभेदात् । न च विभक्तिभेदेऽपि तदन्वयाक्षेपकं साधर्म्यमिह निबद्धमस्ति । यतः—

'एतस्मिन्नधिकपयश्श्रियं वहन्त्यः संक्षोभं पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः ॥'

इत्यत्रेवाक्षिप्तश्लेषो भवेत् । 'सम' मित्येतत्तु क्रियाविशेषणं सहार्थत्वेनाप्युपपन्नम् । वधूषु श्लिष्टविशेषणार्थान्वयात् प्राक् द्रागप्रतीतं साम्यार्थं नालम्बते । तस्मादर्थसौन्दर्यबलादेव तदन्वयानुसन्धानमिति गूढश्लेषः । तदनु तद्बलादेव समशब्दस्य साधर्म्यार्थकल्पनमिति वाच्यस्यैवोपमालङ्कारस्याङ्गमयं श्लेष इत्यलं प्रपञ्चेन । तस्मात्सिद्धं श्लेषत्रैविध्यम् । एवं च श्लेषः प्र-

---

णिनां वार्धकलम्बस्तनीत्वजर्झररूपादिभिरगम्याः सम्पर्कायोग्याः । किणाकारपरिणततारुण्यात्स्याकृतनखक्षतविशेषशालिनीः तटीः कुचोपरिभागानित्यप्रस्तुतवृद्धवेश्यावृत्तान्तः । द्वितीयोदाहरणे रजनीवर्णनप्रस्तावे । अर्यमोपलाः सूर्यकान्तमणयः सौरकिरणोपसंहारादग्नेर्मन्दतां प्राप्ताः । तमश्च दर्शितश्वयथु दर्शिताभिवृद्धिकमभवत् । दृष्टयः नयनानि । तिमिरजमन्धकारजन्यं दोषं विषयाग्रहणम् । ओषधिपतेश्चन्द्रस्य । असन्निधावनुदये । सिषेविरे प्रापुः इति प्रकरणेन प्रथमं प्रतीते पश्चात् श्लेषकृतविशेषणसाम्यादोषधिपतेर्वैद्यस्यासन्निधौ मन्दाग्निताङ्गशोफदृष्टिगततिमिरादिदोषप्राप्तिरूपाप्रस्तुतरोगिवृत्तान्तश्च समासोक्तिविधया प्रतीयत इत्यर्थः । एवमयं गूढश्लेषे लक्ष्ये प्रचुरप्रयोग इति स सर्वोऽपि न ध्वनिमार्गगोचर इति प्रदर्शयन् गूढश्लेषोदाहरणान्तरमाह—**रम्या इति** । अत्र विभक्त्यैकरूप्येण वलभिष्वेव द्वितीयान्तविशेषणसमर्पितानां प्रथममन्वयः । न तु वधूभिः । विभक्तिभेदात् । विभक्तिभेदेऽपि तदन्वयापेक्षकसादृश्यनिबन्धे वा 'एतस्मिन्नधिकपयश्श्रियं वहन्त्य' इत्यादाविवाक्षिप्तश्लेषो वा स्यात् । न तु तथा सादृश्यमुपनिबद्धम् । 'सम'मित्यस्य साहित्यार्थान्तरमादायाप्युपपत्तेः । वधूषु श्लिष्टविशेषणान्वयप्रतीत्यनन्तरमेव तस्य विषयसौन्दर्यबलेन साम्यार्थानुसन्धानमिति गूढश्लेषः वाच्यस्यैवोपमालङ्कारस्योत्थापक इति भावः । उपसंहरति—**तस्मादिति** । प्रकारान्तरेणापि श्लेषस्य द्वैविध्यमाह—**एवं चेति** । तथा च एकैकस्य द्वैरूप्येण श्लेषः

१. 'तस्य साम्यार्थविषयसौन्दर्यसाम्यार्थानुसन्धान 'मिति' इति क.ख.घ. पाठः ।'

कारान्तरेणापि द्विविधः सम्पन्नः । उदाहरणगतेषु अब्जकौशलवाहिनीपत्यादिशब्देषु परस्परविलक्षणं पदभङ्गमनपेक्ष्यानेकार्थक्रोडीकारादभङ्गश्लेषः । 'सर्वदोमाधवः' 'योगङ्गां' 'हरिणाहितसक्तिरि'त्यादिशब्देषु परस्परविलक्षणं पदभङ्गमपेक्ष्य नानार्थक्रोडीकारात्सभङ्गश्लेष इति । तत्र सभङ्गश्लेषश्शब्दालङ्कारः । अभङ्गश्लेषस्तु अर्थालङ्कार इति केचित् । उभयमपि शब्दालङ्कार इत्यन्ये । उभयमप्यर्थालङ्कार इति स्वाभिप्रायः । एतद्विवेचनं तु चित्रमीमांसायां द्रष्टव्यम् ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे श्लेषप्रकरणम् ॥२५॥

---

षोढा सम्पन्न इति भावः । उक्तोदाहरणेष्वेव द्वैविध्यं दर्शयति—**उदाहरणेति । तत्रेति** । सभङ्गाभङ्गयोरित्यर्थः । **सभंगश्लेष इति** । तत्र हि 'सर्वदोमाधव' इत्यदौ सर्वदः सर्वदेति पदद्वयस्य जतुकाष्ठन्यायेन सम्बन्धात्सभङ्गश्लेषः शब्दालङ्कारः । शब्दवृत्तित्वात् । अभङ्गश्लेषस्तु, अब्जकमलादिशब्देषु पदभेदाभावेन पदद्वयसम्बन्धाभावात् शब्दवृत्तितानुपपत्तेः एकस्मिन् शब्दे अर्थद्वयस्य वाच्यतया सम्बद्धत्वादयमेकवृन्तगतफलद्वयन्यायेन अर्थालङ्कार इति केचिदिति भावः । **एतद्विवेचनमिति** । सभङ्गाभङ्गभेदेन द्विविधोऽप्ययं श्लेषोऽर्थालङ्कार एव । अनेकार्थप्रतिपादनात्मनस्तस्यार्थालङ्कारताया एव युक्तत्वात् । आश्रयाश्रयिभावस्यैव लौकिकालङ्कारवत्तत्तदलङ्कारत्वप्रयोजकत्वम् । लौकिकालङ्कारो हि कटकमकुटादिर्हस्तपादादिनिष्ठो हस्तपादाद्यलङ्कारत्वेन व्यवह्रियते । एषैव रीतिः काव्यगतालङ्कारेषु । न च शब्दान्वयव्यतिरेकानुविधायित्वादस्य शब्दालङ्कारत्वमिति वाच्यम् । तथात्वे सर्वेषामेवालङ्काराणां तदन्वयव्यतिरेकानुविधायित्वेन शब्दालङ्कारत्वप्रसङ्गात् । न चाभङ्गश्लेषस्य एकवृन्तगतफलद्वयन्यायेन एकपदाश्रितार्थद्वयनिष्ठतया अर्थालङ्कारत्वम् । सभङ्गस्य तु जतुकाष्ठन्यायेन शब्दद्वयसंश्लेषरूपत्वाच्छब्दालङ्कारत्वमिति सर्वस्वकाराद्युक्तं युक्तम् । अर्थभेदेन शब्दभेद इति मते अन्यायश्चानेकार्थत्वमित्युपपत्तिकबलिते अभङ्गश्लेषेऽपि सभङ्ग इव शब्दभेदस्यावारणेन शब्दयोरेव श्लेषस्य वक्तुं शक्यत्वात् । अत उभयं शब्दालङ्कार इति वा सभङ्गस्य शब्दालङ्कारत्वमभङ्गस्यार्थालङ्कारत्वमिति वा मतद्वयमप्ययुक्तम् । अतो द्वयोरप्यर्थालङ्कारत्वमेव युक्तमिति । इदमत्र विचार्यते । 'रक्तच्छदत्व' मित्यादावुपमा 'श्रमणा यथैवे'त्यंशेन प्रतीयते । 'रक्तच्छदत्व' मित्यादौ श्लेषः । तत्र द्वयोरप्यन्यत्र सावकाशयोरलङ्कारान्तरसङ्करवत् सङ्कर एव । आहोस्वित् 'नाप्राप्ते यस्मिन्यस्यारम्भस्स तस्य बाधक' इति श्लेषवशादलङ्काराणां बाधो निरवकाशत्वादिति । तत्र मंखुकादयः केचिदाहुः—श्लेषोऽयं सर्वत्रालङ्कारान्तरसङ्कीर्ण एव । त्रिविधेऽपि श्लेषे आद्ययोस्तुल्ययोगितायास्तृतीये दीपकस्य च प्रसरादलङ्कारद्वयं श्लेषं व्याप्यावतिष्ठते, नास्य विविक्तो विषयो लभ्यत इति निरवकाशेनानेन सावकाशानामन्येषामलङ्काराणां बाधात्तेषां मुखे प्रतिभा-

अथ अप्रस्तुतप्रशंसा—

**अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया[1] ।**
**एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ॥**

मात्रम् । अत एवोक्तं रुद्रटेन—'अलङ्कारान्तरगतां प्रतिभां जनयन्पदैः । द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥' इति । तेन श्लेषस्थले तस्य नान्यैः सह सङ्करः । तेषां प्रतिभामात्रेण प्रतिष्ठितत्वाभावात् सावकाशत्वेन दुर्बलत्वाच्च । अत एव 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव ।' इत्यत्र गुणक्रियार्थसाधारण्य एव उपमोल्मीलनमिति तस्याः श्लेषेण बाध एव युक्त इत्युद्भटः । क्वचिच्छ्लेषोत्थापितोऽलङ्कारः तद्बाधितोऽपि केन चिदुज्जीवितं स्वविषयमासाद्य विश्राम्यति । तत्र तेन श्लेष एव बाध्यते । यथा—'विद्वान्मानसहंसे' त्यत्र प्रथमं 'त्वमेव हंस' इति रूपकप्रतीतिस्ततस्तदालम्बना श्लेषस्य । ततो मानसमेव मानसमिति रूपकस्येति, रूपकस्यान्ते चमत्कारितया प्रतिष्ठितत्वात्तेन श्लेषो बाधितः प्रतिभामात्रेण व्यवतिष्ठते । एषैव रीतिः श्लिष्टविशेषणनिबन्धनायां समासोक्ताविति । अन्ये त्वाहुः—न श्लेषस्यालङ्कारान्तरबाधकत्वोक्तिर्युक्ता । विषयस्य सङ्कीर्णस्यापि लाभे लब्धावकाशत्वेन निरवकाशत्वहानेः—न हि विविक्तविषयाभावेन निरवकाशत्वं तान्त्रिका मन्यन्ते । 'पदे जुहोति' त्यादीनामाहवनीयबाधकत्ववदुत्तरार्धे जुहोतीत्यादीनामाहवनीयबाधकताया वाक्यविदनुमतत्वात् । विविक्तविषयत्वाभिधानदुराग्रहेऽपि 'चेतोनलं कामयते मदीय' मित्यादौ 'देव! त्वमेव पातालमाशानां त्वन्निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥' इत्यादावलङ्कारान्तरप्रसक्त्यभावेन विविक्तविषयत्वोपपत्तेः । 'ते गच्छन्ति महापदं भुवि पराभूतिः समुत्पद्यते तेषां तैः समलंकृतं निजकुलं तैरेव लब्धा क्षितिः । तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिता नित्यशो ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥' इत्यत्र श्लेषो विविक्ततयावतिष्ठत इति न वाच्यम् । अत्रापि तोषरोषौपाधिकभेदेन द्रष्टुस्तादृशदृष्टत्वेन दृश्यमानानां वा भेदे सति वाशब्दस्य समुच्चयार्थत्वेन प्राकरणिकविषयायाः तुल्ययोगितायाः वाशब्दस्य विकल्पार्थकत्वे विकल्पस्य सुवचत्वेन विविक्तविषयत्वासम्भवात् । अतः उक्तोदाहरणद्वय एव तस्य विविक्तविषयतेति न निरवकाशत्वमित्यलं बहुना ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां श्लेषप्रकरणम् ॥ २५ ॥

प्रस्तुतगतविशेषणसाम्यमाश्रित्य समासोक्तिर्निरूपिता । तत्प्रसक्त्या विशेषणाश्रयपरिकरादिकं निरूपितम् । इह पुनस्तद्वैपरीत्येनाप्रस्तुतप्रशंसां लक्षयति—**अप्रस्तुतप्रशंसेति** । लक्षणप्रतिपादकं पूर्वार्धं व्याचष्टे—**यत्रेति** । कारिकायामप्रस्तुतप्रशंसाशब्द आवृत्त्या योजनीयः । **सेति** । तच्छब्देनाप्रस्तुतप्रशंसाप्रत्यवमर्शः । तथा-

---

१. चन्द्रालोके तु '**अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा । कार्यकारणसामान्यविशेषादेरसौ मता ॥ कमलैः कमलावासैः किं किं नासादि**

यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसालङ्कारः । अप्रस्तुतवृत्तान्तवर्णनेन प्रस्तुतावगतिश्च प्रस्तुताप्रस्तुतयोस्सम्बन्धे सति भवति । सम्बन्धश्च सारूप्यं सामान्यविशेषभावः कार्यकारणभावो वा संभवति । तत्र सामान्यविशेषभावे सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्यावगतौ द्वैविध्यम् । कार्यकारणभावेऽपि कार्यात्कारणस्य कारणाद्वा कार्यस्यावगतौ द्वैविध्यम् । सारूप्ये त्वेको भेद इत्यस्याः पंच प्रकाराः ।

यदाहुः—

'कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥' इति ।

तत्र सारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणं 'एकः कृती शकुन्ते' ष्विति। अत्राप्रस्तुतस्य चातकस्य प्रशंसा प्रशंसनीयत्वेन प्रस्तुते तत्सरूपे क्षुद्रेभ्यो याचनात् निवृत्ते मानिनि पर्यवस्यति ।

---

चाप्रस्तुतप्रशंसालङ्कारः स्यादिति लक्ष्यनिर्देशः । सा अप्रस्तुतप्रशंसा कीर्तनं यत्र प्रस्तुताश्रया प्रस्तुतपर्यवसायि । प्रस्तुतगमकमिति यावत् । तथा च यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतगमकम् । सा अप्रस्तुतप्रशंसेति कारिकार्थ इति भावः । तत्राप्रस्तुतवृत्तान्तस्यावर्णनीयतया तद्वर्णनं प्रस्तुतगमकतामन्तरेणासम्बद्धार्थमुन्मत्तप्रलपितं स्यात् । अतस्तन्निवृत्तये प्रस्तुतगमकता वाच्या । सा च तयोस्सम्बन्धं विना दुर्घटा । स च सम्बन्धः सामान्यविशेषभावः कार्यकारणभावस्सारूप्यमिति त्रिविधः । सामान्यविशेषभावकार्यकारणभावौ प्रत्येकं द्विविधौ । सामान्याद्विशेषस्य विशेषात्सामान्यस्य कार्यात्कारणस्य कारणात्कार्यस्येति भेदात् । सारूप्ये त्वेको भेद इति विभज्य दर्शयति—**अप्रस्तुतवृत्तान्तेत्यादिना** । अमुमेवार्थं काव्यप्रकाशकारोक्त्या संवादयति—**यथाहुरिति** । तदन्यस्य कारणादेर्वचः कीर्तनमित्यर्थः । ननु, मूले इयतां भेदानामकीर्तनान्न्यूनत्वमित्यत आह—**तत्रेति** । तेषु पञ्चसु भेदेष्वित्यर्थः । तथा ग्रन्थगौरवभयाद्भेदान्तदाणामनुट्टङ्कनमिति न दोष इति भावः । **अत्रेति** । उदाहरण इत्यर्थः । क्षुद्रेभ्यो याचनान्निवृत्तो मानी—उपवासादिना महान्तं क्लेशमनुभवन्नपि इङ्गितानभिज्ञं लुब्धं सर्वथा नोपसर्पामीति दृढसङ्कल्पः पुरुषः प्रस्तुतः । तमप्रस्तुतवृत्तान्तकथनमुखेन व्यञ्जयितुमप्रस्तुतस्य चातकवृत्तान्तस्य कथनमिति सारूप्यनिबन्धनेयमप्रस्तुतप्रशंसेत्यर्थः । अ

---

**सुन्दरम् । अप्यम्बुधेः परं पारं प्रयान्ति व्यवसायिनः ॥'** इति पाठः ।

यथा वा—

'आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुंभतटपाटनलंपटस्य नादं करिष्यति कथं हरिणाधिपस्य ॥'

अत्र शुनकस्य निन्दा निन्दनीयत्वेन प्रस्तुते तत्सरूपे कृत्रिमवेषव्यवहारादिमात्रेण विद्वत्ताभिनयवति वैधेये पर्यवस्यति ।

यथा वा—

'अन्तश्छिद्राणि भूयांसि कण्ठका बहवो बहिः ।
कथं कमलनालस्य मा भूवन् भंगुरा गुणाः ॥'

अत्र कमलनालवृत्तान्तकीर्तनं तत्सरूपे बहिः खलेषु जाग्रत्सु भ्रातृपुत्रादिभिरन्तः कलहं कुर्वाणे पुरुषे पर्यवस्यति । एवं च लक्ष्यलक्षणयोः प्रशंसाशब्दः स्तुतिनिन्दास्वरूपाख्यानसाधारणकीर्तनमात्रपरो द्रष्टव्यः ।

सामान्यनिबन्धना यथा—

विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥'

अत्र प्रागेव सामर्षे शिशुपाले रुक्मिणीहरणादिना वैरं दृढीकृतवता कृष्णेन तस्मिन्नुदासितुमयुक्तमिति वक्तव्येऽर्थे प्रस्तुते तत्प्रत्यायनार्थं सामान्यमभिहितम् ।

यथा वा—

'सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम् ।

---

तत्रैवोदाहरणान्तरमाह—**आबद्धेति** । उदाहरणे लक्षणं योजयति—**अत्रेति** । निन्दा हि शुनकस्येह न विवक्षिता । सा निन्दनीयत्वेन प्रस्तुते मूर्खे पर्यवसतीति भावः । **वैधेय इति** । मूर्ख इत्यर्थः । उदाहरणान्तरमाह—**अन्तश्छिद्राणीति** । (यथा वा-भगवन्तरायसचिवस्य 'न मुदे शिखिनां न चातकानां न च सस्यव्रजवृद्धये कदापि । शरदम्बुदसम्भवस्तवायं विधिना मन्दधिया वृथैव क्लृप्तः ॥' अत्र परानुपकारिणोऽत्यन्ताप्रयोजकस्य पुरुषाधमस्य प्रस्तुतस्य निन्दां व्यञ्जयितुं शरदम्बुदस्याप्रस्तुतस्य कीर्तनमिति साधर्म्यनिबन्धनेयमप्रस्तुतप्रशंसेति) । कारिकागतलक्ष्यलक्षणवाचकशब्दयोः प्रशंसापदमुदाहरणानुरोधात् स्तुतिनिन्दासाधारणकीर्तनपरमित्याह—**एवं चेति** । सामान्यनिबन्धनामुदाहरति—**विधायेति** । उदाहरणे लक्षणं योजयति—**अत्रेति** । **सौहार्देति** ।

१. 'यथा वा' इत्यारभ्य 'साधर्म्यनिबन्धनेयमप्रस्तुतप्रशंसेति' इत्यन्तं ङ. पुस्तके नास्ति ।

परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥'

अत्र यदि त्वं प्रत्यक्ष इव परोक्षेऽपि मम हितमाचरसि तदा त्वमुत्तमस्सुहृदिति विशेषे वक्तव्यत्वेन प्रस्तुते सामान्यमभिहितम् ।

विशेषनिबन्धना यथा—

'अङ्काधिरोपितमृगः चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगपूगो मृगाधिपः ॥'

अत्र कृष्णं प्रति बलभद्रवाक्ये मार्दवदूषणपरे पूर्वप्रस्तावानुसारेण 'क्रूर एव ख्यातिभाग्भवति न तु मृदु'रिति सामान्ये वक्तव्ये तत्प्रत्यायनार्थमप्रस्तुतो विशेषोऽभिहितः । एवं बृहत्कथादिषु सामान्यतः कञ्चिदर्थं प्रस्तुत्य, तद्विवरणार्थमप्रस्तुतकथाविशेषोदाहरणेषु इयमेवाप्रस्तुतप्रशंसा द्रष्टव्या ।

कारणनिबन्धना यथा—

'हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥'

अत्र अप्राकरणिकेन्दुमण्डलगततयोत्प्रेक्ष्यमाणेन दमयन्तीवदननिर्माणार्थं

---

अत्र 'सौहार्दस्वर्णरेखाणा'मिति सौहार्दे स्वर्णत्वनिरूपणस्य पारोक्ष्ये निकषोपलत्वनिरूपणस्य च हेतुहेतुमद्भावादश्लिष्टशब्दनिबन्धनं केवलं परम्परितरूपकं द्रष्टव्यम् । तस्य चाप्रस्तुतप्रशंसायाश्चैकवाचकानुप्रवेशसङ्कर इत्यवधेयम् । **अंकाधिरोपितेति** । चन्द्रमसो विशेषणमिदम् । 'निष्ठुरक्षितमृगपूग' इति केसरिविशेषणं च मार्दवक्रौर्याभिप्रायगर्भमिति परिकरालङ्कारः । तस्य चाप्रस्तुतप्रशंसायाश्च पूर्ववदेकवाचकानुप्रवेशसङ्करः । एषा अप्रस्तुतविशेषनिबन्धना अप्रस्तुतप्रशंसा । प्रबन्धेऽप्यनयैव रीत्या द्रष्टव्येत्याह—**एवमिति** । तत्र हि 'अङ्के स्थितापि युवतिः परिशोधनीया' इत्यादि सामान्यं प्रस्तुत्य तद्विशेषकथासङ्घटनं मदनमञ्जुकालम्बकादिषु व्यक्तम् । 'कारणनिबन्धनामुदाहरति—**हृतसारमिति** । अत्र दमयन्तीवदननिर्माणार्थतया इन्दुमण्डलमध्यगतसारांशाहरणक्रिया इन्दुमण्डले उत्प्रेक्ष्यत इत्यसिद्धविषया फलोत्प्रेक्षा । तत्र कृतमध्याबिलत्वं निमित्तम् । कृतमध्याबिलत्वोत्प्रेक्षायां तद्गतखनीलिमत्वाध्यवसितकलङ्कशालित्वं निमित्तम् । ततश्च खनीलिमत्वाध्यवसितकलङ्कनिमित्तकोत्प्रेक्षितकृतमध्याबिलत्वनिमित्तोत्थापितया फलोत्प्रेक्षया लब्धेन सारांशाहरणेन कारणेन तत्कार्यभूतप्रस्तुतदमयन्तीवदनसौन्दर्यविशेषप्रतीतेः कारणनिबन्धनेयमप्रस्तुतप्रशंसा । पूर्वोक्तोत्प्रेक्षाया अस्याश्चानुग्राह्यानुग्राहकभावसङ्कर इत्यभिप्रेत्याह—**अत्रेति** । अत्रैव स्वे

सारांशहरणेन तत्कारणेन तत्कार्यरूपो वर्णनीयतया प्रस्तुतो दमयन्तीवदनगतो लोकोत्तरसौन्दर्यविशेषः प्रतीयते ।

यथा वा—मदीये वरदराजस्तवे ।

'आश्रित्य नूनममृतद्युतयः पदं ते
देहक्षयोपनतदिव्यपदाभिमुख्याः ।
लावण्यपुण्यनिचयं सुहृदि त्वदास्ये
विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः ॥'

अत्र अप्राकरणिकचन्द्रकर्तृकतया उत्प्रेक्ष्यमाणेन लावण्यपुण्यनिचयविन्यासेन कारणेन तत्कार्यमनन्तकोटिचन्द्रलावण्यशालित्वमनन्यमुखसाधारणं भगवन्मुखे वर्णनीयतया प्रस्तुतं प्रतीयते । तथा हि—

चन्द्रस्तावत् (नवो नवो भवति जायमान इति) मन्त्रलिङ्गाद्वृद्धिक्षयाभ्यामभेदेऽपि भेदाध्यवसायाद्वा प्रतिमासं भिन्नत्वेन वर्णितः । तेनातीताश्चन्द्रा अनन्तकोटय इति लब्धम् । कालस्यानादित्वात् । सर्वेषां च तेषामाकाशसमाश्रयणं श्लेषमहिम्ना भगवच्चरणसमाश्रयणत्वेनाध्यवसितम् । भगवच्चरणं प्रपन्नानां च देहक्षयोपस्थितौ परमपदप्राप्त्याभिमुख्यं, तदानीमेव स्वसुहृद्वर्गे स्वकीयसुकृतस्तोमनिवेशनं, ततस्सूर्यमण्डलप्राप्तिश्चेत्येत-

---

कृतवरदराजस्तवे उदाहरणान्तरमाह—**आश्रित्येति** । अत्र प्रकृतमलङ्कारं वाक्यार्थभूतं विशदयति—**अत्रेति**। एतदेवोपपादयति—**तथा हीत्यादिना**। 'प्रतिमासभिन्ना' इत्यस्योपपत्तिमाह—**चन्द्रस्तावदिति**। मन्त्रलिङ्गं 'नवो नवो भवति जायमान' इति मन्त्रगतम् । **अभेदेऽपीति** । अभेदेऽपि भेद इत्येवं रूपयाऽतिशयोक्त्येत्यर्थः । इदं विशेषणमतीतचन्द्राणामनन्तकोटित्वाभिप्रायगर्भमित्याह—**तेनेति** । ततः किमत आह—**सर्वेषां चेति** । **श्लेषमहिम्नेति** । पदशब्दस्य भगवच्चरणाकाशरूपोभयार्थत्वादित्यर्थः । यद्यपि पदशब्दो नाकाशवाचकः । नाप्यसाधारण्येन भगवच्चरणवाचकः । तथापि 'त' इति सम्बोध्यतया प्रकृतभगवद्वाचकयुष्मत्पदसमभिव्याहृतेन तेन तयोरर्थयोस्समर्पणात् श्लेषमहिम्नेत्युक्तम् । **भगवच्चरणसमाश्रयणत्वेनेति** । श्लिष्टार्थविशेषणेषु श्लेषमितिकाभेदाध्यवसायस्य सिद्धान्तसम्प्रतिपन्नत्वादिति भावः । ततोऽपि किमत आह—**भगवच्चरणमिति** । **श्रुतिसिद्धमिति** । 'पर्यङ्कविद्योपासकस्य देहावसाने देवयानेन पथा पर्यङ्कस्थं ब्रह्म प्राप्तुं प्रस्थितस्य 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छती' त्युपक्रम्य 'स आग-

त्सर्वं श्रुतिसिद्धमिति तदनुरोधेन तेषां देहक्षयकालस्यामावास्यारूपस्योपस्थितौ सूर्यमण्डलप्राप्तेः प्राक्प्रत्यक्षसिद्धं पुण्यत्वेन निरूपितस्य लावण्यस्य प्रहाणं निमित्तीकृत्य, तस्य चन्द्रसादृश्यस्वरूपोपचरिततत्सौहार्दवति भगवन्मुखे न्यसनमुत्प्रेक्षितम् । यद्यपि सुहृद्बहुत्वे तावदल्पपुण्यसंक्रमणं भवति । तथाप्यत्र 'सुहृदी'त्येकवचनेन भगवन्मुखमेव चन्द्राणां सुहृद्भूतं न मुखान्तराणि चन्द्रसादृश्यगन्धस्याप्यास्पदानीति भगवन्मुखस्य इतरमुखेभ्यो व्यतिरेकोऽपि व्यञ्जितः । ततश्च तस्मिन्नेव सर्वेषां चन्द्राणां स्वस्वयावल्लावण्यपुण्यविन्यसनोत्प्रेक्षणेन प्राग्वर्णितः प्रस्तुतोऽर्थः स्पष्टमेव प्रतीयते । यद्यपि श्रुतौ सूर्यमण्डलप्राप्त्यनन्तरभाविविरजानद्यतिक्रमणानन्तरमेव सुहृत्सु सुकृतसंक्रमणं श्रूयते । तथापि शारीरकशास्त्रे तस्यार्थव-

---

च्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते । प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम् ।' इति श्रुतिसिद्धमित्यर्थः । **तदनुरोधेनेति** । श्रुत्यनुरोधेनेत्यर्थः । तथाविधानां चन्द्रमसाममावास्यारूपदेहक्षयकाले पुण्यत्वेन निरूपितलावण्यप्रहाणेन निमित्तेन चन्द्रसदृशे भगवन्मुखे स्थापनमुत्प्रेक्षितमित्यर्थः । ननु, सुहृद्बहुत्वे तावत्सुहृत्सु विभज्य पुण्यसंक्रमणं भवेदिति भगवन्मुखे विवक्षितस्यानन्तकोटिचन्द्रलावण्यस्य न लाभः स्यादित्याशङ्कते—**यद्यपीति** । परिहरति—**तथापीति** । 'सुहृदी'त्येकवचनेन सुहृदन्तराभावप्रतीतिस्तथाविधपुण्यनिचयविन्यसनभाजनं भगवन्मुखमेवेति विवक्षितार्थस्य लाभात् भगवन्मुखस्येतरमुखेभ्य उत्कर्षोऽपि व्यक्तो भवतीति भावः । उक्तस्यार्थस्य सर्वस्य प्रस्तुतपर्यवसानमाह—**ततश्चेति** । ननु, उक्तश्रुतौ सूर्यमण्डलप्राप्त्यनन्तरभाविविरजानद्यतिक्रमणोत्तरं सुकृतदुष्कृतयोर्विधूननपूर्वकं तस्य सुहृद्द्विषत्संक्रमः श्रूयते । न तु उपासकस्य देहावसानकाल एव सूर्यमण्डलप्राप्तेः प्राक् । अतः कथमत्र पुण्यनिचयसंक्रमणादित्यमण्डलप्राप्त्योः पौर्वापर्यं श्रुतिविरुद्धमत्र श्लोके निबद्धमित्याशङ्कते—**यद्यपीति** । समाधत्ते—**तथापीति** । शारीरकशास्त्रे शारीरकं जीवमधिकृत्य प्रवृत्ते शास्त्रे । वेदान्तशास्त्र इति यावत् । **तस्येति** । सुकृतदुष्कृतसंक्रमणस्येत्यर्थः । अर्थवशात्प्रयोजनवशात् । अयं भावः । तृतीयेऽध्याये गुणोपसंहारपादे स्थितम् '॥ * ॥ **साम्पराये तर्तव्याभावात्तथा ह्यन्ये** ॥ * ॥' कौषीतकिनामुपनिषदि पर्यङ्कविद्याविदं पुरुषमधिकृत्य

---

१. तथा हि—सूत्रभाष्ये तार्तीयीकाधिकरणे श्रीमद्विराचार्येरेवं विचारितम् । '**साम्पराये तर्तव्याभावात्तथा ह्यन्ये** । देवयानेन पथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतवियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति । 'स एतं देवयानमासाद्याग्निलोकमागच्छती'त्युपक्रम्य 'स आगच्छति विरजानदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनु-

शत्प्रागभावः स्थापित इति तदनुसारेण ' विन्यस्य मिहिरं प्रतियान्तीत्युक्तम् ।

कार्यनिबन्धना यथा—

'नाथ? त्वदंघ्रिनखधावनतोयलग्ना

स्तत्कान्तिलेशकणिकाः जलधिं प्रविष्टाः ।

---

श्रूयते ।'स एनं देवयानं पन्थान'मित्यादि 'तत्सुकृतदुष्कृते विधूनुते तस्यप्रिया ज्ञातयस्सुकृतमुपयन्त्यप्रिया दुष्कृतमित्यत्र संशयः । किं विरजानद्यतिक्रमानन्तरं श्रूयमाणं सुकृतदुष्कृतवियोगपूर्वकं प्रियाप्रियेषु तत्संक्रमणं यथाश्रुति प्रतिपत्तव्यमुत देहापसर्पण इति । तत्र पूर्वः पक्षः । श्रुतिप्रमाणकोऽयमर्थो यथाश्रुत्येवावगन्तव्यो न तदन्यथाभावेनेति प्राप्ते ब्रमः । साम्पराये गमन एव । देहादपसर्पण एवेति यावत् । तस्मिन् सुकृतदुष्कृतहानं भवति । कुतः, विद्यासामर्थ्यात् ब्रह्म प्रेप्सतस्तत्प्राप्त्यनुकूलतया सुकृतदुष्कृतहानं श्रुतिर्ब्रवीति । न हि विदुषः परेतस्य प्राग्ब्रह्मप्राप्तेः सुकृतदुष्कृताभ्यामस्ति किञ्चित्प्रयोजनम् । यदर्थे देहावसानानन्तरमपि कातिचित्क्षणाननुवर्तमाने ते कल्प्येयाताम् । अतः यदैव विद्या फलोन्मुखी भवति तदैव सुकृतदुष्कृतविधूननमपीति देहावसानानन्तरभावितैव सुकृतदुष्कृतक्षयस्य पश्चात्पठितस्याप्यवगन्तव्या । अग्निहोत्रानन्तरश्रुतयवागूपाकवत् । अत एव श्रुत्यन्तरे तथैव श्रूयते । अतो देहावसाने उपासकस्य सुकृतदुष्कृतवियोगे सति तदनन्तरभावि सुकृतदुष्कृतसंक्रमणमिति तत्सूर्यमण्डलप्राप्तेः प्रागेव भवतीति निर्णीतम् । अतस्तदधिकरणसिद्धान्तानुरोधेन विन्यसनानन्तरभाविनी सूर्यमण्डलप्राप्तिरत्रोपवर्णितेति न श्रुतिविरुद्धत्वदोषप्रसक्तिरिति भावः ।'कार्यनिबन्धनामुदाहरति—**नाथेति** । अत्र भगवच्चरणाम्बुजनिर्णेजनवारित्वाध्यवसितदिव्यधुनीपूरसङ्क-

---

त' इति । तत्किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यमाहोस्विदादावेव देहादपसर्पण इति विचारणायां श्रुतिप्रामाण्याद्यथाश्रुति प्रतिपत्तिप्रसक्तौ पठति—**साम्पराय इति**। साम्पराये गमनएव देहादपसर्पणे । इदं विद्यासामर्थ्यात् सुकृतदुष्कृतहानं भवतीति प्रतिजानीते । हेतुं व्याचष्टे—**तर्तव्याभावादिति** । न हि विदुषस्सम्परेतस्य विद्यया ब्रह्म प्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किञ्चित्प्राप्तव्यमस्ति । यदर्थं कतिचित्क्षणानक्षीणे ते कल्प्येयातां । विद्याविरुद्धफलत्वात्तु विद्यासामर्थ्येन तयोः क्षयः । स च यदैव विद्याफलाभिमुखी तदैव भवितुमर्हति । तस्मात् प्रागेव सन् सुकृतदुष्कृतक्षयः पश्चात्पठ्यते । तथाह्यन्येऽपि शाखिनस्ताण्डिनश्शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानिमामनन्ति । 'अश्व इव रोमाणि विधूय पापमिति । तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्या'मिति । इत्यादि । १ 'अग्निहोत्रं जुहोति यवागूं पचती'ति वाक्ययोः अग्निहोत्रहोमस्य प्रथमपाठेऽपि तस्य यवागूकरणकस्य यवागूपाकानन्तरकालिकत्वात् पाठक्रमादपि अर्थक्रमस्य प्रबलत्वमाश्रित्य यवागूपाकस्यैव प्राथम्यमङ्गीकृतं मीमांसकैरिति वेदितव्यम् ।

ता एव तस्य मथनेन घनीभवन्त्यो
नूनं समुद्रनवनीतपदं प्रपन्नाः ॥'

अत्र भगवत्पादाम्बुजक्षालनतोयरूपायां दिव्यसरिति अलक्तकरसादिवल्लग्नानां तया सह समुद्रं प्रविष्टानां तन्नखकान्तिलेशकणिकानां परिणामतया संभाव्यमानेन समुद्रनवनीतपदवाच्येन चन्द्रेण कार्येण तन्नखकान्त्युत्कर्षः प्रतीयते ।

यथा वा—

अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं
संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतम् ।
अङ्गानामकठोरता यदि दृषत्प्रायैव सा मालती
कान्तिश्चेत्कमला किमत्र बहुना काषायमालम्बताम् ॥'

अत्र नायिकागतिसौकुमार्यादिषु वर्णनीयत्वेन प्रस्तुतेषु हंसादिगतगर्वशान्त्यादिरूपाणि औचित्येन सम्भाव्यमानानि कार्याण्यभिहितानि । एतानि च पूर्वोदाहरण इव न वस्तुकार्याणि । किं तु तन्निरीक्षणकार्याणि ।

'लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं चमर्यः ॥'

इत्युदाहरणान्तरे तथैव स्पष्टम् । 'अङ्गानामकठोरते'ति तृतीयपादे तु वर्णनीयाङ्गसौकुमार्यातिशयनिरीक्षणकार्यत्वमपि नार्थाक्षेप्यमालतीकठोरत्वे विवक्षितम् । प्रतियोगिविशेषापेक्षकठोरत्वस्य तदकार्यत्वात् । किं तु तद्बुद्धेरेव । इदमपि 'त्वदङ्गमार्दवे दृष्टे' इत्युदाहरणान्तरे तथैव स्पष्टम् ।

---

प्रजलधिप्रविष्टपादनखकान्तिकणिकानां मथनघनीभूतानां समुद्रनवनीतपदवाच्यत्ववर्णनेन चन्द्रे नखकान्तिकणिकापरिणामत्वमुत्प्रेक्ष्यते । तथा चोत्प्रेक्षया प्रस्तुतभगवच्चरणनखकान्तिभूमप्रतीतेः कार्यनिबन्धनाऽप्रस्तुतप्रशंसेति भावः । क्वचित्कार्यकारणभावनिबन्धना अर्थयोरिव तद्बुद्ध्योरपि कार्यकारणभावे दृश्यते इति सोदाहरणमाह—**अस्याश्चेदिति** । 'अस्याश्चे'दित्यत्र प्रथमवाक्ये 'निरीक्ष्यत' इति क्रियापदमध्याहार्यम् । अन्यथा हंसादिगर्वशान्त्यादेरनुपपत्तेः । एवमुत्तरत्रापि । तृतीये तु पादे 'अकठोरता निरीक्ष्यत' इत्यध्याहारवत् 'दृषत्प्रायैव सा मालती'त्यत्रापि 'भाती'ति क्रियापदमध्याहार्यमित्यभिप्रेत्य प्रकृते योजयति—**अत्रेति** । अर्थकार्यकारणभाव एवेयमप्रस्तुतप्रशंसेति न नियम इति नानुपपत्तिरित्याह—

अर्थस्य कार्यत्व इव बुद्धेः कार्यत्वेऽपि कार्यनिबन्धनत्वं न हीयत इत्येतादृशान्यपि कार्यनिबन्धनाप्रस्तुतप्रशंसायामुदाहृतानि प्राचीनैः । वस्तुतस्तु, तदतिरेकेऽपि न दोषः । न ह्यप्रस्तुतप्रशंसायां प्रस्तुताप्रस्तुतयोः पञ्चविध एव सम्बन्ध इति नियन्तुं शक्यते । सम्बन्धान्तरेष्वपि तद्दर्शनात् । यथा—

'तापत्रयौषधिवरस्य तव स्मितस्य निश्वासमन्दमरुता निबुसीकृतस्य ।
एते कडङ्करचया इव विप्रकीर्णा जैवातृकस्य किरणा जगति भ्रमन्ति ॥'

अत्र ह्यप्रस्तुतानां चन्द्रकिरणानां भगवन्मन्दस्मितरूपदिव्यौषधीधान्यविशेषकडङ्करचयत्वोत्प्रेक्षणेन भगवन्मन्दस्मितस्य तत्सारतारूपः कोऽप्युत्कर्षः प्रतीयते । न च धान्यकडङ्करचययोः कार्यकारणभावादिसम्बन्धोऽस्ति । अतस्सहोत्पत्त्यादिकमपि सम्बन्धान्तरमाश्रयणीयमेव । एवमुपमानोपमेयावाश्रित्य तत्र कविकल्पितकार्यकारणभावनिबन्धने अप्रस्तुतप्रशंसे दर्शिते ।

ततोऽन्यत्रापि दृश्यते । यथा—

कालिन्दि? ब्रूहि कुंभोद्भव? जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः ।
मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीनां
नेत्राम्भोभिः किमासां समजनि कुपितः कुन्तलक्षोणिपालः ॥'

अत्र 'किमासां समजनी'ति मालवीनां तथारोदनस्य निमित्ते पृष्टे त-

---

**अर्थस्येति** । एवं प्राचीनदर्शितरीत्या तस्याः भेदानुदाहृत्य विधान्तरेणापि स्वयं तद्भेदः सम्भवतीत्याह—**वस्तुतस्त्वति** । एतदेवोदाहरणमुखेन दर्शयति—**तापत्रयेति** । अध्यात्मिकादिभेदभिन्नतापापाकरणौषधिश्रेष्ठस्य निश्वासरूपेण मन्दमरुता प्राकृततण्डुलादिरहितत्वङ्मात्ररूपबुसस्य विप्रकीर्णकडङ्करनिकरा इव एते चन्द्रकिरणा जगति भ्रमन्ति । कडङ्करा इवान्तर्निस्सारतया तत्र तत्र लघुतया भ्रमन्तीति वाक्यार्थः । अत्र 'ओषधिवरस्ये'ति रूपकम् । 'निबुसीकृतस्ये'ति तदुत्थापितातिशयोक्तिः । ताभ्यामुत्थापिता स्वरूपोत्प्रेक्षा । तैरनुप्राणिता अप्रस्तुतप्रशंसेति तात्पर्यार्थः । अत्र धान्यकडङ्करचययोः सहोत्पत्त्यादिसम्बन्धाश्रयणेनाप्यप्रस्तुतप्रशंसा दृष्टेत्याह—**न चेति** । एवमुपमानोपमेयत्वेन सम्प्रतिपन्नयोर्मन्दस्मितभगवन्नखकान्त्यादिचन्द्रमसोरौत्प्रेक्षिककार्यकारणभावाश्रयणेनाप्रस्तुतप्रशंसाभेदौ प्राचीनैर्दर्शितौ । ततोऽन्यत्रापि सा सम्भवतीत्याह—**कालिन्दीति** । एतदेवोपपादयति—**अत्र कि-**

प्रियमरणरूपनिमित्तमनाख्याय 'कुपितः कुन्तलक्षोणिपाल' इति तत्कारणमभिहितमिति कारणनिबन्धना । मालवान् प्रति प्रस्थितेन कुन्तलेश्वरेण 'किं ते निर्जिता' इति पृष्टे तद्वधानन्तरभाविजलधिनर्मदाप्रश्नोत्तररूपं कार्यमभिहितमिति अत्रैव कार्यनिबन्धनापि । पूर्वस्यां प्रश्नश्शाब्दः अस्यामार्थ इति भेदः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अप्रस्तुतप्रशंसाप्रकरणम् ॥ २६ ॥

अथ प्रस्तुतांकुरः—

**प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः[1] ।**
**किं भृङ्ग? सत्यां मालत्यां केतक्या कण्टकेद्धया ॥**

यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत् प्रस्तुतं द्योत्यते तत्र प्रस्तुतांकु-

---

**मासामिति** । तथा च कार्यकारणभावशब्दोऽत्र प्रयोज्यप्रयोजकभावपर इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अप्रस्तुतप्रशंसाप्रकरणम् ॥ २६ ॥

एवमप्रस्तुतेन प्रस्तुतव्यक्तावप्रस्तुतप्रशंसालङ्कारं निरूप्य प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरालङ्कारमाह—**प्रस्तुतेनेति** । केन चिद्वर्णितेन प्रस्तुतेन प्रस्तुतान्तरव्यक्तौ । स च गम्यगमकभावसम्बन्धमन्तरा न सम्भवतीति उपमानोपमेयभावसम्बन्धो बोध्यः । तथा चायं प्रस्तुतांकुरो द्विविधस्सम्पन्नः । गमकस्य प्रस्तुतस्य उपमानत्वोपमेयत्वाभ्यामित्यभिप्रेत्याह—**यत्रेति** । सादृश्यमूलकत्वं प्रस्तुतद्योतनस्य विवक्षणीयम् । अन्यथा 'येन लम्बालकः साधुः करघातारुणस्तनः । अकारि भग्नवलयो गजासुरवधूजनः ॥' इत्यत्र गजासुरवधूजनगतलम्बालकत्वादिना कार्येण तत्कारणस्य गजासुरवधस्य व्यक्तेरतिव्याप्तेः । द्वयोरपि कार्यकारणयोर्विच्छित्तिशालितया वर्णनीयत्वात् उक्तविवक्षायां गजासुरवधव्यक्तेः सादृश्यमूलकत्वाभा-

---

१. अयमलङ्कारः चन्द्रालोके न दृश्यते । प्राचीनानां मते अस्य अप्रस्तुतप्रशंसायामन्तर्भावात् । तथा हि—उद्योते अप्रस्तुतप्रशंसाप्रकरणे 'अत्रेदं बोध्यम् । अप्रस्तुतपदेन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तोऽर्थो ग्राह्यः । एतेन 'किं भृङ्ग ! सत्यां मालत्यां केतक्या कण्टकेद्धया ।' इत्यत्र 'प्रियतमेन साकमुद्याने विहरन्ती काचित् भृङ्गं प्रत्येवमाहेति प्रस्तुतेन प्रस्तुतान्तरद्योतने प्रस्तुतांकुरनामा भिन्नोऽलङ्कार' इति अपास्तम् । मदुक्तरीत्याऽस्या एव सम्भवात् । मुख्यतात्पर्यविषयः प्रस्तुतश्च नायिकानायकवृत्तान्ततदुत्कर्षकतया गुणीभूतव्यङ्ग्यस्तदाऽत्र सादृश्यमूला समासोक्तिरेवेति केचित् । अन्ये तु ( रसगङ्गाधरकारादयस्तु ) अप्रस्तुतेन प्रशंसेत्यपि अप्रस्तुतप्रशंसाशब्दार्थः । एवं च वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते उत्कृष्यते इत्यर्थादत्रापीयमेवेत्याहुरिति दिक् ।' इत्युक्तम् ।

रालङ्कारः । उत्तरार्धमुदाहरणम् । इह प्रियतमेन साकमुद्याने विहरन्ती काचिद्भृङ्गं प्रत्येवमाहेति वाच्यार्थस्य प्रस्तुतत्वम् । न चानामन्त्रणीयामन्त्रणेन वाच्यासंभवादप्रस्तुतमेव वाच्यमिह स्वरूपप्रस्तुतावगतये निर्दिष्टमिति वाच्यम् । मौग्ध्यादिना भृङ्गादावप्यामन्त्रणस्य लोके दर्शनात् । यथा—

'कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनस्सर्वात्मना सेवते
न च्छायापि परोपकारकारिणी मार्गस्थितस्यापि मे ॥'

इत्यत्र चेतनाचेतनप्रश्नोत्तरवत्तिर्यगामन्त्रणस्यात्यन्तमसम्भावितत्वाभावात् । एवं प्रस्तुतेन वाच्यार्थेन भृङ्गोपालम्भरूपेण वक्त्र्याः कुलवध्वाः सौन्दर्याभिमानशालिन्याः क्रूरजनपरिवृत्तिदुष्प्रधर्षायां परवनितायां विटस-

---

वान्नातिव्याप्तिरिति भावः । उदाहरणं व्याचष्टे—**इहेति** । **भृंगमिति** । भ्रमरमुद्दिश्य मयोपालम्भे कृते तमुपालम्भमर्थं परेङ्गितज्ञः स्वयमेव वेत्स्यतीत्यभिप्रेत्य दाक्षिण्येन प्रियतमं साक्षादुपालब्धुमपारयन्ती काचिदित्थं भृङ्गमुपालभत इति वाच्यस्य भृङ्गोपालम्भस्य प्रस्तुतत्वमिति भावः । ननु, तिर्यग्रूपतया असम्बोधनीयस्य भृङ्गस्यामन्त्रणेन वाच्यासम्भवाद्वाच्यमिहाप्रस्तुतमिति लक्षणमसम्भवीति सारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणतया न ततो विलक्षणामलंकृतिमधिगन्तुमिदं प्रभवतीत्याशङ्क्य परिहरति—**न चेति** । **मौग्ध्यादिनेति** । 'धाराकदम्बधरणीरुह! धारयैनान् प्राणान्मम प्रणयिनीगतिशंसितेन । मित्रेण ते सपदि मधुकुलेन वैरं तत्कुन्तलस्य यदि तन्न विचारणीयम् ॥' 'वयं तत्वान्वेषान्मधुकर हतास्त्वं खलु कृती' इत्यादौ मोहादिना अचेतनतिर्यगाद्यामन्त्रणस्य बहुशो दृष्टेः अचेतनस्थावरादिभिः प्रश्नोत्तरप्रवृत्तेश्च तिर्यगामन्त्रणं नात्यन्तमसम्भावितमिति इह भृङ्गोपालम्भः प्रस्तुत इति भावः । वाच्यभृङ्गोपालम्भेन व्यङ्ग्यं प्रियतमोपालम्भं विवेचयति—**एवं प्रस्तुतेनेति** । **कुलवध्वा इति** । वेश्याया वक्त्रीत्वे साक्षादेव सा नायकमुपालभेतेति न भृङ्गापदेशोपालम्भो घटत इति कुलवधूत्वोक्तिः । कुलवधूत्वेऽपि वक्त्र्यां नायिकाभिलषितरामणीयकाभावेन ईदृशोपालम्भो युज्यत इति कुलवधूविशेषणम् । **सौन्दर्येति** । 'कण्टकेद्रुमे'ति विशेषणगर्भितमभिप्रायं विशदयति—**क्रूरजनेति** । बहलकण्टकाकृतत्वेनत्या क्रूरजनपरिवेष्टनदुराधर्षत्वं व्यज्यते । तेन क्रूरजनपरिवृततया परवनितायां प्रवृत्तिरात्महानिपर्यवसायिनीति तच्चिन्तनं तवानुचितमिति भावः । **परवनितायामिति** । निरन्तरधर्मप्रवणैकचेतसस्तव तत्सङ्गतिरनुचितेत्यभिप्रायं ध्वनयति—**विटसर्वस्वेति** । न त्वदीयसौभाग्यवैद-

र्वस्वापहरणसङ्कल्पदुरासदायां वेश्यायां वा कण्टकसंकुलकेतकीकल्पायां प्रवर्तमानं प्रियतमं प्रत्युपालंभो द्योत्यते ।

यथा वा—

'अन्यासु तावदुपमर्दसहासु भृङ्ग ! लोलं विनोदय मनस्सुमनोलतासु ।
बालामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमाल्लिकायाः ॥'

अत्राप्युद्यानमध्ये चरन्तं भृङ्गं प्रत्ययमुपालम्भ इति वाच्यार्थस्यापि प्रस्तुतत्वम् । इदं च प्रौढाङ्गनासु विद्यमानासु बालिकां रतये क्लेशयति कामिनि शृण्वति कस्याश्चिद्विदग्धाया वचनमिति तं प्रत्युपालम्भो द्योत्यते ।

यथा वा—

'कोशद्वन्द्वमियं दधाति नलिनी कादम्बचंचुक्षतं
　धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् ।
इत्याकर्ण्य मिथस्सखीजनवचस्सा दीर्घिकायास्तटे
　चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥'

---

ग्ध्यादिगुणदर्शनेन न त्वय्यभिलाषुका । किं तु तैस्तैः कृत्रिमैरहृदयैरुपचारैः सर्वस्वहरणैदम्पर्यसङ्कल्पदुरध्यवसायेन दूरपरिहरणीयेति । अत एवंभूतायां परवनितायां वेश्यायां वा प्रवृत्तेस्तुल्यत्वाद्विकल्पोक्तिः । 'कण्टकसंकुलकेतकीकल्पाया'मित्युभयसाधारणं विशेषणं परवनितायां रक्षकजनाकीर्णतया आत्महानिपर्यन्तशङ्काव्यञ्जनानुकूलं वेश्यायां मकरन्दपानलोलुपादिगन्तविसृमरातिशयितामोदाकृष्टमधुकरकुलानुषङ्गपारपन्थिकण्टकवेधनिदानमकरन्दानवासितत्त्वत्रापि विविधकृत्रिमोपचारविरचनचातुरीवशीकृतविटजनसर्वस्वापहरणमात्रस्वसमीहितसिद्धिसङ्कल्पसन्दानितहृदये वेश्याजने रतिः न शृङ्गारपर्यवसायिनीति व्यञ्जनानुकूलार्थाभिप्रायगर्भम् । अत्रैवोदाहरणान्तरमाह—**अन्यास्विति** । **उपमर्दसहास्विति** । वात्स्यायनोदितविविधालिङ्गनचुम्बनविकल्पलतावेष्टितादिबन्धगाढीभवद्रतावेशवशंवदतया अङ्गीकृतोपमर्दास्विति चरणाघातझङ्कारादिकृतदलाविसंस्थुलतारूपोपमर्दसहास्विति अभिप्रायगर्भे कान्यां मधुकरे च साधारणम् । प्रकृतोदाहरणे भृङ्गोपालम्भस्य प्रस्तुतत्वमुपपादयति—**अत्रापीति** । व्यङ्ग्योपालम्भप्रकारमाह—**इदं चेति** । अङ्गनासु प्रौढत्वोक्तिः श्लोकगतोक्ताभिप्रायगर्भोपमर्दसहत्वविशेषणाविष्करणाय स्वच्छन्दसम्भोगसम्भृतामन्दप्रमोदमेदुरमनस्कतया समीहितसिद्ध्यै च । **विदग्धाया इति** । वाच्यवृत्त्या प्रियतमो न कुलवधूपालम्भभाजनमिति द्योतनायेति भावः । **कोशद्वन्द्वमिति** । अत्रापि वाच्यार्थस्य लक्ष-

अत्र 'इय'मिति नलिनीव्यक्तिविशेषनिर्देशेन 'दीर्घिकायास्तट' इत्यनेन च वाच्यार्थस्य प्रस्तुतत्वं स्पष्टम् । प्रस्तुतान्तरद्योतनं च उत्तरार्धे स्वयमेव क- विनाविष्कृतम् । अत्राद्योदाहरणयोरन्यापदेशध्वनिमाह लोचनकारः । अप्र- स्तुतप्रशंसायां वाच्यार्थोऽप्रस्तुतत्वादवर्णनीय इति तत्राभिधायामपर्यवसि- तायां तेन प्रस्तुतार्थव्यक्तिरलङ्कारः । इह तु, वाच्यस्य प्रस्तुतत्वेन तत्राभि- धायां पर्यवसितायामर्थसौन्दर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति । वस्तुतस्त्व-

---

णानुगतये प्राकरणिकतामुपपादयति—**अत्रेति** । **इयमिति** । सन्निकृष्टवाचिना इदंशब्देन 'दीर्घिकायास्तट' इत्यनेन च उद्याने नायिकया सह विचरन्त्याः सख्या उक्तेर्नलिन्यादीनां प्रस्तु- तत्वमित्यर्थः । **कादम्बचंचुक्षतमिति** । नायककरजसम्मर्दस्फोरणाय । एवमग्रेऽपीति भावः । **प्रस्तुतान्तरेति** । नायिकागतनायककृतकरजघर्षणचुम्बनादिवृत्तान्तस्येत्यर्थः । पूर्वोदाहरणद्वयादत्र विशेषमाह—**विनेति** । पूर्वोदाहरणयोः प्रियतमोपालम्भस्य व्यङ्ग्यत्वे- व नाभिधासंस्पर्शः । इह तु, पूर्वार्धेन व्यञ्जितस्य प्रियतमावृत्तान्तस्य 'इत्याकर्ण्ये'त्याद्युत्त- रार्धेन नलिनीसहकारलतावृत्तान्तसमाकर्णनजनितमन्दाक्षविलक्षतया स्तनतटतिरोधानादिवर्ण- नेन वाच्यकक्ष्याधिरोहणं कृतमिति भावः । नन्वत्र प्रस्तुतांकुरालङ्कारकथनमयुक्तम् । लोचन- कारादिभिरन्यापदेशध्वनेरुक्तत्वादित्याशङ्क्य, प्रस्तुतांकुरमत्रापि व्यवस्थापयिष्यन् तन्मतं सो- पपत्तिकं दर्शयति—**अत्रेति** । अत्र प्रस्तुतभृङ्गोपालम्भेन प्रियतमोपालम्भद्योतने अ- न्यापदेशध्वन्युक्तावप्रस्तुतप्रशंसापि दत्तजलाञ्जलिः स्यात् । तत्रापि प्रस्तुतवृत्तान्तस्य वा- च्येन वृत्तान्तेन गम्यमानत्वादित्याशङ्क्य परिहरति—**अप्रस्तुतप्रशंसायामिति** । तत्र वाच्यार्थस्यावर्णनीयतया कविसंरम्भागोचरत्वात् कविसंरम्भसीमावधिः प्रस्तुतवृत्तान्त एवेति तस्य व्यङ्ग्यस्य प्रतीतावेव तात्पर्यपर्यवसाने अभिधापर्यवसानमिति न ध्वनिसम्भ- व इति तत्राप्रस्तुतप्रशंसालङ्कारसम्भवेऽपि नेह तत्सम्भवः । वाच्यार्थस्य प्रस्तुततया क- विसंरम्भस्य तत्र विश्रान्त्या अभिधायास्तत्रैव पर्यवसितत्वेन व्यङ्ग्यार्थस्य विषयसौन्दर्यब- लेन लब्धप्रसरस्य वाच्यकक्ष्यामतिवर्तमानत्वात् । अतोऽत्रान्यापदेशध्वनिरेव युक्त इत्य- भिप्रायः । तदिदं मतं दूषयति—**वस्तुतस्त्विति** । समासोक्तौ तावद्वाच्यस्य वृत्ता- न्तस्य प्रस्तुततया कविसंरम्भगोचरत्वेनाभिधायां पर्यवसितायामपि विशेषणसाम्यबलेना- प्रस्तुतवृत्तान्तावगतावपि प्रस्तुतधर्माध्यारोपेण वाच्यार्थसौन्दर्यावहतया न ध्वनित्वम् । यथा वा प्रस्तुतप्रशंसायामप्रस्तुतसामान्यविशेषभावादिसम्बन्धेन प्रतीयमानस्य प्रस्तुतस्य वाच्योप- स्कारकत्वेन न ध्वन्यन्तर्भावः । तथेहापि भृङ्गोपालम्भे वाच्ये अभिधापर्यवसानेऽपि व्यङ्ग्यप्रि- यतमोपालम्भः सारूप्येण प्रतीयमानोऽपि कविसंरम्भगोचर एवेति उभयोस्तुल्यत्वात् कविसं- रम्भगोचरत्वेन प्राधान्यात्समप्राधान्यरूपगुणीभूतव्यङ्ग्यतैव युक्ता । किञ्च । वाच्यस्याप्राधान्ये व्यङ्ग्यस्य प्राधान्यविवक्षायामेव ध्वनिरिति सिद्धान्तः । न चेह वाच्यस्याप्राधान्यमस्ति ।

यमप्यलङ्कार एव न ध्वनिरिति व्यवस्थापितं चित्रमीमांसायाम् । तृतीयोदाहरणस्य त्वलङ्कारत्वे कस्यापि न विवादः । उक्तं हि ध्वनिकृता—

शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राऽऽविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥' इति ।

एतानि सारूप्यनिबन्धनान्युदाहरणानि । सम्बन्धान्तरनिबन्धनान्यपि कथ-

---

तथात्वे तस्याविवक्षितत्वापत्त्या अस्य विवक्षितान्यपरवाच्यध्वन्यन्तर्भावोक्त्ययोगात् । अत उक्तोदाहरणे अन्यापदेशध्वनिरयुक्त एवेति प्रस्तुतांकुरालङ्कार एव युक्त इति भावः । **तृतीयोदाहरणस्येति** । अत्रार्थे ध्वनिकारोक्तिं संवादयति—**उक्तं हीति** । शब्दश्चार्थश्च शब्दार्थौ । तौ च तं च शब्दार्थाः इत्येकशेषः । तेषां शक्त्या सामर्थ्येनाक्षिप्तः प्रतीतः व्यङ्ग्योऽर्थः कविना स्वोक्त्याऽऽविष्क्रियते साऽन्यैव ध्वनितो भिन्नैव श्लेषादिरलंकृतिर्न ध्वनिरिति कारिकार्थः । अत्र तदुक्तोदाहरणैरेव तदुक्तं स्फुटीकुर्मः । तत्र शब्दशक्त्याक्षिप्तं यथा—'वत्से! मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि । प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां पयोधिः ॥ 'विषमत्तीति विषादः । उर्ध्वप्रवृत्तमग्निं । कम्पः अपां पतिः । को ब्रह्मा वा । तव गुरुः । बलभिदा इन्द्रेण । जृम्भितेन ऐश्वर्यमत्तेन । बलनाशकेन जृम्भितेन गात्रमर्दनात्मकेनेति पदानामर्थोऽवगन्तव्यः । अत्र श्लेषोत्थापितदेवतान्तरप्रत्याख्यानरूपः प्रतीयमानोऽर्थः 'प्रत्याख्यानं सुराणा'मिति स्ववचनेनैवाभिधीयत इति निवेदितम् । अतो नायं ध्वनिः किं तु श्लेषालङ्कार एवेति । अर्थशक्त्याक्षिप्तं यथा—'अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो निश्शेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाऽत्र । अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा पान्थायेत्थं तरुण्या गदितमवसरव्याहृतिव्याजपूर्वम् ॥ अत्र 'वृद्धे'ति 'परिणतवयसामग्रणी'रिति 'निश्शेषागारे'ति च विशेषणानि आन्ध्यबाधिर्यवयःपरिणामायासातिशयादिकृतनिद्रापारवश्यसमासादितबाह्यकरणवृत्त्यस्तमया जननीतातदास्यः । तेन स्वच्छन्दमावयोर्निधुवनविलसितानि जयन्त्वित्यभिप्रायगर्भाणि । रन्तुमायाहीति चरणत्रयव्यङ्ग्योऽर्थोऽ'वसरव्याहृतिव्याजपूर्व' मित्युक्त्या कविनाऽऽविष्कृत इति नायं ध्वनेर्विषयः । उभयशक्त्या यथा—'दृष्ट्या केशव! गोप! रागहृतये'ति प्रागुदाहृतम् । इदं च प्रागेव व्याख्यातम् । एवं च 'कोशद्वन्द्व'मित्युदाहरणे प्रस्तुतनालिनीसहकारलतावृत्तान्तस्फोरितप्रियतमावृत्तान्तस्तनतटतिरोधानादिना स्पष्टीकृत इति प्रस्तुतांकुरस्यैवायं विषय इति भावः । प्रस्तुतांकुरोऽयमलङ्कारः प्राचीनोक्तरीत्या न सारूप्यनिबन्धन एव । अप्रस्तुतप्रशंसावत् सम्बन्धान्तरनिबन्धनस्यापि सम्भवात् । तथा च लक्षणे सादृश्यमूलकत्वं विशेषणमनुपादेयम् । न च पूर्वोक्तप्राचीनदर्शितपर्यायोक्ते अतिप्रसङ्गः । तस्यापि लक्ष्यत्वादित्यभिप्रेत्याह—**सम्बन्धान्तरेति** । तत्रावयवावयविभावसम्बन्धनिबन्धन-

श्चिद्वाच्यव्यङ्ग्ययोः प्रस्तुतत्वालम्बनेनोदाहरणीयानि । दिङ्मात्रमुदाह्रियते ।

रात्रिश्शिवा का चन सन्निधत्ते विलोचने जाग्रतमप्रमत्ते ।
समानधर्मा युवयोस्सकाशे सखा भविष्यत्यचिरेण कश्चित् ॥'

अत्र शिवसारूप्यामिव तदेकदेशतया तद्वाच्यं ललाटलोचनमपि शिवरात्रिमाहात्म्यप्रयुक्तत्वेन वर्णनीयमिति तन्मुखेन कृत्स्नं शिवसारूप्यं गम्यम् ।

यथा वा—

'वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
त्विषां बृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ।
तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतस्सरणिरिव सीमन्तसरणिः ॥'

अत्र वर्णनीयत्वेन प्रस्तुतायास्सीमन्तसरणेर्वदनसौन्दर्यलहरीपरीवाहत्वोत्प्रेक्षणेन परिपूर्णतटाकवत्परीवाहकारणीभूता स्वस्थाने अमान्ती वदनसौन्दर्यसमृद्धिः प्रतीयते । सापि वर्णनीयत्वेन प्रस्तुतैव ।

यथा वा—

अङ्गासङ्गिमृणालकाण्डमयते भृङ्गावलीनां रुचिं
नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलाद्वाहते ।
दत्तेयं हिमवालुकापि कुचयोर्धत्ते क्षणं दीपतां
तप्तायःपतिताम्बुवत्करतले धाराम्बु संलीयते ॥'

---

मुदाहरति—**रात्रिश्शिवेति** । शिवा श्रेयःप्रदा । काचन अनिर्वचनीयमाहात्म्यशालिनीत्यर्थः । अत्र वर्णनीयत्वेन प्रस्तुततार्तीयीकलोचनरूपावयवप्राप्तिवर्णनेनावयविशिवसारूप्यं शिवरात्रिमाहात्म्यप्रयुक्तत्वाद्विशेषाद्वर्णनीयं गम्यमिति अवयवावयविभावनिबन्धनोऽत्र प्रस्तुतांकुर इत्यर्थः । अत्रैव कार्यनिबन्धनोऽप्ययं वक्तुं शक्यः । शिवरात्रिमाहात्म्यप्रसादायत्ततया तृतीयलोचनप्राप्तिकृत्स्नशिवरूपप्राप्त्योर्ललाटलोचनप्राप्तिकार्येण तन्मूलकारणीभूतशिवरात्रिमाहात्म्यव्यक्तेरिति द्रष्टव्यम् । अत्रैवोदाहरणान्तरमाह—**वहन्ती सिन्दूरमिति** । अत्र सीमन्तसरणौ लहरीपरीवाहत्वमुत्प्रेक्ष्यम् । तेन वदनसौन्दर्यस्य तटाकत्वरूपणं गम्यम् । तस्यां चोत्प्रेक्षायां वदनसौन्दर्यैकदेशः सीमन्तसरणिविस्तरः सिन्दूरत्वेनाध्यवसितो निमित्तम् । सिन्दूरे च बन्दीकृतनवीनार्ककिरणत्वोत्प्रेक्षा कबरीभारतिमिरत्वरूपणोत्थापितेत्यनयोः रूपकस्य चाङ्गाङ्गिभावसङ्करः । **अंगासंगीति** । मृणालकाण्डनासामौक्ति-

अत्र नायिकाया विरहासहत्वातिशयप्रकटनाय सन्तापवत्कार्याणि मृणालमालिन्यादीन्यपि वर्णनीयत्वेन विवक्षितानीति तन्मुखेन सन्तापोऽवगम्यः । यत्र कार्यमुखेन कारणस्यावगतिरपि श्लोके निबद्धा न तत्रायमलङ्कारः । किं त्वनुमानमेव ।

यथा —

'परिम्लानं पीनस्तनजघनसङ्गादुभयतः
तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं प्रशिथिलभुजाक्षेपवलनैः
कृशाङ्ग्यास्सन्तापं वदति नलिनीपत्रशयनम् ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे प्रस्तुतांकुरप्रकरणम्॥२७॥

अथ पर्यायोक्तम्—

(ननु, प्रस्तुतकार्याभिधानमुखेन कारणस्य गम्यत्वमपि प्रस्तुतांकुरविषयश्चेत् किं तर्हि पर्यायोक्तमित्याकांक्षायामाह—)[1]

**पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ।**[2][3]

---

कादौ भृङ्गावलिरुच्यादिसम्बन्धाभावेऽपि तत्सम्बन्धवर्णनादतिशयोक्तिः । तदुत्थापितः प्रस्तुतांकुर इति तयोरङ्गाङ्गिभावसङ्करः । यदि रुचिसरणिपदयोस्तत्सदृशरुच्यादिपर्यवसानं तदा निदर्शनासङ्करो द्रष्टव्य इत्यभिप्रेत्य गम्यगमकयोरुभयोरपि प्रस्तुतत्वमुपपादयति—**अत्र नायिकाया इति** । ननु, कार्यमुखेन कारणस्यावगतौ प्रस्तुतांकुरश्चेत्तदवगतिनिबन्धने कोऽलङ्कार इत्यत आह—**यत्रेति** । कारणावगतिनिबन्धने कारणस्य गम्यत्वाभावान्नायमलङ्कारः । किं तु कार्येण कारणानुमानादनुमानालङ्कार इत्यर्थः । अत्रोदाहरणमाह—**परिम्लानमिति** । अत्र नलिनीपरिम्लानतादिना कार्येण (कारणस्य गम्यत्वे) नलिनीपत्रशयनस्य कारणस्यावगतिर्वदतीत्यनेनाविवक्षितवाच्येनोपनिबद्धेत्यनुमानालङ्कार इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां प्रस्तुतांकुरप्रकरणम् ॥ २७ ॥

प्रस्तुतकार्येण कारणस्य गम्यत्वे प्रस्तुतांकुरोक्तौ पर्यायोक्तस्य विषयापहार एव स्यात् । तस्य तत्रैव लब्धप्रसरत्वादित्याशङ्कामुखेन पर्यायोक्तस्य विषयं प्रदर्शयंस्तल्लक्षयति—**नन्विति ।**

---

१. इयमवतारिका मुद्रितेषु पुस्तकेषु चन्द्रिकाव्याख्यागतत्वेन दृश्यते । रसिकरञ्जनीकारेण कुवलयानन्दगतत्वेन व्याख्याततया तालपत्रलिखितप्राचीनकुवलयानन्दपुस्तकेषु दृश्यमानतया च मूलगतत्वेनैव पाठोऽत्रादृत इति विज्ञेयम् । २. इदं **ख.** पुस्तक एव दृश्यते । ३. चन्द्रालोके तु, **कार्याद्यैः प्रस्तुते ह्युक्ते पर्यायोक्तिं प्रचक्षते । तृणान्यंकु**

**नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ॥**

यदेव गम्यं विवक्षितं तस्यैव भङ्ग्यन्तरेण विवक्षितरूपादपि चारुतरेण केनचिद्रूपान्तरेणाभिधानं पर्यायोक्तम् । उत्तरार्धमुदाहरणम् । अत्र भगवान् वासुदेवः स्वासाधारणरूपेण गम्यः । राहुवधूकुचवैयर्थ्यकारकत्वेन रूपान्तरेण स एवाभिहितः ।

यथा वा—

'लोकं पश्यति यस्यांघ्रिः स यस्यांघ्रिं न पश्यति ।
ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव ॥'

अत्र गौतमः पतञ्जलिश्च स्वासाधारणरूपाभ्यां गम्यौ रूपान्तराभ्यामभिहितौ ।

यथा वा—

'निवेद्यतां हन्त समापयन्तौ शिरीषकोशम्रदिमाभिमानम् ।
पादौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ॥'

---

**यदेवेति** । यदेव व्यङ्ग्यं विवक्षितं तदेव रूपान्तरेणाभिधीयते चेत्तदेव पर्यायोक्तं न तु कार्यमुखेन कारणस्याभिधानमिति नोक्तदोष इत्यर्थः । उदाहरणे लक्षणं योजयति—**अत्रेति** । वासुदेवोऽत्रासाधारणरूपेण गम्यः । स च राहुवधूकुचवैयर्थ्यकारकत्वेन चारुतररूपेणाभिहित इति इदं पर्यायोक्तमित्यर्थः । विषयव्याप्त्यर्थमुदाहरणान्तरमाह—**लोकं पश्यतीति** । अत्र गौतमपतञ्जली स्वासाधारणरूपेण गम्यौ पूर्वार्धेन अक्षपादगूढपादत्वाभ्यां प्रतिपादिताविति पर्यायोक्तम् । 'ताभ्यामपरिच्छेद्ये'ति प्रकृतयोस्तयोरपरिच्छेद्यत्वरूपैकधर्मान्वयित्वेन तुल्ययोगितापर्यायोक्तोत्थापितेति तयोरङ्गाङ्गिभावसङ्करः । 'ताभ्यामपी'त्यपिशब्देन अनितरसाधारणशिवानुग्रहभाजोस्तयोरपरिच्छेद्यत्वे किमु वक्तव्यमितरापरिच्छेद्येति कैमुत्येनार्थसंसिद्धिरूपार्थापत्त्यलङ्कारः । तस्य च तुल्ययोगितासङ्करस्य प्रागुक्तस्याङ्गाङ्गिभावसङ्कर इत्यूहनीयम् । उदाहरणान्तरं दर्शयति—**निवेद्यतामिति** । **हन्तेति** । अत्र मनसोऽनुचितकार्यारम्भोन्मुखतापादनमयुक्तं तवेति व्यज्यते । **तुच्छदयामिति** । दयाविधुरमित्यर्थः । प्रयासावहपादनिधित्सायां दयाविरहस्य समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । दूराजिगमिषायाः गम्यायाः कियद्दूरपादनिधित्सात्वेन चारुतररूपेणाभिधानात्पर्यायोक्तमिति तयोरङ्गाङ्गिभावसङ्करः । 'शिरीषकोशम्रदिमाभिमानं सम्पादयन्ता'वित्यनेन शिरीषकोशात्पादयोरुत्कर्षप्रतीतेर्व्यतिरेकालङ्कारः । तस्य च तयोश्चाङ्गाङ्गिभावसङ्कर इत्यव-

---

**रयामास विपक्षनृपसद्मसु** । इति पाठः ।

अत्र कियद्दूरं जिगमिषेति गम्य एवार्थो रूपान्तरेणाभिहितः ।

यथा वा—

देवं वन्दे जलधिशरधिं देवतासार्वभौमं
व्यासप्रष्ठा भुवनविदिता यस्य वाहाधिवाहाः ।
भूषापेटी भुवनमधरं पुष्करं पुष्पवाटी
शाटीपालाश्शतमखमुखाश्चन्दनद्रुर्मनोभूः ॥'

अत्र यस्य वेदा वाहाः भुजङ्गमा भूषणानीत्यादि तत्तद्वाक्यार्थव्यवस्थितौ वेदत्वाद्याकारेण गम्या एव वेदादयो व्यासप्रमुखविनेयत्वाद्याकारेणाभिहिताः। परं तु देवतासार्वभौमत्वस्फुटीकरणाय विशेषणविशेष्यभावव्यत्यासेन प्रतिपादिताः। अत्र अलङ्कारसर्वस्वकृतापि पर्यायोक्तस्य संप्रदायागतमिदमेव लक्षणमङ्गीकृतं '**गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्त**'मिति ।

'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥'

इति प्राचीनोदाहरणं त्वन्यथा योजितम् । राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपो गम्यत इति । एवं च 'गम्यस्यैवाभिधान'मिति लक्षणस्यानुपपत्तिमाशङ्क्याह—यद्गम्यं तस्यैवाभिधानायो-

---

धेयम् । उदाहरणान्तरमाह—**देवं वन्द इति** । लक्षणमुदाहरणे सङ्गमयति—**अत्रेति**। अत्र जलधौ शरधित्वरूपणं, व्यासादिषु अतिशयोक्त्या वाहत्वाध्यवसितवेदवाहकत्वनिरूपणं, अधरभुवने भूषात्वाध्यवसितभुजङ्गमञ्जूषात्वरूपणं, पुष्करे पुष्पत्वेनाध्यवसितचन्द्राद्यारामत्वरूपणं, शतमखमुखेषु दिक्पालेषु शाटीपालत्वरूपणं, मनोभवे चन्दनद्रुमत्वरूपणमिति रूपकाणामतिशयोक्तीनां च सङ्करः । तेन देवतासार्वभौमत्वसमर्थनात्तदुत्थापितं काव्यलिङ्गं च। अत्र लक्षणमुपपादयति—**अत्रेति** । नन्वत्र व्यासादयो भगवद्वाहाधिवाहादित्वेन प्रतिपादिताः। वेदत्वादिना गम्यानां वेदादीनां व्यासप्रमुखविनेयत्वाद्याकारेणानभिधानात् कथं पर्यायोक्तमत आह—**परं त्विति** । भगवद्वाहाधिवाहत्वादिना अभिधानेन विना देवतासार्वभौमत्वसमर्थनायोगाद्व्यासादीनां वाहाधिवाहत्वप्रतिपादनेऽपि समानसंवित्संवेद्यतया व्यासादिविनेयत्वस्य लाभेन पर्यायोक्तं युक्तमिति भावः । ननु, सर्वस्वकारादिभिः 'कार्यमुखेन कारणप्रत्यायनं पर्यायोक्त'मित्युक्तेः कथं तद्विरुद्धमत्र तल्लक्षणाभिधानमित्याशङ्क्य तेषामप्यत्रैव तात्पर्यमिति वदन् तदीययथाश्रुततल्लक्षणयोजनमनुपपन्नमित्याह—**अलंकारेति** । **सम्प्रदायेति** । उद्भटरुद्रटमम्मटभामहादिसम्प्रदायागतमित्यर्थः । तदीयं सूत्रमत्र पठति—**गम्यस्येति** । उदाहरणमुखेन तदीयलक्षणयोजनाप्रकारं दर्शयति—**चक्राभिघातेति** ।

गात्कार्यादिद्वारेणैवाभिधानं लक्षणे विवक्षितमिति । लक्षणमपि क्लिष्टगत्या योजितम् । लोचनकृता—'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।' इति । इदमेव लक्षणमङ्गीकृत्य तदुदाहरणे च कार्येण शब्दाभिहितेन कारणं व्यङ्ग्यं प्रदर्श्य तत्र लक्षणं लक्ष्यनाम च क्लिष्टगत्या योजितम् । वाच्यादन्येन प्रकारेण व्यंग्येनोपलक्षितं सद्यदभिधीयते तत्पर्यायेण प्रकारान्तरेण व्यंग्येनोपलक्षितमुक्तमिति । सर्वोऽप्ययं क्लेशः किमर्थ इति न विद्मः । प्रदर्शितानि हि गम्यस्यैव रूपान्तरेणाभिधाने बहून्युदाहरणानि । 'चक्राभिघातप्रसभाज्ञयैवे' ति प्राचीनोदाहरणमपि स्वरूपेण गम्यस्य भगवतो- रूपान्तरेणाभिधानसत्त्वात्सुयोजनमेव । यत्तु, तत्र राहुशिरश्छेदावगमनं तत्र प्रागुक्तरीत्या प्रस्तुतांकुर एव । प्रस्तुतेन च राहोश्शिरोमात्रावशेषेणालिङ्गनवन्ध्यत्वाद्यापादनरूपे वाच्ये भगवतो रूपान्तरे उपपादिते तेन भगवतस्स्वरूपेणावगमनं पर्यायोक्तस्य विषयः ।

**पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।**

---

लोचनकारीयमपि लक्षणमाह—**पर्यायोक्तमिति** । 'वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ।' इति श्लोकस्योत्तरार्धं द्रष्टव्यम् । अस्यार्थः । वाच्यवाचकवृत्तिभ्यां वाच्यवृत्तिर्लक्षणा । वाचकवृत्तिरभिधा । ताभ्यां शून्येन अवगमात्मना व्यञ्जनाव्यापारेणावगतं यदन्येन प्रकारेणाभिधीयते तत्पर्यायोक्तमित्यर्थः । ननु, यद्व्यङ्ग्यतया प्रतीतं कथं तस्याभिधेयतेत्याशङ्क्य, लक्षणयोजनाप्रकारं तदीयवाक्योदाहरणेन स्पष्टयति—**तदुदाहरण इति** । 'शत्रुच्छेदे दृढेच्छस्य मुनेरुत्पथगामिनः । रामस्यानेन धनुषा दर्शिता धर्मदेशना ॥' इत्यत्र भीष्मस्य भार्गवप्रभावाभिभावी प्रताप इति प्रतीयते । अयमेव 'दर्शिता धर्मदेशने'ति अभिधीयमानकार्यमुखेनाभिहित इति कारणं व्यङ्ग्यं प्रदर्श्य तत्र लक्षणं योजितमित्यर्थः । तदेवाह—**वाच्यादिति** । व्यङ्ग्येन कारणेनोपलक्षितं सत्कार्यमभिधीयत इति भावः । पर्यायोक्तपदस्यान्वर्थतां तदुक्त्या स्फोरयति—**पर्यायेणेति** । **क्लिष्टगत्येति** । लक्षणस्यास्मदुक्तरीत्या ललितयोजनसम्भवेन क्लेशेन योजनमयुक्तमिति भावः । ननु, 'चक्राभिघाते' त्युदाहरणे राहुशिरश्छेदस्य चुम्बनमात्रावशेषिततद्वधूगतरतोत्सवेनाभिव्यक्तिस्तत्र यदि न पर्यायोक्तं, तर्हि कोऽलङ्कारः । यदि प्रस्तुतांकुरः, पर्यायोक्तस्यात्र प्राचीनोदाहृतस्य विषयालाभ इत्याशङ्क्य द्वयोरपि परस्परविविक्तं विषयं प्रकाशयति—**यत्त्विति** । तथा च कार्येण विशिष्टरतोत्सवेन तत्कारणस्य राहुशिरश्छेदस्यावगमनं प्रस्तुतांकुरविषयः । आलिङ्गनवन्ध्यत्वापादकत्वरूपवाच्यस्योपपादनेन भगवतोऽवगमनं पर्यायोक्तस्य विषय इति भावः । प्रकारान्तरेण पर्यायोक्तं लक्षयति—**पर्यायो-**

---

१. अयं पर्यायोक्तभेदः चन्द्रालोके न दृश्यते । २. धर्मदेशना—धर्मोपदेश इत्यर्थः ।

**यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥**

अत्र नायिकां नायकेन सङ्गमय्य चूतलतादर्शनव्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यसम्पादनरूपेष्टसाधनं पर्यायोक्तम् ।

यथा वा—

'देहि मत्कन्दुकं राधे! परिधाननिगूहितम् ।
इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥'

पूर्वत्र परेष्टसाधनमत्र तु कन्दुकसद्भावशोधनार्थं नीवीविस्रंसनव्याजेन स्वेष्टसाधनमिति भेदः ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे पर्यायोक्तप्रकरणम् ॥ २८ ॥

अथ व्याजस्तुतिः—

**व्यक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ।**
**कस्स्वर्धुनि! विवेकस्ते पापिनो नयसे दिवम् ॥**
**साधु दूति! पुनः साधु कर्तव्यं किमतः परम् ।**
**यन्मदर्थे विलूनासि दन्तैरपि नखैरपि ॥**

---

**कमिति** । किञ्चित्कार्यव्याजेन इष्टपरिपन्थिनिरासमुखेन इष्टसम्पादनं यत्तदपि पर्यायोक्तमित्यर्थः । उत्तरार्धमुदाहरणम् । तत्र लक्षणं योजयति—**अत्रेति** । **तत्स्वाच्छन्द्येति** । नायकयोः स्वाच्छन्द्येत्यर्थः । उदाहरणान्तरमाह—**देहीति** । पूर्वोदाहरणादस्य भेदमाह—**पूर्वत्रेति** । नायकेष्टसम्पादनं पूर्वत्र, अत्र स्वेष्टसाधनमिति भावः ।

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां पर्यायोक्तप्रकरणम् ॥२८ ॥

व्याजस्तुतिं निरूपयति—**व्यक्तिरिति** । यत्र निन्दया स्तुतेः स्तुत्या निन्दाया वा व्यक्तिः सा व्यजस्तुतिरित्यर्थः । क्रमेणोदाहरणे लक्षणं योजयति—**क इति** । अत्र पुण्यकृतः स्वर्गं नयसि चेत्तदा तव विवेको युक्तः । त्वं तु पापिन एव नयसि । अतः अविवेकस्तव कथं वर्ण्य इति गङ्गानिन्दा न तत्तात्पर्येण । किं तु आजन्मपापं कृत्वा त्वयि सकृन्मज्जतो जन्मप्रभृत्युपार्जितानामेनसामपनयनेन तान् स्वर्गं प्रापयसीति त्वदीयमहिमा अवाङ्मनसपथातीत इति गङ्गास्तुतेर्व्यञ्जनादियं व्याजस्तुतिः । स्तुत्या निन्दाव्यक्तौ द्वितीयमुदाहरणम् । तत्र मुखे स्तुतिर्वाच्या । मदर्थं दन्तकरजादिपीडनं सोढ्वापि मदीयं हितमाचरसीति अनया च व्यजरूपया स्तुत्या स्वसमीहितं सम्पाद्य मदीयहितमपोहितवतीं धिक्त्वामिति निन्दाव्यञ्जनाच्च द्विविधा व्याजस्तुतिर्युक्तेति भावः । अत्रैवोदाहरणान्तरमाह—

---

४. **'कस्ते विवेको नयसि स्वर्गं पातकिनोऽपि यत् ॥'** इति पाठः ।

निन्दया स्तुतेः स्तुत्या निन्दाया वा अवगमनं व्याजस्तुतिः। 'कस्स्वर्धुनी'त्युदाहरणे विवेको नास्तीति निन्दाव्याजेन गङ्गा सुकृतिवदेव महापातकादि कृतवतोऽपि स्वर्गं नयतीति व्याजरूपया निन्दया तत्प्रभावातिशयस्तुतिः। 'साधु दूती'त्युदाहरणे मदर्थे महान्तं क्लेशमनुभूतवत्यसीति व्याजरूपया स्तुत्या मदर्थं न गतासि किंतु रन्तुमेव गतासि धिक्त्वां दूतिकाधर्मविरुद्धकारिणीमिति निन्दा अवगम्यते ।

यथा वा—

'कस्ते शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते ।
सप्तसप्तिसमारूढा भवन्ति परिपन्थिनः ॥'

'अर्धं दानववैरिणा गिरिजयाप्यर्धं हरस्याहृतं
देवेत्थं जगतीतले पुरहराभावे समुन्मीलति ।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥'

अत्राद्योदाहरणे सप्तसप्तिपदगतश्लेषमूलनिन्दाव्याजेन स्तुतिर्व्यज्यते। द्वितीयोदाहरणे सर्वज्ञस्सर्वेश्वरोऽसीति राज्ञः स्तुत्या व्याजरूपया मदीयवैदुष्यादि दारिद्र्यादि सर्वं जानन्नपि बहुप्रदानेन रक्षितुं शक्तोऽपि मह्यं किमपि न ददासीति निन्दा व्यज्यते । सर्वमिदं निन्दास्तुत्योरेकविषयत्वे उदाहरणम् ।

भिन्नविषयत्वे निन्दया स्तुत्यभिव्यक्तिर्यथा—

'कस्त्वं वानर! रामराजभवने लेखार्थसंवाहकः
यातः कुत्र पुरागतस्स हनुमान्निर्दग्धलङ्कापुरः ।
बद्धो राक्षससूनुनेति कपिभिस्सन्ताडितस्तर्जितः
सव्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते ॥'

---

**कस्ते इत्यादि**। अत्र निन्दया श्लेषमूलया स्तुतेर्व्यञ्जनादाद्या व्याजस्तुतिः प्रथमोदाहरण इत्यर्थः । शेषमतिरोहितार्थम् । वक्ष्यमाणोदाहरणेभ्यः एतेषु विशेषमाह—**सर्वमिदमिति । एकविषयत्व इति** । एकाश्रितत्व इत्यर्थः । भिन्नाश्रयत्वे क्रमेणोदाहरणमाह—**भिन्नविषयत्व इति । कस्त्वं वानरेति** ? अयं प्रश्नः । 'रा-

अत्र हनुमन्निन्दया इतरवानरस्तुत्यभिव्यक्तिः ।

स्तुत्या निन्दाभिव्यक्तिर्यथा—

'यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून् मृषा
नैषां गर्ववचः शृणोषि न च तान् प्रत्याशया धावसि ।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥'

अत्र हरिणस्तुत्या राजसेवानिर्विण्णस्यात्मनो निन्दा अभिव्यज्यते । अयमप्रस्तुतप्रशंसाविशेष इति अलङ्कारसर्वस्वकारः । तेन हि सारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणानन्तरं 'वैधर्म्येणापि दृश्यते । यथा—

'धन्याः खलु वने वाताः कह्लारास्सुखशीतलाः ।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥'

अत्र 'वाता धन्या' इत्यप्रस्तुतार्थादहमधन्य इति वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयत' इति व्युत्पादितम् । 'इयमेवाप्रस्तुतप्रशंसा न कार्यकारणनिबन्धने'ति दण्डी । यदाह—

'अप्रस्तुतप्रशंसा स्यादप्रकाण्डे तु या स्तुतिः ।

---

मराजभवन' इत्याद्युत्तरम् । एवमग्रेऽपि । स्तुतिनिन्दयोर्वैयधिकरण्यं स्पष्टयति—अत्रेति । यद्वक्त्रमिति । अत्र 'कुत्रे'त्यनेन स्वच्छन्दवृत्तिसम्पादकतपस्सिद्धिनिदानभूतं क्षेत्रं निरतिशयोत्कर्षशालि । प्रसिद्धानि श्रीपर्वतादीनि सिद्धक्षेत्राणि नेदृशं तपः प्रसुवत इति व्यङ्ग्यम् । 'किन्नामे'त्यनेन ईदृशवर्तनं प्रसिद्धकृच्छ्रचान्द्रायणादिपरिपाको न भवति । इदं त्वनिर्वचनीयमाहिमशालीति व्यज्यते । निर्विण्णात्मनः निर्विण्णमानसस्य । अत्र सर्वस्वकारोक्तं विशेषं दर्शयितुं तन्मतमनुवदति—अयमिति । उक्तव्याजस्तुतिविषय इत्यर्थः । तेन हीति । सर्वस्वकारो ह्यप्रस्तुतप्रशंसाप्रकरणे सामान्यविशेषभावादिनिबन्धनाप्रस्तुतप्रशंसाविभागानन्तरं 'सारूप्यनिबन्धनाप्रस्तुतप्रशंसायाः साधर्म्यवैधर्म्याभ्यां द्वैविध्यं, तत्रापि वाच्यस्य सम्भवासम्भवाभ्यां तदुभयरूपतया च त्रयः प्रकारा' इत्येवं विभागं कथयित्वा, सामान्यादिनिबन्धनानामुदाहरणान्यभिधाय, 'वैधर्म्येण यथे'त्यादिना 'धन्याः खलु वने वाता' इत्युदाजहार । भगवदङ्गस्पर्शास्पर्शहेतुकधन्यत्वाधन्यत्वयोर्विरोधाद्वैधर्म्यं द्रष्टव्यम् । वाच्यस्याप्रस्तुततया तेनाहमधन्येति प्रस्तुतार्थः प्रतीयत इति भावः । दण्डी तु, अन्यथा मन्यत इत्याह—इयमेवेति । अप्रस्तुतस्तुत्या प्रस्तुता निन्दाभिव्यक्तिरेवेत्यर्थः । न कार्यकारणादिनिबन्धनेत्यत्र विनिगमकं तल्लक्षणोदाहरणपूर्वकमाह—अप्रस्तुतेति । अप्रकाण्डे अनवस-

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ॥'
'अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः ।
सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ॥'
राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना ।' इति।

वस्तुतस्त्वत्र व्याजस्तुतिरित्येव युक्तम् । स्तुत्या निन्दाभिव्यक्तिरित्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषसद्भावात् । अन्यथा प्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यां निन्दास्तुतिभ्यां प्रस्तुते स्तुतिनिन्दे गम्येते इत्येतावता व्याजस्तुतिमात्रमप्रस्तुतप्रशंसा स्यात् । एवं च अनया प्रक्रियया यत्रान्यगतस्तुतिविवक्षया अन्यस्तुतिः क्रियते तत्रापि व्याजस्तुतिरेव । अन्यस्तुतिव्याजेन तदन्यस्तुतिरित्यर्थानुगमसद्भावात् ।
यथा—

'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥'

अत्र शुकशावकस्तुत्या नायिकाधरसौभाग्यातिशयस्तुतिर्व्यज्यते ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे व्याजस्तुतिप्रकरणम् ॥ २९॥

रे या स्तुतिः सा अप्रस्तुतप्रशंसेति लक्षणार्थः । अप्रकृतस्तुतिश्च प्रकृतनिन्दापर्यवसायिनीति वदन्नुदाहरणं स एव व्याचष्टे— **सेयमिति** । सा वर्णिता । निन्दापर्यवसानमाह— **राजेति** । तदिदं मतं दूषयति— **वस्तुतस्त्विति** । स्तुतित्वनिन्दात्वरूपप्रस्तुताप्रस्तुतव्यापारगतवैलक्षण्येन विच्छित्तिविशेषसद्भावादित्यर्थः । नन्वप्रस्तुतस्तुत्या प्रस्तुतनिन्दाभिव्यक्तिरिति प्रागुक्ततदीयलक्षणानुसारेणाप्रस्तुतप्रशंसैव कार्यकारणादिनिबन्धनायां तस्यामुक्तलक्षणाभावादित्यत आह— **अन्यथेति** । इयता वैचित्र्यविशेषेण व्याजस्तुतेरनभ्युपगमे इत्यर्थः । **प्रसिद्धेति** । कः स्वर्धुनीत्यादिष्वित्यर्थः । **अप्रस्तुताभ्यामिति** । स्तोतव्यत्वेन गङ्गायाः प्रकृततया राजोपालम्भस्य विवक्षिततया च तन्निन्दास्तुत्योरप्रकृतत्वात् त्वदुक्तलक्षणस्य तत्रापि सद्भावादिति भावः । एवं व्याजस्तुतेः पार्थक्ये यत्रान्यस्तुत्यैदम्पर्येण अन्यस्तुतिवर्णनं तत्राप्येषैव लब्धप्रसरेत्याह— **एवं चेति** । न च तवापि कार्यकारणादिनिबन्धनाप्रस्तुतप्रशंसायामप्रस्तुतप्रशंसाशब्दस्य पारिभाषिकत्वप्रसङ्गः । प्रशंसाशब्दस्य स्तुतिनिन्दासाधारणकीर्तनमात्रपरत्वस्योक्तत्वात् । स्तुत्या निन्दाभिव्यक्तिमात्रस्याप्रस्तुतप्रशंसात्वे स्तुत्या स्तुत्यभिव्यक्तौ अप्रस्तुतप्रशंसा न स्यादिति भावः । **नायिकेति** । विशिष्टदेशकालानुरूपप्राचीनसुकृतपरिपाको नायिकाधरतुल्यबिम्बफलदंशनं शुकशावकेन लब्धमिति शुकशावकस्तुत्या लोकोत्तरनायिकाधरसौभाग्यस्तुतिर्व्यज्यत इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां व्याजस्तुतिप्रकरणम् ॥ २९ ॥

अथ व्याजनिन्दा—

[1]निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ।
विधे ! स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः ॥

अत्र हरनिन्दया विषमविपाकं संसारं प्रवर्तयतो विधेरभिव्यङ्ग्या निन्दा व्याजनिन्दा ।

यथा वा—

'विधिरेव विशेषगर्हणीयः करट ! त्वं रट कस्तवापराधः ।
सहकारतरौ चकार यस्ते सहवासं सरलेन कोकिलेन ॥'

अन्यस्तुत्यान्यस्तुत्यभिव्यक्तिरिति पञ्चमप्रकारव्याजस्तुतिप्रतिद्वंद्वीभूतेयं व्याजनिन्दा । ननु, यत्रान्यस्तुत्यान्यस्तुतेरन्यनिन्दयान्यनिन्दायाश्च प्रतीतिः तत्र व्याजस्तुतिव्याजनिन्दालङ्कारयोरभ्युपगमे स्तुतिनिन्दारूपाप्रस्तुतप्रशंसोदाहरणेष्वप्रस्तुतप्रशंसा न वक्तव्या । तेषामपि व्याजस्तुतिव्याजनिन्दाभ्यां क्रोडीकारसम्भवादिति चेत्, उच्यते । यत्राप्रस्तुतवृत्तान्तात् स्तुतिनिन्दारूपात्तत्सरूपः प्रस्तुतवृत्तान्तः प्रतीयते । 'अन्तश्छिद्राणि

---

व्याजनिन्दां लक्षयति—**निन्दाया इति**। यत्राप्रस्तुतान्यनिन्दा प्रस्तुतान्यनिन्दापर्यवसायिनी सा व्याजनिन्देत्यर्थः । उत्तरार्धमुदाहरणम् । तत्र लक्षणं योजयति—**अत्रेति** । अत्र विषमसृष्टिं संसारं सृजतो विधेर्निन्दा प्रस्तुता । तद्व्यञ्जनाय अप्रस्तुतहरनिन्दोक्तिरिति व्याजनिन्देति भावः । उदाहरणान्तरमाह—**विधिरेवेति** । अत्राप्यप्रस्तुतविधिनिन्दया प्रस्तुतकरटनिन्दावगतेर्व्याजनिन्देत्यर्थः । यथा वा—भगवन्तरायसचिवस्य 'अनपायमपास्य पुष्पवृक्षं करिणं नाश्रय भृङ्ग ! दानलोभात् । अयि मूढ ! स एष कर्णतालैरभिहन्याद्यदि जीवितं कुतस्ते ॥' अत्राप्रस्तुतभ्रमरनिन्दया हिंस्रं लुब्धं भजतो मूर्खस्य निन्दा व्यज्यत इति इहापि व्याजनिन्दा । **पञ्चमप्रकारेति** । व्याजस्तुतेर्हि स्तुतिनिन्दयोस्सामानाधिकरण्यवैयधिकरण्याभ्यां चत्वारो भेदाः । अन्यस्तुत्या अन्यस्तुत्यभिव्यक्तिः पञ्चमो भेदः । तत्प्रतिद्वन्द्विनी इयं व्याजनिन्देत्यर्थः । ननु, व्याजस्तुतिव्याजनिन्दयोः स्वीकारे 'एकः कृती शकुन्तेषु' 'आबद्धकृत्रिमसटे'त्यादिसारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणेष्वप्युक्तयोरलङ्कारयोस्सम्भवेन प्राचामप्रस्तुतप्रशंसोक्तिस्तत्र विरुध्यत इत्याशङ्कते—**नन्विति । यत्रेति** । स्तुतिनिन्दात्वापुरस्कारेण प्रस्तुतत्वाप्रस्तुतत्वमात्रं पुरस्कृत्य यत्राप्रस्तुतवृत्तान्तात्तत्सारूप्येण प्रस्तुतवृत्तान्तप्रतीतिस्तत्राप्रस्तुतप्रशंसा । **अन्तश्छिद्राणि भूयां-**

---

१. अयं व्याजनिन्दालङ्कारः चन्द्रालोके नोक्तः । किं तु मूलकृत्कल्पित इति वेद्यम् ।

भूयांसी'त्यादौ तत्र लब्धावकाशा सारूप्यनिबन्धनाप्रस्तुतप्रशंसा अत्रापि वर्तमाना न निवारयितुं शक्या। अन्यस्तुत्या अन्यस्तुतिरन्यनिन्दया अन्यनिन्देत्येवं व्याजस्तुतिव्याजनिन्दे अपि सम्भवतश्चेत्कामं ते अपि सम्भवेताम्। नत्वस्याः परित्यागः। यद्यपि 'विधिरेव विशेषगर्हणीय' इति श्लोके विधिनिन्दया तन्मूलकाकनिन्दया चाविशेषज्ञस्य प्रभोस्तेन च विद्वत्समतया स्थापितस्य मूर्खस्य च निन्दा प्रतीयत इति तत्र सारूप्यनिबन्धना अप्रस्तुतप्रशंसाप्यस्ति। तथाऽपि सैव व्याजनिन्दामूलेति प्रथमोपस्थिता। सापि तत्र दुर्वारा। एवं च व्याजनिन्दामूलकव्याजनिन्दारूपेयमप्रस्तुतप्रशंसेति चमत्कारातिशयः। एवमेव व्याजस्तुतिमूलकव्याजस्तुतिरूपाप्यप्रस्तुतप्रशंसा दृश्यते।

यथा वा —

'लावण्यद्रविणव्ययो न गणितः क्लेशो महानार्जितः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः।

---

**सीत्यादाविति**। आदिपदग्राह्यं'एकः कृती शकुन्ते'ष्वित्यादिकम्। तत्र व्याजस्तुतिव्याजनिन्दयोरात्मलाभाभावेनाप्रस्तुतप्रशंसायाः सर्वथा लब्धावकाशायाः 'कः स्वर्धुनी'त्यादावप्रस्तुतप्रशंसाया असम्भवेन अत्र लब्धावकाशयोर्व्याजस्तुतिव्याजनिन्दयोश्च 'शिखरिणि क नु नाम' 'विधिरेव विशेषगर्हणीय' इत्यनयोः स्वस्वलक्षणानुसारेण समावेशसम्भवादुभयोरेकवाचकानुप्रवेशसङ्करः। न त्वप्रस्तुतप्रशंसायास्सर्वथा सम्भव इति भावः। ननु, 'विधिरेव विशेषगर्हणीय' इत्यत्र काकनिन्दामूलकविधिनिन्दामात्रे न पर्यवसानं, येनेह व्याजनिन्दा स्यात्। किं तु कस्य चिदनभिज्ञस्य प्रभोस्तेन विबुधपरिषत्तुल्यतया मानितस्य विद्वन्मानिनो दुरन्ताहन्ताशालिनो मूर्खस्य निन्दाव्यक्तेः सारूप्यनिबन्धनाप्रस्तुतप्रशंसासद्भावात् न व्याजनिन्दा युक्तेति शङ्कते—**यद्यपीति**। नैतावता व्याजनिन्दाया असम्भवः। तदनुप्राणितत्वादप्रस्तुप्रशंसायास्तयोः सङ्करस्तत्प्रयुक्तविच्छित्तिविशेषश्च दुर्वार इत्यभिप्रेत्य परिहरति—**तथापीति**। अनयैव रीत्या व्याजस्तुतिमूलिकाप्यप्रस्तुतप्रशंसा सम्भवतीत्याह—**लावण्येति**। अत्र द्रविणशब्देन सर्वस्वप्रायता विविधस्वकार्योपयिकता चोक्ता। **न गणित इति**। चिरेण हि यो व्ययः सम्पद्यते न तु झटिति, तत्रावश्यं गणनेन भवितव्यम्। अनन्तकार्यनिर्माणहेतुभूतस्यापि विधेर्न विवेककणिकापीयता कालेन सम्पन्नेति असमीक्ष्यकारित्वं दर्शितम्। अत एवाह—**क्लेशो महानिति**। 'स्वच्छन्दं चरत' इत्यनेन गमनप्रतिबन्धहेतुश्रृंखलायितचिन्ताज्वरादिसम्पादनेन लोकोऽप्यस्वस्थः कृत इति।

एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ॥

अत्राप्रस्तुतायास्तरुण्यास्सृष्टिनिन्दाव्याजेन तन्निन्दाव्याजेन च तत्सौन्दर्यप्रशंसा । प्रशंसनीयत्वेन कविविवक्षितायास्स्वकवितायाः (सृष्टि) कविनिन्दाव्याजेन तन्निन्दाव्याजेन च शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यति । अस्य श्लोकस्य वाच्यार्थविषये यद्यपि नात्यन्तसामञ्जस्यम् । न हीमे विकल्पा वीतरागस्येति कल्पयितुं शक्यम् । रसाननुगुणत्वात् । वीतरागहृदयस्याप्येवंविधविषयेष्वप्रवृत्तेश्च । नापि रागिण इति युज्यते । तदीयविकल्पेषु 'वराकी'ति कृपणतालिङ्गितस्य 'हते'त्यमङ्गलोपहितस्य च वचसोऽनुचितत्वात् 'तुल्यरमणभावा'दित्यस्यात्यन्तमनुचितत्वाच्च । स्वात्मनि तदनुरूपरूपासम्भावनायामपि रागित्वे हि पशुप्रायता स्यात् ।

---

**एषापीति** । यत्स्वयन्निर्मीयते तदेव च निहन्यत इति महद्वैशसमपिशब्देनोक्तम् । **कोऽर्थ इति** । न स्वात्मनो न स्वनिर्मितस्य वा लोकस्येति । 'देवालयद्वारि खरो निबद्धः सुखं न देवस्य न वा खरस्य ।' इति न्याय आपतित इत्यर्थः । अत्राप्यप्रस्तुतप्रशंसायां पर्यवसानमाह—**अत्राप्रस्तुताया इति** । **तन्निन्देति** । तरुणीनिन्देत्यर्थः । **व्याजेनेति** । तन्निन्दाया अविवक्षितत्वादित्यर्थः । **सौन्दर्यप्रशंसेति** । एतावता व्याजस्तुतेः परिसमाप्तिरिति । **कविनिन्देति** । इयमपि कविनिन्दया तत्काव्यनिन्दाया व्याजनिन्दारूपतोक्त्या अप्रस्तुतप्रशंसारूपापि पर्यवसतीति भावः । नन्वस्य श्लोकस्य वाच्यार्थविषये अयुक्तत्वात् कथमिह व्याजस्तुतिर्घटत इत्यभिप्रेत्य शङ्कते—**अस्येति** । एतदेवोपपादयति—**नहीति** । **रसाननुगुणत्वादिति** । शृङ्गाररसाननुगुणत्वादित्यर्थः । **एवंविध इति** । शृङ्गाररसालम्बनविषयेष्वित्यर्थः । वीतरागहृदयं हि शृङ्गारादिविषयेषु न प्रवर्तते । यतः 'परिव्राट्कामुकशुनामेकस्यामेव योषिति। कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥' इति न्यायेन स कुणपमिति मन्यत इति भावः । **तदीयेति** । रागिसम्बन्धिविकल्पेष्वित्यर्थः । **अनुचितत्वादिति** । ईदृगुक्तेः शृङ्गाररसास्वादविरोधित्वादिति भावः । **तुल्येति** । स्वस्मिन्ननुरूपरमणत्वं मन्यमानस्येदृगुक्तिर्न युज्यत इति भावः । स्वस्मिन् तथाभिमानाभावेऽपि रागितायां पशुतुल्यतैव स्यादित्याह—**स्वात्मनीति** । ननु, नायमाक्षेपो घटते । वीतरागस्याप्यनादिकालाभ्यस्तरागवासनावासिततया मध्यस्थत्वेनापि तां वस्तुतस्तथा पश्यतो नेयमुक्तिरसम्भाव्या । वीतरागोऽपि न विपर्यस्तान्पदार्थान् पश्यति । न ह्यस्य वीणाक्वणितं व्यत्यस्य काकराटितकल्पं प्रतिभाति । अतो वीतरागविकल्पा इमे इति वक्तुं शक्यम् । तथा रागिण इत्यपि । तस्यापि निमित्तेन केन चित्परिगृहीतकतिपयकालव्रतस्य रात्रणप्रायस्य सतिर-

तथापि विवक्षितप्रस्तुतार्थतायां न किञ्चिदसामञ्जस्यम् । अत एवास्य श्लोकस्याप्रस्तुतप्रशंसापरत्वमुक्तं प्राचीनैः । वाच्यासम्भवेऽप्यप्रस्तुतप्रशंसोपपत्तेः । इति ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे व्याजनिन्दाप्रकरणम् ॥३०॥

अथ आक्षेपः—

**आक्षेपस्स्वयमुक्तस्य प्रतिषेधो विचारणात् ।**
**चन्द्र! सन्दर्शयात्मानमथवास्ति प्रियामुखम् ॥**

अत्र प्रार्थितस्य चन्द्रदर्शनस्य प्रियामुखसत्त्वेनानार्थक्यं विचार्य 'अथवे'त्यादिसूचितः प्रतिषेध आक्षेपः ।

---

दिविषये, दुष्यन्तप्रायस्य वा निर्ज्ञातजातिविशेषशकुन्तलादावीदृग्विकल्पसम्भवात् । तस्मादुभयस्यापि इयमुक्तिरुपपद्यत इति चेन्न । स्यादेवं यदि श्लोकोऽयं प्रबन्धान्तःपाती स्यात्तदा परं प्रकरणानुगुणार्थताकल्पनेन विकल्पोक्तिरवकल्पेत, यतो मुक्तकोऽयं धर्मकीर्तेरिति प्रासिद्धिः । अतो विवक्षिताप्रस्तुतप्रशंसायां पर्यवसानमापाद्यैव वाच्यार्थसामञ्जस्यमुपपादनीयमित्यभिप्रेत्याह—**तथापीति । प्राचीनैरिति** । ध्वनिकारादिभिरित्यर्थः । ननु, वाच्यार्थस्यानुपपन्नत्वे अप्रस्तुतवृत्तान्तकीर्तननिबन्धना कथमप्रस्तुतप्रशंसा घटतामित्यत आह—**वाच्यासम्भवेऽपीति** । सारूप्यनिबन्धनाप्रस्तुतप्रशंसा हि प्रागुक्तरीत्या त्रिविधा सर्वस्वकारादिभिर्वर्णिता । तत्र वाच्यसम्भवे तदसम्भवे च प्रागुदाहरणद्वयम् । तत्र 'अन्तश्छिद्राणि भूयांसी'त्यत्र वाच्ये गुणभंगुरीकरणे कण्टकानां हेतुत्वसम्भवेऽपि छिद्राणां हेतुत्वमसम्भावि । अथापि तदुच्यमानं प्रस्तुततादात्म्यापत्त्यैव योजनीयम् । प्रसिद्धा चान्यत्रापि तथाविधाप्रस्तुतप्रशंसा । 'सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं दृष्टिस्सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा। सर्वं विस्मृतवानसि भ्रमर! हे यद्वारणोऽद्याप्यसावन्तःशून्यकरो निषेव्यत इति भ्रातः! क एष ग्रहः ॥' अत्राप्रस्तुते भ्रमरवारणसेवात्यागे कर्णचापलस्य हेतुत्वसम्भवेऽपि रसनाविपर्ययान्तश्शून्यकरत्वयोर्न हेतुत्वसम्भवः । मदस्य सेवायामेव हेतुतया तत्त्यागहेतुता दूरनिरस्ता । अथापि प्रस्तुतदुष्प्रभुरसनाविपर्ययात्मतापत्त्या प्रस्तुतहेतुत्वोपपत्तिरिति दिक् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां व्याजनिन्दाप्रकरणम् ॥ ३० ॥

आक्षेपालङ्कारं लक्षयति—**आक्षेप इति** । उक्तस्यार्थस्य वैयर्थ्यालोचनपूर्वकः प्रतिषेध आक्षेप इत्यर्थः । उत्तरार्धमुदाहरणम् । अत्र लक्षणं सङ्गमयति—**अत्रेति । चन्द्रस्येति** । चन्द्रदर्शनस्येत्यर्थः । त्वत्कार्यकारिप्रियामुखदर्शनस्य विद्यमानत्वात्त्वद्दर्शनप्रार्थनं व्यर्थमित्यभिप्रायेण चन्द्रदर्शनप्रार्थननिषेधसूचनादयमाक्षेपः । ततश्च आक्षेपशब्दः प्रतिषे-

यथा वा—

साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ? ।
यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति ॥'
'गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः क्वापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥'

अत्र प्रथमश्लोकेन प्रार्थितस्य काव्यार्थचोरेभ्यो रक्षणस्य स्वोल्लिखितवैचित्र्याणां समुद्रगतरत्नजालवदक्षयत्वं विचिन्त्य प्रतिषेध आक्षेपः ।

**[1]निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।**
**नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ॥**

केचिदलङ्कारसर्वस्वकारादय इत्थमाहुः । न निषेधमात्रमाक्षेपः । किंतु यो निषेधो बाधितस्सन्नर्थान्तरपर्यवसितः कञ्चिद्विशेषमाक्षिपति स आक्षेपः । यथा दूत्या उक्तौ 'नाहं दूती'ति निषेधो बाधितत्वादाभासरू-

धार्थकः पर्यवस्यतीति तस्यान्वर्थतेति भावः । अत्रैवोदाहरणान्तरमाह—**साहित्येति** । साहित्यमेव पाथोनिधिरित्यत्र रूपकम् । 'कर्णामृत'मित्यत्र स्वोल्लिखितार्थवैचित्र्याणाममृतत्वेनाध्यवसानादतिशयोक्तिः, तयोस्सङ्करः । तस्य च लक्षणीयत्वम् । अमृतत्वेनाध्यवसितस्वोल्लिखितार्थवैचित्र्यापहारककाव्यार्थचोरेभ्यस्सङ्गोपनं तत्प्रार्थनमिह विवक्षितो वाक्यार्थः। 'गृह्णन्त्वि'त्यादिना पूर्वश्लोकोक्तस्य काव्यार्थचोरेभ्यो रक्षितव्यत्वस्यानादिकालापह्रियमाणेष्वपि रत्नेषु तेषामक्षयतया समुद्रे रत्नाकरत्वव्यपदेशवत् स्वोत्प्रेक्षितार्थपारिमित्याभावात्काव्यार्थचोरेभ्यो रक्षणं न कर्तव्यमिति प्रतिषेधस्य द्वितीयश्लोके प्रतिपादनादयमप्याक्षेपालङ्कार इति भावः ।अलङ्कारसर्वस्वकारमतमाह—**निषेधाभासमिति**। एवं हि ते मन्यन्ते। यत्र यो निषेधोऽनुपपद्यमानतया आभासरूपो निषेध्यनिष्ठविशेषप्रतीतिकारी वर्ण्यते स आक्षेपः । स च द्विविधः । उक्तविषयो वक्ष्यमाणविषयश्चेति । उभावपि प्रत्येकं द्विविधौ । तत्रोक्तविषये यस्यैवेष्टस्य विशेषः प्रतिपिपादयिषितस्तस्यैवाक्षेप इति गम्यस्य विशेषस्य गमकस्य निषेधस्य च एकाश्रयत्वम्। वक्ष्यमाणविषयेऽपीष्टसम्बन्धिनोऽन्यस्य सामान्यरूपस्य निषेधः। ततश्च उक्तविषय आक्षेपः क्वचिद्वस्तुनिषेधरूपः क्वचिद्वस्तुकथननिषेधरूप इति द्विभेदः। वक्ष्यमाणविषये तु वस्तुकथनरूपस्यैव निषेध्यता । तच्च क्वाचिद्विशेषनिष्ठत्वेन क्वापि पुनरंशोक्तावंशान्तरगतत्वेनेत्यत्रापि द्वौ भेदाविति सङ्कलनयास्य चत्वारो भेदा इत्याहुः । तदेतन्मतं संगृह्योपपादयति—**न निषेधमात्रमिति** । तत्रोक्तविषये वस्तुनिषेधात्मके आक्षेपे उत्तरार्धमुदाहरणम् । 'नाहं दूती'ति निषेधस्य अभासरूपतां दर्शयति—**दूत्या-**

1. अयमाक्षेपभेदः चन्द्रालोके न दृश्यते ।

पः । संघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमेवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपति ।

यथा वा—

'नरेन्द्रमौले! न वयं राजसन्देशहारिणः ।
जगत्कुटुम्बिनस्तेऽद्य न शत्रुः कश्चिदीक्ष्यते ॥'

अत्र सन्देशहारिणामुक्तौ 'न वयं सन्देशहारिण'इति निषेधोऽनुपपन्नः । सन्धिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन् सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः । किं तु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया इति विशेषमाक्षिपति ।

**[1]आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते ।**

इति । अर्थान्तरपर्यवसानमुपपादयति—**संघटनेति** । तथा च दूत्यां दूतीत्वनिषेधो बाधितः सन् यथार्थवादितायामर्थान्तरे संक्रान्त इदानीमित्यादिविशेषं द्योतयतीति भावः । अत्रैवोदाहरणान्तरमाह—**नरेन्द्रमौले इति**। पूर्वोदाहरण इवात्रापि लक्षणं योजयति—**अत्रेति** । उदाहरणद्वयेऽप्युक्तविषय आक्षेपो वस्तुनिषेधात्मकः । गमकस्य निषेधस्य गम्यस्य च यथार्थवादितारूपस्य एकाश्रयत्वमिति द्रष्टव्यम् । इतरभेदत्रयं यथा—'प्रसीदेति ब्रूयामिदमसति कोपे न घटते करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः । न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे! ॥' अत्र 'प्रसीदे'त्युक्तिनिषेधमुखेन कोपनिवर्तनेनावश्यानुग्राह्यत्वरूपविशेषस्य गम्यमानतया द्वितीयोऽयमुक्तविषय आक्षेपः । वक्ष्यमाणविषयस्याद्यो यथा—'सुहअ! विलम्बस तोअं जाव इमं विरहकाअरं हिअअम् । संठाविऊ भणिस्सं अहवा घोलेसु किं भणिमो ॥' सुभग! विलम्बस्व स्तोकं यावदिदं विरहकातरं हृदयम् । संस्थाप्य भणिष्यामः अथवा घोरेषु किं भणामः ॥ अत्र 'भणिष्याम'इति विरहकातरमपि हृदयं कथञ्चिद्वशीकृत्य वक्ष्यमाणतया सामान्यमुक्तम् । न तु प्रकारविशेषविशिष्टम् । इत्थं सामान्योक्तिं प्रतिज्ञाय 'अथवे'त्यादिना भणनप्रतिषेधेन विरहो ममात्यन्तदुर्विषहो मरणशङ्कावह इति प्रकारविशेष आक्षिप्यत इति वक्ष्यमाणविषयाक्षेपस्य प्रथमो भेद इति द्रष्टव्यम् । द्वितीयो यथा । "ज्योत्स्ना तमः पिकवचः क्रकचस्तुषारः क्षारो मृणालवलयानि कृतान्तदन्ताः । सर्वं दुरन्तमिदमद्य शिरीषमृद्वी सा नूनमाः किमथवा हतजल्पितेन॥'अत्र 'शिरीषमृद्वी सा नून'मित्यंशेन उक्तस्य प्रतिज्ञातस्य 'किमथवे'त्यादिनिषेधमुखेनाशक्यवचनीया तस्या अवस्थेत्यंशान्तरविशिष्टस्य निषेधस्य गम्यमानतया वक्ष्यमाणविषयापेक्षस्य द्वितीयो भेद इति दिक् । तृतीयमाक्षेपप्रकारमाह—**आक्षेप इति** । यत्र विधिना

1. चन्द्रालोके तु, '**गूढाक्षेपो विधौ व्यक्ते निषेधे चास्फुटे सति** ।

**गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम ॥**

अत्र 'गच्छे'ति विधिर्व्यक्तः । मागा इति निषेधस्तिरोहितः । कान्तोद्देशदेशे निजजन्मप्रार्थनयात्ममरणसंसूचनेन गर्भीकृतः ।

यथा वा—

'न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि यातव्यमलमाशङ्कयापि ते ॥'

अत्रापि 'न चिरं मम तापाये'ति स्वमरणसंसूचनेन गमननिषेधो गर्भीकृतः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे आक्षेपप्रकरणम् ॥३१॥

अथ विरोधाभासः—

**आभासत्वे विरोधस्य विरोधाभास इष्यते ।**
**विनापि तन्वि हारेण वक्षोजौ तव हारिणौ ॥**

---

शब्दप्रतिपादितेनानिष्टगोचरतयानुपपद्यमानेन निषेधो विधिविषयस्य गम्यते सोऽपर आक्षेप इत्यर्थः । उत्तरार्धे उदाहरणे लक्षणानुगमं दर्शयति—**अत्रेति** । 'गच्छे'ति गमनविधिः । स तु इष्टप्रियगमनगोचरतया अनुपपद्यमानः स्वप्रियजिगमिषितविषये स्वजन्मप्रार्थनासहायः स्वमरणव्यञ्जनेन 'मागा' इति निषेधं व्यञ्जयतीति भावः । एवं द्वितीयोदाहरणमपि निगदव्याख्यातम् । एषु त्रिष्वपि प्रतिषेधसत्त्वात्प्रतिषेधवाचकाक्षेपशब्दसाम्यमाश्रित्याक्षेपव्यवहार इति द्रष्टव्यम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां आक्षेपप्रकरणम् ॥ ३१ ॥

विरोधाभासालङ्कारं लक्षयति—**आभासत्व इति** । आभासत्वे अनुपपद्यमानत्व इत्यर्थः । विरोधस्तदभावत्वं तदभावव्याप्यत्वं च तत्तदभावयोः तत्तदभावव्याप्ययोर्वा एकासिकामसहमावयोरेकासिका यत्र निबध्यते तत्र विरोधाभास इति लक्षणनिष्कर्षः । यद्यपि विभावनाविशेषोक्त्यादौ 'अप्यलाक्षारसासिक्त'मिति चरणारुणिमसाधनलाक्षारसावसेकाभावेऽपि रक्तिमकथनात् 'हृदि स्नेहक्षयो नाभू'दित्यत्र स्मरदीपरूपकारणसद्भावेऽपि तद्विरुद्धायाः कार्यानुत्पत्तेर्वर्णनात्स्वाभाविकत्वेन समाधीयमानतया च विरोधस्याभासता सम्भवति । तथापि तत्तदभावयोः सामानाधिकरण्यानिबन्धनान्नातिप्रसङ्गः । अयं च जातिगुणक्रिया-

---

**हर सीतां सुखं किं तु चिन्तयान्तकढौकनम् ॥**' इति पाठः । ४. चन्द्रालोके तु, '**विरोधोऽनुपपत्तिश्चेत् गुणद्रव्यक्रियादिषु । अमन्दचन्दनस्पन्दः स्वच्छन्दं दन्दहीति माम् ॥**' इति विरोधालङ्कारः कश्चिदधिक उपन्यस्तः । अनंतरं '**श्लेषादिभिर्विरोधश्चेद्विरोधाभासता मता । अप्यन्धकारिणा येन जगदेतत्प्रकाश्यते** ॥' इति पाठः ।

अत्र हाररहितावपि हारिणौ हृद्याविति श्लेषमूलको विरोधाभासः ।
यथा वा—

'प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥'

अत्र विरोधसमाधानोत्प्रेक्षाशिरस्को विरोधाभास इति पूर्वस्माद्भेदः ॥

इति श्रीमदप्पय्यदीक्षितकृतौ कुवलयानन्दे विरोधाभासप्रकरणम् ॥ ३२ ॥

अथ विभावना—

**विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ।**
**अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयं ॥**

अत्र लाक्षारसासेकरूपकारणाभावेऽपि रक्तिमा कथितः । स्वाभाविकत्वेन विरोधपरिहारः ।

---

द्रव्याणां चतुर्णां विरोधप्रातियोगिनां भेदेन बहुविध इति प्राचीनैरभिहितम् । तथापि तत्कृतो नातीव चमत्कार इति मूलकारः । तान्भेदानुपेक्ष्य लक्षणोदाहरणे प्रादर्शयादित्यभिप्रेत्य उदाहरणेषु लक्षणानुगतिं दर्शयति—**अत्रेति** । हारसाहित्यतदभावयोः कुचलक्षणैकाधिकरण्यसम्बन्धनिबन्धनाद्विरोधाभासः । अमित्रजित्त्वतदभावयोः विचारदृक्चारदृक्योरेकासिकानिबन्धनात् श्लेषेण मित्रामित्रविचारचारपदानामर्थान्तरप्रतिभासेन विरोधस्य समाधानादाभासताव्यक्तेर्विरोधाभासालङ्कार इति भावः । यथा वा—'परिच्छेदातीतः सकलकरणानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥' अत्र विकारे एकस्मिन् जडिमकरणतापकरणयोर्विरुद्धयोस्सम्बन्धवर्णनादशक्यवचनीयत्वादिना तत्समाधानाच्च विरोधाभासः । एवं च विरोधसमाधानस्य श्लेषनिबन्धनार्थान्तरप्रतिभासेन विषयमाहात्म्यादिना वा सम्भव इति अयमपि द्विविध इति द्रष्टव्यम् । **विरोधसमाधानेति** । 'प्रतीपभूपै'रित्यत्र विरुद्धधर्मेषु स्वाश्रयभेदकत्वत्याग उत्प्रेक्ष्यते । अमित्रजित्त्वमित्रजित्त्वादिविरुद्धधर्मसामानाधिकरण्यं निमित्तमिति तदुत्थापितोत्प्रेक्षेति विरोधाभासोत्प्रेक्षयोरङ्गाङ्गिभावसङ्कर इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विरोधाभासप्रकरणम् ॥ ३२ ॥

विभावनालङ्कारं व्युत्पादयति—**विभावनेति** । या कारणनिरपेक्षा कार्योत्पत्तिरुपवर्ण्यते सा विभावनेत्यर्थः । उत्तरार्धमुदाहरणम् । शेषं चातिरोहितार्थमिति भावः । ननु, कारणाभावे कार्योत्पत्तेर्विरुद्धत्वान्नालङ्कारो युज्यत इत्यत आह—**स्वाभाविकत्वेनेति** । प्ररूढस्यैव विरोधस्य दोषता । प्रकृते च स्वाभाविकत्वादिना तदपवादादत्र दोषप्रसक्तिरिति भावः । ननु, कारणानपेक्षकार्योत्पत्तिवर्णनस्य विभावनात्वे 'हृदयमधिष्ठितमादौ

यथा वा—

'अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥'

अत्र पानादिप्रसिद्धहेत्वभावेऽपि क्षीबत्वादि निबद्धम् । विभाव्यमानशरत्समयहेतुकत्वेन विरोधपरिहारः ।

---

मालत्याः कुसुमचापबाणेन । चरमं रमणीवल्लभ! लोचनगोचरं त्वया भजता ॥' इति कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तौ कारणपूर्वकाले कार्योत्पत्तिवर्णनेन कारणानपेक्षकार्योत्पत्तिप्रतीतेरतिव्याप्तिः । तथा 'विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥' इत्यसङ्गतौ 'सद्यः करस्पर्शमवाप्य चित्रं रणेरणे यस्य कृपाणरेखा । तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥' इत्यत्रातिव्याप्तिश्च । तत्रासङ्गतौ कार्यस्य कारणवैयधिकरण्यवर्णनात् कार्याधिकरणे कारणाभावस्य विषमे च कारणरूपविजातीयरूपस्योत्पत्त्या कार्ये कारणाभावस्य प्रतीत्या कारणानपेक्षकार्योत्पत्तिरित्युक्तलक्षणस्य सत्वात् । कारणाभावस्य मुखतः प्रतिपादनविवक्षायां, 'रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः । स्फुटीभवद्ग्रामविशेषमूर्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥' इति विभावनाध्वनावव्याप्तिः । तत्रांगुलीघट्टनरूपकारणाभावस्य मुखतः प्रतिपादनाभावात् । किं च 'दीपे निर्वापिते रत्नैस्सप्रकाशमभूद्गृहम् ।' इति पूर्वरूपालङ्कारे अतिव्याप्तिश्च । तत्र दीपरूपकारणाभावेऽपि प्रकाशोत्पत्तेर्वर्णनादिति चेत् मैवम् । कारणानपेक्षकार्योत्पत्तिनिबन्धनस्य विभावनालङ्कारत्वेन विवक्षितत्वात् । उक्तातिशयोक्तिविशेषे तथाविधकार्योत्पत्तेरनिबन्धनान्नातिव्याप्तिः । असङ्गतिविषमयोश्च विभावनासङ्कीर्णतया न तद्व्यापनं लक्षणस्य दोषः । विषपानरूपकारणानपेक्षकार्योत्पत्तिवर्णनस्य विरहातिशयहेत्वन्तरमादाय पर्यवसानाद्विषमोदाहरणे कारणगतधावल्यानपेक्षयशोरूपकार्योत्पत्तिवर्णनस्य यशःस्वाभाविकत्वमादाय पर्यवसानाद्विभावनाध्वनेरसङ्ग्राह्यतया च न तद्व्यापनं दोषः । तस्य प्राधान्येनालङ्कार्यतया अलङ्कारत्वविरहात् । 'दीपे निर्वापित' इति पूर्वरूपे रत्नानां प्रकाशकारणत्वोक्त्या कारणानपेक्षकार्योत्पत्तिवर्णनेनातिव्याप्तिविरहात् । यत्तु, 'प्रसिद्धकारणानपेक्षतया कार्योत्पत्तिर्वर्ण्यमाना प्रसिद्धं कारणान्तरमादाय स्वाभाविकत्वमादाय वा पर्यवस्यति सा विभावनेति लक्षणम् । अतिशयोक्तिविशेषे कार्योत्पत्तेः पौर्वापर्यविपर्यासेनाशुभाविताममादाय पर्यवसानेन हेत्वन्तरपूर्वकत्वं स्वाभाविकत्वं वा आदाय पर्यवसानाभावान्नातिव्याप्तेः । एवमसङ्गतिविषमयोरपी'ति । तच्चिन्त्यम् । उक्तातिशयोक्तौ दोषनिवारणेऽप्यसङ्गतौ मूर्छारूपकार्यवर्णनस्य विरहरूपहेत्वन्तरमादाय विषमे यशोगतस्वाभाविकत्वमादाय च पर्यवसानेनोक्तातिव्याप्तितादवस्थ्यात् । यच्च पूर्वरूपे अतिव्याप्तिदोषस्य विभावनाविशेषत्वस्वीकारेण इष्टापत्त्या परिहरणं तत्पूर्वरूपप्रस्तावे निरासिष्यत इत्यलं बहुना । उदाहरणान्तरमाह—**अपीतेति** । अत्र क्षीबतादिप्रसिद्धहेत्वभावः स्पष्टमेव प्रतिपादित इत्याह—**अत्रेति** । हेत्वन्तरमादाय पर्यवसानमाह—**विभाव्यमानेति** ।

यथा वा—

'वरतनुकबरीविधायिना सुरभिनखेन नरेन्द्रपाणिना ।
अपचितकुसुमापि वल्लरी समजनि वृन्तनिलीनषट्पदा ॥'

अत्र वल्लर्यां पुष्पाभावेऽपि भृङ्गालिङ्गनं निबद्धम् । तत्र वरतनुकबरीसंक्रान्तसौरभनरपतिनखसंसर्गरूपं हेत्वन्तरं विशेषणमुखेन दर्शितमिति विरोधपरिहारः ।

**हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ।**
**अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥**

अत्र जगज्जये साध्ये हेतूनामस्त्राणामसमग्रत्वं तीक्ष्णत्वादिगुणवैकल्यम् ।
यथा वा—

'उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।
उदस्रयन्ति पान्थानामस्पृशन्तो विलोचने ॥'

अत्र बाष्पोद्गमनहेतूनामसमग्रत्वं स्पर्शनक्रियावैकल्यम् । इमां विशेषोक्तिरिति दण्डी व्याजहार—प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपः द्वितीयोदाहरणे चम्पकरेणूनामुद्दीपकातिशयरूपश्च विशेषः ख्याप्यत इति । अस्माभिस्तु, तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभावरूपमिति विभावना प्रदर्शिता ।

---

**वरतनुकबरीति** । अत्र भृङ्गसम्बन्धहेतुभूतपुष्पाभावेऽपि भृङ्गालिङ्गननिबन्धनाद्विभावनेत्याह—**अत्र वल्लर्यामिति** । पूर्वस्मादत्रोदाहरणे विशेषं दर्शयति—**तत्रेति** । पूर्वोदाहरणे शरत्समयहेत्वन्तरमनुपात्तं, इह तदुपात्तमिति विशेषः । एवं च हेत्वन्तरोपादानानुपादानाभ्यां कार्यगतस्वाभाविकत्वेन च कार्योत्पत्तिवर्णनस्य त्रैविध्यदर्शनात्त्रिविधो विभावनालङ्कारः सम्पन्न इति भावः । द्वितीयां विभावनां लक्षयति—**हेतूनामिति** । उदाहरणे लक्षणं योजयति—**अत्रेति** । तीक्ष्णत्वादिगुणाभावेऽपि जगज्जयरूकार्योत्पत्तेर्मदनगतमाहात्म्यातिशयमादाय पर्यवसानमिति भावः । अत्रोदाहरणद्वयेऽपि मन्मथमहिमातिशयस्य चम्पकरेणुगतोद्दीपकातिशयस्य च ख्यापनाद्विशेषोक्तिरत्रालङ्कार इति । दण्डिमतं दर्शयति—**इमामिति** । स्वयं विभावनान्तर्भावे हेतुमाह—**अस्माभिस्त्विति** ।

---

१. अस्यालङ्कारस्याद्यो भेद एक एव चन्द्रालोकोक्तः । इतरे भेदाः पञ्चापि मूलकृदुक्ताः

**कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके ।**
**नरेन्द्रानेव ते राजन्! दशत्यसिभुजङ्गमः ॥**

अत्र नरेन्द्रा विषवैद्यास्सर्पदंशप्रतिबन्धकमन्त्रौषधिशालिनः श्लेषेण गृहीता इति सत्येव प्रतिबन्धके कार्योत्पत्तिः।

यथा वा—

'चित्रं तपति राजेन्द्र! प्रतापतपनस्तव ।
अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ॥'

**अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ।**
**शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥**

अत्र शङ्खत्वेन कमनीयः कामिनीकण्ठस्तन्त्रीनिनादत्वेन तद्गीतं चाध्यवसीयत इत्यकारणात्कार्यजन्म ।

यथा वा—

'तिलपुष्पात्समायाति वायुश्चन्दनसौरभः ।
इन्दीवरयुगाच्चित्रं निस्सरन्ति शिलीमुखाः॥'

**विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना ।**
**शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम् ॥**

अत्र तापनिवर्तकतया तापविरुद्धैरिन्दुकिरणैस्तापजनिरुक्ता ।

---

तृतीयां विभावनां लक्षयति—**कार्योत्पत्तिरिति** । ननु, इदमीयोदाहरणे कार्योत्पत्तिप्रतिबन्धकानुक्तेर्लक्षणाव्याप्तिरित्याशङ्क्य लक्षणमत्रोपपादयति—**अत्रेति** । तथा च नरेन्द्रपदं दंशनप्रतिबन्धकसद्भावाभिप्रायगर्भमिति श्लेषपरिकरांकुराभ्यामेकवाचकानुप्रविष्टाभ्यामुक्तलक्षणं त्वत्र सुस्थमिति भावः । नृपतिरूपार्थान्तरप्रतिभानेन चात्र विरोधपरिहारः । अत्र द्वितीयोदाहरणं स्पष्टम् । पूर्वोदाहरणे स्वविषयपरित्यागोऽशाब्दः । अत्रानातपत्रमिति स शाब्द इति भेदः । चतुर्थीं विभावनां लक्षयति—**अकारणादिति** । कारणभिन्नादित्यर्थः । उदाहरणे वीणानिनादकारणभिन्नाच्छङ्खाद्वीणानिनादोत्पत्तिवर्णनाल्लक्षणानुगतिं स्पष्टत्वादनभिधाय, विच्छित्तिनिदानमाह—**अत्रेति** । तथा चातिशयोक्त्यनुप्राणितत्वादस्यां वैचित्र्यमिति भावः । पञ्चमीं विभावनामाह—**विरुद्धादिति** । कार्यासहवृत्तेरित्यर्थः । उदाहरणे लक्षणं योजयति—**अत्रेति** । (तीक्ष्णत्वादिगुणाभावेऽपि [1]) तापविरोधिता चेन्दुकिरणानामेवेति वेद्यम् ।

१. इदं ग.पुस्तक एव दृश्यते ।

यथा वा—

'उदिते कुमारसूर्ये कुवलयमुल्लसति भाति नक्षत्रम् ।
मुकुलीभवन्ति चित्रं परराजकुमारपाणिपद्मानि ॥'

यथा वा—

'अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् ।
श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥'

पूर्वोदाहरणयोः कारणस्य कार्यविरोधित्वं स्वाभाविकम् । इह तु श्रुतिप्रणयित्वरूपागन्तुकगुणप्रयुक्तमिति भेदः ।

**कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना ।**
**यशःपयोराशिरभूत्करकल्पतरोस्तव ॥**

यथा वा—

'जाता लता हि शैले जातु लतायां न जायते शैलः ।
सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विभावनाप्रकरणम् ॥३३॥

अथ विशेषोक्तिः—

**[1]कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे ।**

मेकस्मिन्काले [2]असहवृत्तेरिति भावः । उदाहरणान्तरमाह—**उदित इति** । अत्र सूर्योदयस्य कुवलयोल्लासादीनां चैककालिकत्वाभावाद्विरुद्धात्कार्यसम्पत्तिः स्पष्टेति भावः । उदाहरणान्तरमाह—**अविवेकीति** । अत्र श्रुतिप्रणयित्वजनमारणरूपपातकाचरणयोरेकत्रासहवृत्त्या दैशिको विरोध इत्यभिप्रेत्य पूर्वोदाहरणाभ्यां विशेषान्तरमाह—**पूर्वोदाहरणयोरिति** । विरोधपरिहारश्चोदाहरणेषु शीतांशुकिरणानां विरहजसन्तापोद्दीपकत्वेन कुवलयादिपदश्लिष्टार्थान्तरप्रतिभासेन चेति । षष्ठीं विभावनां लक्षयति—**कार्यादिति** । पञ्चम्यर्थो हेतुत्वं न त्वानन्तर्यादिः । अन्यथा कार्यकारणपौर्वापर्यविपर्यासरूपातिशयोक्तावतिप्रसङ्गात् । उदाहरणे कल्पतरोः कार्यात्पयोधेर्जनिवर्णनादेषा विभावना स्पष्टा । यशःकरयोः पयोधित्वकल्पतरुत्वरूपणेन कार्यकारणविपर्यासाद्विरोधपरिहार इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विभावनाप्रकरणम् ॥ ३३ ॥

विशेषोक्तिं लक्षयति—**कार्याजनिरिति** । सामग्रीकालिककार्यानुत्पत्तिर्विशेषोक्ति-

---

१. चन्द्रालोके तु '**विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे । नमन्तमपि धीमन्तं न लंघयति कश्चन ॥**' इति पाठः । २. 'असहवर्तनमिति ।' इति ख. पाठः ।

यथा वा—

**हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ॥**

'अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विशेषोक्तिप्रकरणम् ॥३४॥

---

रित्यर्थः । ननु, 'मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ।' इत्यवज्ञालङ्कारे पद्ममीलनरूपदोषेऽपि अमृतद्युतौ दोषानुत्पत्तेः कथनादतिव्याप्तिः । न च कारणाधिकरणदेशकारणसत्त्वे कार्यानुत्पत्तिरिति विवक्षणीयम् । उक्तावज्ञायां च मीलनादेः कारणस्य पद्मादिगतत्वेन तत्कार्यहान्याद्यनुत्पत्तेश्च चन्द्रादिगतत्वेन भिन्नदेशत्वादिति वाच्यम् । 'निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते । श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥' इति विशेषोक्तौ द्युरत्नादिगतोदयादेः कारणस्याङ्गनागततत्कार्यालिङ्गनोपरत्यनुत्पत्तेश्च भिन्नदेशतया अतिव्याप्तिप्रसङ्गादिति चेन्न । उक्तावज्ञायां पद्मनिमीलनस्यान्यत्र दोषोत्पत्तिकारणत्वेनाप्रसिद्धतया अमृतद्युतिहानिहेतुपौष्कल्यस्य तत्राभावात् । यत्तु, उक्तावज्ञायां विशेषोक्तिविशेषतैवेति न तज्ज्ञापनं दोष इति, तत्र वक्ष्यते । 'निद्रानिवृत्ता'वित्यत्रापि सूर्योदयादेरपि कारणस्याभिमुख्यादिसम्बन्धेनाङ्गनादिनिष्ठतया सामानाधिकरण्यसम्भवान्नाव्याप्तिर्लक्षणे सामग्रीकार्यानुत्पत्त्योर्दैशिकसामानाधिकरण्यविवक्षायामपि । वस्तुतस्तु, प्रयोजनविरहान्न तद्विवक्षणीयम् । अत एव तत्र कालिकसामानाधिकरण्यमेव तयोर्निवेशितमित्यलमधिकेन । 'हृदी'त्युदाहरणे स्नेहक्षयकारणस्मरदीपसद्भावेऽपि स्नेहक्षयानुत्पत्तेर्वर्णनाद्विशेषोक्तिः स्फुटेति भावः । इयं च निमित्तानुपादानोपादानाभ्यां पूर्ववदेव द्विविधा । उक्तोदाहरणे स्नेहक्षयानुत्पत्तिनिमित्तस्य गाढानुरागादेरनुपादानादाद्या । द्वितीयां दर्शयति—**अनुरागवतीति**। अत्र सन्ध्यादिवसयोस्समागमकारणसद्भावेऽपि समागमरूपकार्यानुत्पत्तेस्तन्निमित्तस्य दैवगतिवैचित्र्यस्य चोपादानादुक्तनिमित्ता द्वितीयेति भावः । अयं चात्र विशेषः । सन्ध्यादिवसयोः प्रस्तुतत्वे तद्वृत्तान्तप्रतिपादनेनानुरागशब्दश्लेषमूलकविशेषणसाम्येनाप्रस्तुतयोरन्योन्यानुरक्तयोर्गुरुजनोपरोधादिप्रतिबन्धादिना समागमरहितयोः कामिनोर्वृत्तान्तः प्रतीयत इति समासोक्तिः । तस्याश्च विशेषोक्तेश्चाङ्गाङ्गिभावसङ्करः । यत्तु, प्राचीनैः कैश्चित्, 'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः । हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥' इत्यत्र तनुहरणसद्भावेऽपि बलहरणरूपकार्यानुत्पत्तौ निमित्तभूतस्य तदीयप्रभावातिशयस्याचिन्त्यतया अचिन्त्यनिमित्ता विशेषोक्तिरिति तृतीयोऽपि भेदः प्रतिपादितः । तदस्याप्युक्तनिमित्तायामन्तर्भावसम्भवेनायुक्तमिति सर्वस्वकारादयः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विशेषोक्तिप्रकरणम् ॥ ३४ ॥

---

१. 'अहो रागवती' इति पाठान्तरम्। २. 'अत्रोच्यते' इति ख. पाठः ।

अथ असम्भवः—

**असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम् ।**
**को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥**

यथा वा—

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे असम्भवप्रकरणम् ॥३५॥

अथ असङ्गतिः—

**'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिः ।**
**विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥'**

ययोः कार्यहेत्वोर्भिन्नदेशत्वं विरुद्धं तयोस्तन्निबध्यमानमसङ्गत्यलङ्कारः । यथात्र विषपानमूर्छयोः भिन्नदेशत्वम् ।

यथा वा—

'अहो खलभुजङ्गस्य विचित्रोऽयं वधक्रमः ।

---

असम्भवं लक्षयति—**असम्भव इति** । कस्य चित्कार्यस्य दुष्करतया अघटमानस्य निष्पत्तेः दुष्करत्वख्यापनं यत्तदसम्भव इत्यर्थः । उत्तरार्धे गोपशिशोः शैलोत्पाटनं दुष्करमिति अघटमानस्य तस्य 'को वेदे'त्यनेन दुष्करत्वमाविष्कृतमिति लक्षणानुगमः स्पष्टः । उदाहरणान्तरमाह—**अयमिति** । अत्रापि जलनिधिपानस्यातिदुष्करतया असम्भाव्यत्वम् । 'क एवं जानीत' इत्यनेनाविष्कृतमितीदमप्यसम्भवोदाहरणमिति भावः । मतान्तरे तूभयत्राप्यत्र विरोधालङ्कारः । गोपशिशौ मनुष्यजातीये मुनौ च शैलोत्पाटनजलनिधिपानयोर्विरुद्धत्वात् । अत एवायं श्लोकः सर्वस्वकृता क्रियाद्रव्यविरोधोदाहरणतया निगदितः इति ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां असम्भवप्रकरणम् ॥ ३५ ॥

असङ्गत्यलङ्कारं लक्षयति—**विरुद्धमिति** । कार्यकारणयोः सामानाधिकरण्यनियमात्तथाभूतयोर्भिन्नदेशत्ववर्णने असङ्गत्यलङ्कारः । **विरुद्धमिति** । स्वरूपकीर्तनमित्यर्थः । उत्तरार्धे विषपानमूर्छनयोः सामानाधिकरण्येन हेतुहेतुमद्भावशालिनोस्तद्विपरीतं भिन्नाधिकरणत्वं निबद्धमित्यसङ्गतिरित्याह—**यथेति** । उदाहरणान्तरमाह—**अहो इ-**

१. चन्द्रालोके तु 'आख्याते भिन्नदेशत्वे कार्यहेत्वोरसंगतिः । त्वद्भक्तानां

अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥'

क्वचिदसङ्गतिसमाधाननिबन्धनेन चारुतातिशयः ।

यथा—

'अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम् ।
श्वासान् स वर्षत्यधिकं पुनर्यत् ध्यानात्तव त्वन्मयतामवाप्य ॥'

'विरुद्ध'मिति विशेषणाद्यत्र कार्यहेत्वोर्भिन्नदेशत्वं न विरुद्धं तत्र नासङ्गतिः । यथा—

'भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् ।
तावत्कटाक्षविशिखैः भिद्यते हृदयं मम ॥'

**[1]अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ।**
**अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥**
**अपारिजातां वसुधां चिकीर्षन् द्यां तथाकृथाः ।**
**गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराकरोः ॥**

---

**ति** । अत्रापि भुजङ्गमदंशप्राणवियोगयोर्वैयधिकरण्यं निबद्धमित्यसङ्गतिरित्यर्थः । **क्वचिदिति** । तथा चात्र आमुखे प्रतीताप्यसङ्गतिः समाधानप्रतिपादनेनाभासीभवतीति विरोधवदसङ्गत्याभासोऽपि विच्छित्तिविशेषकारितया अलङ्कार इति भावः । लक्षणे विरुद्धमिति । विशेषणाद्यत्र कार्यकारणयोर्भिन्नदेशयोरेव तद्भावस्तत्र नासङ्गतिरित्याह—**विरुद्धमितीति** । अन्ये तु, ययोर्यादृशः सामानाधिकरण्येन वैयधिकरण्येन वा कार्यकारणभावः प्रसिद्धस्तयोः सामानाधिकरण्यवैयधिकरण्यविपर्यासः साऽसङ्गतिरिति लक्षणम् । दर्शितोदाहरणेषु सामानाधिकरण्येनैव विषपानमूर्छनादीनां हेतुहेतुमद्भावस्य प्रसिद्ध्या सामानाधिकरण्यविपर्यासनिबन्धनादाद्या । द्वितीया यथा । 'न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः । ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥' अत्र सुतजन्महर्षनिगलितपुरुषान्तरबन्धनिवृत्त्योर्भिन्नदेशयोरेव कार्यकारणभावप्रसिद्ध्या वैयधिकरण्यविपर्यासः सामानाधिकरण्यं निबद्धमित्यसङ्गतिरित्याहुः । अथान्यदप्यङ्गतिद्वयमाह—**अन्यत्रेति** । एकत्राधिकरणे कर्तुमिष्टस्य तद्भिन्नाधिकरणे कृतिः ' एकं कर्तुं प्रवृत्तस्य तद्विरुद्धार्थकरणं चेति असङ्गतिद्वयमित्यर्थः । क्रमेणोदाहरणयोर्लक्षणं योजयति—

---

**नमत्यंगं भंगमेति भवक्रमः** ॥ इति पाठः । १. इदमसङ्गतिद्वयं चन्द्रालोके न दृश्यते ।

अत्र कृष्णं प्रति शक्रस्य सोपालम्भवचने भुवि चिकीर्षिततया तत्र करणीयमपारिजातत्वं दिवि कृतमित्येका असङ्गतिः । पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधापि श्लेषोत्थापिता ।

यथा वा—

'त्वत्खड्गखण्डितसपत्नविलासिनीनां भूषा भवन्त्यभिनवा भुवनैकवीर ? ।
नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली चोलेन्द्रसिंह ? तिलकं करपल्लवेषु ॥'
मोहं जगत्त्रयभुवामपनेतुमेतदादाय रूपमखिलेश्वर ! देहभाजाम् ।
निस्सीमकान्तिरसनीरधिनाऽमुनैव मोहं प्रवर्धयसि मुग्धविलासिनीनाम् ॥'

अत्राद्योदाहरणे कङ्कणादीनामन्यत्र कर्तव्यत्वं प्रसिद्धमिति नोपन्यस्तम् । भवतिना भावनारूपान्यत्र कृतिराक्षिप्यत इति लक्षणानुगतिः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे असङ्गतिप्रकरणम् ॥ ३६ ॥

अथ विषमम्—

**विषमं वर्ण्यते यत्र घटनाननुरूपयोः ।**
**क्वेयं शिरीषमृद्वङ्गी क्व तावान्मदनज्वरः ॥**

---

**अत्र कृष्णं प्रतीति** । **श्लेषेति** । अपारिजातशब्दे अपगतारिवर्गस्य पारिजातशून्यत्वस्य चार्थद्वयस्य क्रोडीकारात् । गोत्रशब्दे भूमिपर्वतरूपार्थद्वयस्य क्रोडीकारादित्यर्थः । उदाहरणान्तरमाह—**त्वत्खड्गेति** । अत्र बाह्वादौ कर्तव्यस्य कङ्कणादेः ततोऽन्यत्र नेत्रादौ कृतिः आद्ये, मोहापनयनाय प्रवृत्तस्य तद्विरुद्धमोहोत्पादननिबन्धनं द्वितीये प्रतिपाद्यत इत्यर्थः । नन्वत्राद्योदाहरणे भवनमात्रोक्त्या तद्भावनारूपस्य कारणस्यानिबन्धनात् कथमसङ्गतिरित्यत आह—**भवतिनेति** । प्रयोज्यव्यापारेण कृतिरूपप्रयोजकव्यापाराक्षेपान्नोक्तदोष इति भावः ॥

इति कुवलानन्दटीकायां रसिकरञ्जन्यां असङ्गतिप्रकरणम् ॥ ३६ ॥

विषमालंकृतिं लक्षयति—**विषममिति** । अननुरूपयोः अनुचितघटनयोर्यद्घटनवर्णनमेतदेकं विषममित्यर्थः । उदाहरणे अधिकरणशक्तिप्रधानाभ्यामदन्ताभ्यामव्ययाभ्यामनुचितघटनत्वाविष्करणात्तथाविधयोस्तन्वीमदनज्वरयोर्घटनं निबद्धमिति लक्ष्ये लक्षणसङ्गति-

---

१. चन्द्रालोके तु, '**विषमं यद्यनौचित्यादनेकान्वयकल्पनम्** । **क्वातितीव्रविषास्सर्पाः क्वासौ चन्दनभूरुहः** ॥' इति पाठः ।

अत्र अतिमृदुत्वेनातिदुस्सहत्वेन चाननुरूपयोरंगनामदनज्वरयोर्घटना। यथा वा—

'अभिलषसि यदीन्दो! वक्त्रलक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम् ।
सुविमलमथ बिम्बं पारिजातप्रसूनैः
सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व ॥'

पूर्वत्र वस्तुसती घटना। अत्र चन्द्रवदनलक्ष्म्योस्तर्किता घटनेति भेदः।

**विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ।**
**कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥**

अत्र कारणगुणप्रक्रमविरुद्धा श्यामाद्धवलोत्पत्तिः। कार्यकारणयोर्निवर्त्यनिवर्तकत्वे पञ्चमी विभावना, विलक्षणगुणशालित्वे त्वयं विषम इति भेदः ।

**अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ।**
**भक्ष्याशयाऽहिमंजूषां दृष्ट्वाऽऽखुस्तेन भक्षितः ॥**

इष्टार्थमुद्दिश्य किञ्चित्कर्मारब्धवतो न केवलमिष्टस्यानवाप्तिः, किं तु ततोऽनिष्टस्यापि प्रतिलम्भश्चेत्तदपि विषमम्। यथा भक्ष्यप्रेप्सया सर्पपेटिकां दृष्ट्वा प्रविष्टस्य मूषकस्य न केवलं भक्ष्यालाभः । किं तु स्वरूपहानिरपीति ।

---

रित्याह—**अत्रेति**। उदहरणान्तरमाह—**अभिलषसीति** । पूर्वोदाहरणाद्भेदमाह—**पूर्वत्रेति**। न हि चन्द्रवदनलक्ष्म्योः वास्तवसम्बन्धाभावेऽपि कविकल्पितं तत्सम्बन्धवर्णनमिति भावः। द्वितीयं विषमं लक्षयति—**विरूपादिति** । कारणरूपविजातीयरूपशालिकार्योत्पत्तिर्द्वितीयं विषममित्यर्थः । उत्तरार्धे 'कारणगुणा हि कार्यगुणानारभन्त इति न्यायविरुद्धविरूपकार्योत्पत्तिर्वर्णितेत्याह—**अत्रेति** । कारणरूपविजातीयेत्यनुक्त्वा कारणविलक्षणेत्येव लक्षणमस्त्वित्याशङ्क्याह—**कार्यकारणयोरिति**। तथोक्तौ 'सुधांशुकिरणा' इत्युदाहृतपञ्चमविभावनायां कार्यकारणयोर्निवर्त्यनिवर्तकभावेन कारणविलक्षणकार्योत्पत्तिवर्णनादतिव्याप्तिः। अत उक्तविवक्षानुसरणमिति भावः। **अनिष्टस्येति**। इष्टप्राप्त्यनुकूलव्यापारेण इष्टानवाप्त्या अनिष्टावाप्तिस्तृतीयं विषमामित्यर्थः । उदाहरणे लक्षणं योजयति—**यथा भक्ष्येति**। उदाहरणे 'दृष्ट्वा प्रविष्ट' इति पदमध्याहार्यम्। अन्यथा समानकर्तृकतावाचिनः क्त्वाप्रत्ययस्य मञ्जूषादंशनभक्षणयोर्भिन्नकर्तृकत्वादनुपपत्तेरिति ध्येयम्।

---

१. एतदादयः विषमभेदाश्चन्द्रालोके नोक्ताः, किं तु मूलकृदुक्ता इति वेद्यम् ।

यथा वा—

'गोपाल इति कृष्ण! त्वं प्रचुरक्षीरवाञ्छया ।
श्रितो मातृस्तनक्षीरमप्यलभ्यं त्वया कृतम् ॥'

इदमर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्तावनिष्टप्रतिलम्भे चोदाहरणम् ।

अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात्तदुभयं यथा—

'दिवि श्रितवतश्चन्द्रं सैंहिकेयभयाद्भुवि ।
शशस्य पश्य तन्वङ्गि! साश्रयस्य ततो भयम् ॥'

अत्र न केवलं शशस्य स्वानर्थपरिहारानवाप्तिः । किं तु साश्रयस्याप्यनर्थावाप्तिरिति दर्शितम् ।

परानिष्टप्रापणरूपेष्टार्थसमुद्यमात्तदुभयं यथा—

'दिधक्षन्मारुतेर्वालं तमादीप्य दशाननः ।
आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत् ॥'

'पुरस्यैवे'त्येवकारेण परानिष्टप्रापणाभावो दर्शितः । 'अनिष्टस्याप्यवाप्ति

---

उदाहरणान्तरमाह—**गोपाल इतीति** । न चात्र इष्टक्षीरेच्छया प्रवृत्तस्येष्टानवाप्तिमात्रसत्त्वेऽपि नानिष्टावाप्तिरुपनिबद्धेति नोक्तं विषमं युज्यत इति वाच्यम् । 'इष्टार्थसमुद्यमादिष्टविरोधिनोऽवाप्तिर्विषम'मिति विवक्षितस्य लक्षणस्य इष्टक्षीरप्राप्तिविरोधिनस्तदभावस्य वर्णनेन सद्भावात् । इष्टविरोधित्वं च इष्टानवाप्त्यनर्थप्रतिलम्भयोस्साधारणम् । पूर्वोदाहरणे इष्टविरोधिन आत्महानिरूपानिष्टस्य प्राप्तिसत्त्वादुभयानुगतिः स्पष्टेति भाव । इष्टस्य सुखदुःखाभावान्यतरसाधनरूपतया द्वैविध्यादुक्तरूपं विषममपि द्विविधमित्यभिप्रेत्याह—**इदमिति** । सुखसाधनरूपेष्टानवाप्तावुदाहरणम् । दुःखाभावसाधनरूपेष्टार्थानुकूलव्यापारादनिष्टपरिहाररूपेष्टविपरीतावाप्तावुदाहरणं वक्ष्यमाणमित्यर्थः । इदमेवोदाहरणेन दर्शयति—**दिवीति** । शशस्य सिंहकृतस्वानर्थपरिहाररूपेष्टावाप्तये भूमिं परित्यज्य दिवि चन्द्रमाश्रितस्य सैंहिकेयाद्भयवर्णनेनाश्रयसहितस्यानर्थपरिहाररूपेष्टानवाप्त्यनर्थावाप्त्योर्निबन्धनादुक्तरूपं विशममत्रेत्यर्थः । सर्वमिदं स्वेष्टविपरीतावाप्तावुदाहरणम् । परानिष्टप्रापणस्यापीष्टतया तदनुकूलयत्नतस्तद्विपरीतप्रापणमित्यर्थः । **दिधक्षन्निति** । अत्र हनूमतो वालदिधक्षया हुताशनमायोजयतो रावणस्य हनूमदनिष्टप्रापणरूपेष्टप्राप्त्यनुकूलयत्नतस्तदनवाप्त्यनिष्टप्राप्त्योर्निबन्धनादुक्तं विषममित्यर्थः । ननु, परानिष्टप्रापणस्यानुपादानात्कथमुक्तरूपविषममित्यत आह—**पुरस्यैवेति** । अत्रैवकारेणेतरव्यवच्छेदार्थकेन परानिष्टप्रापणाभावः स्पष्टीकृत इत्यर्थः । अथान्यदपि विषमद्वयमनिष्टस्याप्यवाप्तिश्चेति कारिकायामनुक्तसमुच्चयार्थकचशब्दसंगृहीताया इष्टानवाप्तेश्च प्रत्येकं विषमपदान्वयेन केवलानिष्टप्रतिलम्भः केवलेष्टानवाप्तिश्च विषममिति वाक्यार्थप्रतीतेः स्पष्टमित्याह—**अनिष्टस्यापीति** । तत्र केवला-

श्रे'ति श्लोके अनिष्टावाप्तेरपि शब्दसंगृहीताया इष्टानवाप्तेश्च प्रत्येकमपि विषमपदेनान्वयः । ततश्च केवलानिष्टप्रतिलम्भः केवलेष्टानवाप्तिश्चेत्यन्यदपि विषमद्वयं लक्षितं भवति ।

तत्र केवलानिष्टप्रतिलम्भो यथा—

'पद्मातपत्ररसिके! सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृतज्ञमज्ञे
स्थित्वा हरिष्यति तवैव मुखस्य लक्ष्मीम् ॥'

अत्र पद्मातपत्रलिप्सया पद्मबीजावापं कृतवत्यास्तल्लाभोऽस्त्येव । किंतु मुखशोभाहरणरूपोत्कटानिष्टप्रतिलम्भः ।

केवलेष्टानवाप्तिर्यथा—

'खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नवितथबाहुषु गोपेषु हसन् हरिर्जयति ॥'

अत्र यद्यपि शैलस्योपरिपतनरूपानिष्टावाप्तिरपि प्रसक्ता । तथापि भगवत्कराम्बुजसंस्पर्शमहिम्ना सा न जातेति शैलधारणरूपेष्टानवाप्तिमात्रम् ।

यथा वा—

'लोके कलङ्कमपहातुमयं मृगाङ्को जातो मुखं तव पुनस्तिलकच्छलेन ।
तत्रापि कल्पयसि तन्वि! कलङ्करेखां नार्यस्समाश्रितजनं हि कलङ्कयन्ति ॥'

---

निष्टप्रतिलम्भमुदाहरति—**पद्मातपत्रेति** । अत्र लक्षणानुगमं दर्शयति—**अत्रेति** । अनिष्टप्रतिलम्भस्य इष्टानवाप्तिवैशिष्ट्याभावमुपपादयन् केवलानिष्टप्रतिलम्भं दर्शयति—**अत्र पद्मेति** । द्वितीयमुदाहरति—**खिन्नोऽसीति** । अत्र गोवर्धनधारणोद्यमेन गोपानामिष्टस्य शैलधारणस्यानवाप्तेर्निबन्धनात्केवलेष्टानवाप्तिरित्यर्थः । नन्वत्र 'भरभुग्नवितथबाहु'ष्विति विशेषणबलात् शैलपतनरूपानिष्टावाप्तेरपि सूचनात् कथं केवलेष्टानवाप्तिरित्यत आह—**अत्र यद्यपीति । भगवदिति** । तथा चानिष्टावाप्तिप्रसक्तावपि भगवत्कराम्बुजस्पर्शमहिम्ना 'सा न जाते' ति केवलेष्टानवाप्तिरस्त्येवेति उदाहरणं युक्तमेव । अनर्थपरिहाररूपेष्टानवाप्तिं केवलामुदाहरति—**लोक इति** । अत्र चन्द्रमसः कलङ्कापनोदाय मुखात्मना भवनानुकूलसमुद्यमात्कलङ्करूपानर्थपरिहाररूपेष्टानवाप्तिः मुखभावेऽपि तिलकापह्नवेन कलङ्ककल्पनया अर्थान्तरन्यासससमर्थितया दर्शितेत्यभिप्रेत्याह—

अत्रानिष्टपरिहाररूपेष्टानवाप्तिः ।

यथा वा—

'शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं दहनः करोति ॥'

अत्र परानिष्टप्रापणरूपेष्टानवाप्तिः । स्वतोऽनिष्टस्यापि मुनिशापस्य महापुरुषार्थपुत्रलाभावश्यम्भावगर्भतया दशरथेनेष्टत्वेन समर्थितत्वात् । यत्र केन चित्स्वेष्टसिद्ध्यर्थं नियुक्तेनान्येन नियोक्तुरिष्टमुपेक्ष्य स्वस्यैवेष्टं साध्यते तत्रापीष्टानवाप्तिरूपमेव विषमम् ।

यथा—

'यं प्रति प्रेषिता दूती तस्मिन्नेव लयं गता ।
सख्यः! पश्यत मौढ्यं मे विपाकं वा विधेरमुम् ॥'

'तस्मिन्नेव लयं गते'ति नायके दूत्याः स्वाच्छन्द्यं दर्शितम् ।

यथा वा—

'नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम्॥'

एतानि सर्वथैवेष्टानवाप्तेरुदाहरणानि । कदाचिदिष्टावाप्तिपूर्वकतदनवाप्तिर्यथा—मदीये वरदराजस्तवे

'भानुर्निशासु भवदंघ्रिमयूखशोभालोभात्प्रताप्यकिरणोत्करमाप्रभातम् ।
तत्रोद्धृते हुतवहात्क्षणलुप्तरागे तापं भजत्यनुदिनं स हि मन्दतातः ॥'

---

**अत्रेति** । परानिष्टप्रापणरूपेष्टानवाप्तिं केवलां दर्शयति—**शापोऽपीति** । नन्वत्र पुत्रशोककृतमरणरूपस्य परानिष्टस्यावाप्तेः कथं केवलतदनवाप्तिरित्यत आह—**स्वत इति** । तथा चानिष्टप्रापणानुकूलमुनिशापस्य भगवदवतारगर्भतया दशरथेनाङ्गीकृता ग्लानिर्न दोषायेति लौकिकन्यायेनानुज्ञालङ्कारविषया इष्टत्वेनाभ्यनुज्ञातत्वात् परानिष्टप्रापणरूपेष्टानवाप्तिरविकलेति भावः । एवं यत्र स्वेहितसिद्ध्यर्थं विनियुक्तोऽन्यस्तादिष्टमुपेक्ष्य स्वेष्टमेव साधयन्निबद्धस्तत्रापीष्टार्थसमुद्यमेन स्वसमीहितालाभस्य तुल्यत्वादुक्तमेव विषममित्यभिप्रेत्याह—**यत्र केनचिदिति** । यत्र किञ्चिदिष्टावाप्तिपूर्वकतदनवाप्तिस्तत्रापीदमेव विषममित्याह—**क्वचिदिति** । अत्र उदाहरणद्वयं स्वकृतवरदराजस्तवगतं दर्शयति—**भानुरिति** ।

यथा वा—

'त्वद्वक्त्रसाम्यमयमंबुजकोशमुद्राभंगात्ततत्सुषममित्रकरोपक्लृप्त्या ।
लब्ध्वापि पर्वणि विधुः क्रमहीयमानश्शंसत्यनीत्युपचितां श्रियमाशुनाशां॥'

अत्र ह्याद्यश्लोके सूर्यकिरणानां रात्रिष्वग्निप्रवेशनमागमासिद्धम् । सूर्यस्य निजकिरणेषु भगवच्चरणकिरणसदृशारुणिमप्रेप्सया तत्कृतं तेषामग्नौ प्रतापनं परिकल्प्य तेषामुदयकालदृश्यमरुणिमानं च तप्तोद्धृतनाराचानामिवाग्निसन्तापनप्रयुक्तारुणिमानुवृत्तिं परिकल्प्य सूर्यस्य महतापि प्रयत्नेन तात्कालिकेष्टावाप्तिरेव जायते, न सार्वकालिकेष्टावाप्तिरिति दर्शितम् । द्वितीयश्लोके चन्द्रस्य भगवन्मुखलक्ष्मीं लिप्समानस्य सुहृत्त्वेन मित्रशब्दश्लेषवशात्सूर्यं परिकल्प्य तत्किरणस्य कमलमुकुलविकासनं चन्द्रानुप्रवेशनं च सुहृत्पाणेर्भगवन्मुखलक्ष्मीनिधानकोशगृहमुद्रामोचनपूर्वकं ततो गृहीतभगवन्मुखलक्ष्मीकस्य तया भगवन्मुखलक्ष्म्या चन्द्रप्रसाधनार्थं चन्द्रस्पर्शरूपं च परिकल्प्यैतावतापि प्रयत्नेन पौर्णमास्यामेव भगवन्मुखसाम्यरूपेष्टावाप्ति-

---

प्रथमश्लोकस्य तात्पर्यमाह—**अत्र हीति** । भानुर्भगवच्चरणमयूखानां या शोभा सा स्वकिरणेषु स्यादितीहमानः आप्रभातं स्वयमग्नौ प्रविश्य स्वकिरणसमूहं हुतवहे तप्तं कृत्वा तस्मादुद्धृते तस्मिन्क्षणेन लुप्ते तप्तोद्धृतनाराचवत्तापं गच्छति । यावद्रागानुवृत्ति भानोरौष्ण्यमनभिव्यक्तं पश्चादभिव्यक्तं भवति स एव तापो भगवदंघ्रिमयूखशोभाप्राप्तिलक्षणनिजेष्टस्य सार्वत्रिकाप्राप्तिकृतानुतापस्तमनुदिनं भजति । नन्वेकस्मिन्दिने स्वप्रयासानर्थक्यदर्शने कथमनुदिनमाप्रभातं प्रयासानुभव इत्यमित्यपेक्षायां 'स हि मन्दतात' इत्युक्तम् । सः यस्मादस्य शनैश्चरस्य मन्दबुद्धेः पिता । 'पितृगुणाः खलु पुत्रेषु संक्रामन्ती'ति प्रसिद्धिरिति । ततश्चात्र सूर्यस्य महत्यपि तथाविधे प्रयत्ने तात्कालिकेष्टावाप्तिरेव न सार्वकालिकीति प्रतिपादनादिदमपि विषममित्यर्थः । द्वितीयश्लोकस्याभिप्रायमाह—**द्वितीयश्लोक इति** । तत्र चन्द्रमसो भगवन्मुखसाम्यं प्रेप्सतः सुहृद्भावेन सूर्यं परिकल्प्य तदीयकिरणजालस्य चन्द्रानुप्रवेशमागमसिद्धं सुहृत्करात् भगवन्मुखे लक्ष्मीनिधानकोशगृहभङ्गपूर्वकं ततो गृहीतभगवन्मुखलक्ष्म्या चन्द्रप्रसाधनार्थं चन्द्रस्पर्शरूपतया परिकल्प, इयतापि प्रयासेन पौर्णमास्यामेवेष्टप्राप्तिर्न सर्वदेति प्रतिपादनात्प्रागुक्तं विषममत्राप्यविकलमिति भावः । अत्राद्यश्लोके विषमालङ्कारस्तावत्स्पष्टः । तस्य च 'शोभालोभा'दिति निदर्शनया 'प्रताप्य उद्धृत' इत्यतिशयोक्तिभ्यां तापशब्दश्लेषेण च सङ्करः । तेन चाप्रस्तुतभानुवृत्तान्तवर्णनेन भगवच्चरणकिरणानां सर्वाधिकारुणिमोत्कर्षप्रतीतेरप्रस्तुतप्रशंसोत्थापकतया तयोस्सङ्करः । द्वितीयेऽपि विषमालङ्कारः

ज्ञायते न सार्वकालिकीति दर्शितम्। क्वचिदिष्टानवाप्तावपि तदवाप्तिभ्रमनिबन्धनाद्वैच्छित्तिविशेषः।

यथा—

'बल्लालक्षोणिपाल! त्वदहितनगरे सञ्चरन्ती किराती
रत्नान्यादाय कीर्णान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरिमुकुलीभूतनेत्रा धमन्ती
श्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशङ्कां करोति॥'

अत्र प्रभूताग्निसंपादनोद्योगात्तत्संपादनालाभेऽपि तल्लाभभ्रमो धूमभ्रमोपन्यासमुखेन दर्शितः॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विषमप्रकरणम्॥३७॥

अथ समम्—

**'समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः।**
**स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम्॥'**

प्रथमविषमप्रतिद्वन्द्वीदं समम्

यथा वा—

'कौमुदीव तुहिनांशुमण्डलं जाह्नवीव शशिखण्डमण्डनम्।
पश्य कीर्तिरनुरूपमाश्रिता त्वां विभाति नरसिंहभूपते!॥'

---

स्पष्ट एव। 'त्वद्वक्त्रसाम्यं लब्ध्वे'ति प्रसिद्धोपमानस्योपमेयत्वकल्पनात् प्रतीपालङ्कारः। कोशमुद्राशब्दयोः श्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिः कमलमुकुलविकासनस्य तत्रत्यभगवन्मुखलक्ष्मीग्रहणार्थसुहृत्करव्यापारत्वकल्यनया तद्विकासकमित्रकिरणसमूहगतचन्द्रानुप्रवेशस्य गृहीतया भगवन्मुखलक्ष्म्या चन्द्रप्रसाधनार्थसुहृत्करव्यापारत्वस्य च कल्पनया अतिशयोक्तिः। 'शंसती'त्यनेन स्वयं दृष्टान्तीभूतोऽन्यायोपार्जिता श्रीराशुनाशेति परान्प्रति बोधयतीति प्रतिपादनात्सम्भवद्वस्तुसम्बन्धनिबन्धनमित्येतेषां सङ्करः। वास्तवेष्टानवाप्तावपि तदवाप्तिभ्रमनिबन्धनेनेदं विषमं सम्भवतीत्याह—**क्वचिदिति**। उदाहरति—**बल्लालेति**। तत्र विषमप्रकारं योजयति—**अत्रेति**॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विषमप्रकरणम्॥ ३७॥

विषमप्रतिद्वन्द्विसमालङ्कारं लक्षयति—**सममिति**। अनुरूपघटनवर्णनं यत्तदाद्यविषमप्रतिद्वन्द्वी समालङ्कारोऽयमित्यर्थः। उदाहरणे कुचहारयोरनुरूपयोर्घटनं वर्णितमितीदं

---

१. चन्द्रालोके तु **'सममौचित्यतोऽनेकवस्तुसम्बन्धवर्णनम्। अनुरूपं कृ-**

यथा वा—

'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितघटनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥'

पूर्वं स्तुतिपर्यवसायीदं तु निन्दापर्यवसायीति भेदः ।

**सारूप्यमपि कार्यस्य कारणेन समं विदुः ।**
**नीचप्रवणता लक्ष्मि! जलजायास्तवोचिता ॥**

इदं द्वितीयविषमप्रतिद्वन्द्वि समम् ।

यथा वा—

दवदहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तम् ।
यच्छमयति तद्युक्तं सोऽपि हि दवमेव निर्दहति ॥'

यथा वा—

'आदौ हालाहलहुतभुजा दत्तहस्तावलम्बो
बाल्ये शंभोर्निटिलमहसा बद्धमैत्रीनिरूढः ।
प्रौढो राहोरपि मुखविषेणान्तरङ्गीकृतो यः
सोऽयं चन्द्रस्तपति किरणैर्मामिति प्राप्तमेतत् ॥'

---

सममिति भावः । पूर्वोदाहरणतोऽत्र विशेषमाह—**पूर्वमिति** । द्वितीयं समालङ्कारमाह—**सारूप्यमिति** । कार्यकारणयोः सारूप्यं समानगुणत्वं द्वितीयं समम् । उदाहरणे नीचप्रवणादुदकादुद्धृताया लक्ष्म्या नीचप्रवणत्वं युक्तमिति प्रतिपादनादिदं द्वितीयविषमप्रतिद्वन्द्वि सममिति भावः । उदाहरणान्तरमाह—**दवदहनादिति** । अत्रापि दवदहनोद्भवस्य धूमस्य स्वकारणदवदहनगतं स्वकारणविरोधित्वं दवदहनशमयितृत्ववर्णनेन प्रतिपादितमितीदं सममिति भावः । उदाहरणान्तरमाह—**आदाविति** । अत्र चन्द्रस्योत्पत्तिप्रभृति दुष्टसंसर्गतस्तदीयपरोद्वेजकत्वधर्मसंक्रान्तेरिदमपि सममेवेति भावः । अत्र चन्द्रहालाहलादीनां यद्यपि न कार्यकारणभावस्तथापि सदसत्सङ्गतेस्सदसद्गुणदोषसंक्रामकत्वस्य प्रसिद्धतया तथाविधसंसर्गशालिनोः कार्यकारणतुल्ययोगक्षेमतया तदानुरूप्यमपि सममेवेत्यभिप्रेत्या-

---

**तं लग्न हारेण-कुचमण्डलम्** ॥' इति पाठः । २. अयं भेदः चन्द्रालोके नास्ति ।

पूर्वत्र कारणस्वभावानुरूप्यं, कार्यस्यात्रागन्तुकतदीयदुष्टसंसर्गानुरूप्यमिति भेदः[1] ।

**विनानिष्टं च तत्सिद्धिर्यदर्थं कर्तुमुद्यमः ।**
**युक्तो वारणलाभोऽयं स्यान्न ते वारणार्थिनः ॥**

इदं सममनिष्टस्याप्यवाप्तिश्चेत्यर्थसंगृहीतस्य त्रिविधस्यापि विषमस्य प्रतिद्वन्द्वि । इष्टावाप्तेरनिष्टस्याप्रसङ्गाच्च । अत्र गजार्थितया राजानमुपसर्पन्तं तद्दौवारिकैर्वार्यमाणं प्रति नर्मवचनमुदाहरणम् । न चात्र निवारणमनिष्टमापन्नमित्यनुदाहरणत्वं शङ्कनीयम् । राजद्वारि क्षणनिवारणं सम्भावितमिति तदङ्गीकृत्य प्रवृत्तस्य विषमालङ्कारोदाहरणेष्विवातर्कितोत्कटानिष्टापत्त्यभावात् । किं च यत्रातर्कितोत्कटानिष्टसत्त्वेऽपि श्लेषमहिम्नेष्टार्थत्वप्रतिपत्तिः तत्रापि समालङ्कारोऽप्रतिहत एव ।

यथा—

उच्चैर्गजैरटनमर्थयमान एव त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन्! ।
उच्चाटनं त्वमपि लम्भयसे तथैव मामद्य नैव विफला महतां हि सेवा ॥'

---

इ—**पूर्वत्रेति** । तृतीयविषमप्रतिद्वन्द्वि सममाह—**विनेति** । यदर्थः यस्येष्टस्य सिद्ध्यर्थः कर्तुर्व्यापारस्स चेदनिष्टं विना तस्येष्टस्य साधकस्तदपि सममित्यर्थः । **त्रिविधस्येति** । स्वगतसुखदुःखाभावसाधनगोचरतया परानिष्टप्रापणरूपेष्टगोचरतया च कर्तुमुद्यमस्य त्रिविधतया त्रिविधस्येत्यर्थः । उदाहरणे गजार्थितया राजद्वारमुपगतं द्वाराधिकृतैर्निरुध्यमानं प्रति परिहासोक्तौ वारणार्थोद्यमादिष्टसिद्धेरनिष्टाननुबन्धिन्याः प्रतिपादनादुक्तं संयुज्यत इति भावः । **उत्कटेति** । सर्वत्र समीहितकार्यसिद्धौ नान्तरीयकानिष्टस्य सद्भावेनानिष्टविनाकृतेष्टस्याप्रसिद्ध्या लक्षणे उत्कटानिष्टविनाकृतेष्टसिद्धेर्विवक्षिततया उक्तदोषासिद्धेरिति भावः । ननु, यत्र उत्कटानिष्टसत्वेऽपि श्लेषबलादिष्टार्थप्रतिभासेनानिष्टप्रतिलम्भप्रतीतिस्तत्र समविशेषे उत्कटानिष्टविनाकृतत्वाभावादव्याप्तिरित्याशङ्क्य उत्कटानिष्टप्रतिभासविनाकृतेष्टलाभप्रतीतिमात्रस्यैव समालङ्कारप्रयोजकत्वमित्यभिप्रेत्याह—**किं चेति** । अत्रोदाहरणमाह—**उच्चैरिति** । अत्रोच्चगजाटनमभिलषतो ममोच्चाटनं प्राप्तमिति वाक्यार्थो नैव विफल इत्यर्थान्तरन्यासोपस्कृतः प्रतीयेत । नन्वत्र व्याजस्तुतौ स्तुत्या निन्दाभिव्यक्तिरूपद्वितीयकक्ष्यायामिष्टविपरीतार्थप्रतिभासेन विषमालङ्कारस्यैव प्रतीतेर्न समालङ्कारो युज्यत इति शङ्कते

---

१. अयं भेदोऽपि न चन्द्रालोकस्थः । इति बोध्यम् ।

अत्र यद्यपि व्याजस्तुतौ स्तुत्या निन्दाभिव्यक्तिविवक्षायां विषमालङ्कारः। तथापि प्राथमिकस्तुतिरूपवाच्यविवक्षायां समालङ्कारौ न निवार्यते। एवं यत्रेष्टावाप्तिसत्वेऽपि श्लेषवशादसतोऽनिष्टार्थस्य प्रतीतिस्तत्रापि समालङ्कारस्य न क्षतिः। यथा—

शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः।
तदेव शस्त्रं कृतवान्पितुराज्ञा न लंघिता॥'

अत्र 'पितुराज्ञा न लंघिते'त्यनेन विरोधालङ्काराभिव्यक्त्यर्थं 'नखल्वि'-त्यत्र पदद्वयविभागात्मकरूपान्तरस्यापि विवक्षायाः सत्वेऽपि नखं लुनातीति नखल्वित्येकपदेन वस्तुसदर्थान्तररूपान्तरमादाय समालङ्कारोऽप्यस्त्येव। श्लेषलब्धासदिष्टावाप्तिप्रतीतिमात्रेणापि (गत) रहितमुदाहरणम्। यथा—

'सत्यं तपस्सुगत्यै यत्तप्त्वाम्बुषु रविप्रतीक्षं सत्।
अनुभवति सुगतिमब्जं त्वत्पदजन्मनि समस्तकमनीयाम्॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे समप्रकरणम्॥३८॥

—अत्रेति। **प्राथमिकेति**। तथा च वाच्यकक्ष्यायामुच्चाटनशब्दश्लेषमहिम्ना इष्टार्थप्रतीत्या समालङ्कारो युक्त इति भावः। वस्तुसदिष्टप्राप्तिसद्भावेऽपि यत्र श्लेषवशेनासदनिष्टार्थप्रत्ययस्तत्रापि समालङ्कार एव द्रष्टव्य इत्याह—**एवमिति**। अत्रोदाहरणमाह—**शस्त्रमिति**। नखं लुनातीति नखल्वित्यैकपद्यमाश्रित्य वस्तुसदिष्टावाप्तेस्सद्भावात्समालङ्कारः अप्रतिहत एव। न खल्वित्यस्याव्ययरूपपदद्वयतामाश्रित्य इष्टविपरीतार्थप्रतीतिसद्भावेऽपि तस्याप्रयोजकत्वादिति भावः। एवं श्लेषनिबन्धनासदिष्टावाप्तिप्रतीतिमात्रेणाप्यस्यात्मलाभ इत्याह—**श्लेषेति**। तथात्वेऽपि समोदाहरणत्वमविहतमित्यर्थः। उदाहणे पद्मस्य तप्ताम्बुवासं स्वाभाविकं कामिनीपदभावजन्मरूपसद्गतिसाधनतप्ताम्बुवासत्वेन परिकल्प्य तस्य तज्जन्मरूपेष्टावाप्तिरसत्यपि श्लेषवशान्निबद्धेति समालङ्कारोऽयमिति भावः। अत्र सर्वस्वकारादयः प्रथमद्वितीयविषमप्रतिद्वन्द्विसमयोर्नालङ्कारत्वम्। विच्छित्तिविशेषाभावात्। न खलु तन्तुपटयोर्गुणसाम्यवर्णने वा ओदनार्थं पाकादौ प्रवृत्त्या ओदनादिप्रतिलम्भे वा काचिद्विच्छित्तिः। किं तु तद्वैपरीत्यमात्रं न कश्चिदलङ्कार इत्याहुः। वस्तुतस्तु, 'दवदहनादुत्पन्नो धूम'इत्यत्र 'आदौ हालाहलहुतभुजे'त्यादौ च विच्छित्तिविशेषस्यानुभूयमानस्य तन्तुपटादिसारूप्यस्याचत्कारितामात्रेणापह्नवायोगात् 'उच्चैर्गजै'रिति व्याजस्तुतावपि प्राथमिकस्तुतिरूपवाच्यकक्ष्यायां पाकादिप्रवृत्त्या ओदनसिद्धिप्रतिपादने विच्छित्त्यभावमात्रेण न विच्छित्तिर्हीयते। कविप्रतिभोत्थापितकार्यकारणसारूप्येष्टार्थसमुद्यमायत्तानिष्टविनाकृतेष्टप्राप्तेरलङ्कारत्वस्य चारुतातिशयशालितया अङ्गीकर्तुंयुक्तत्वादिति दिक्॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां समप्रकरणम्॥३८॥

अथ विचित्रम्—

[१]विचित्रं तत्प्रयत्नश्चेद्विपरीतः फलेच्छया ।
नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥

यथा वा—

'मलिनयितुं खलवदनं विमलयति जगन्ति देव! कीर्तिस्ते ।
मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवयानन्दे विचित्रप्रकरणम् ॥३९॥

अथ अधिकम्—

[२]अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् ।
ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः ॥

अत्र, यत्र महाजलौघेऽनन्तानि ब्रह्माण्डानि बुद्बुदकल्पानीत्याधारस्यातिविशालत्वं प्रदर्श्य, 'तत्र न मान्ती'त्याधेयानां गुणानामाधिक्यं वर्णितम् ।

यथा वा—

'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥'

---

विचित्रं लक्षयति—**विचित्रमिति** । यस्य कारणस्य यत्फलं तस्माद्यदा तद्विपरीतं फलं भवति तदा विपरीतफलनिष्पत्त्युद्देश्यस्तद्विपरीतफलानुकूलव्यापारः आश्चर्यहेतुत्वादन्वर्थनामा विचित्रालङ्कार इत्यर्थः । उदाहरणे सर्वाधिकौन्नत्यलिप्सया इष्टौन्नत्यविपरीतनमनानुकूलयत्नवर्णनाल्लक्षणानुगमः । उत्तरत्रापि खलवदनमालिन्यमित्राह्लादोद्देशेन प्रवृत्तयोर्वर्ण्यराजगतकीर्तिप्रतापयोस्तदनुकूलयत्नतो जगद्वैमल्यमित्रद्रोहसम्पत्तिवर्णनाद्विचित्रालङ्कारः । 'मित्राह्लाद'मित्यत्र श्लेषानुप्राणितः । इतरत्र शुद्ध इति भेदः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विचित्रप्रकरणम् ॥ ३९॥

अधिकालङ्कारं लक्षयति—**अधिकमिति** । महत आधारादाधेयस्य महत्त्ववर्णनमधिकालङ्कार इत्यर्थः । उदाहरणे 'ब्रह्माण्डानी'ति बहुवचनेनानन्तकोटिब्रह्माण्डानां यत्र जलराशौ बुद्बुदायमानतया सङ्कोचेणावस्थानं तत्रातिविपुले जलराशौ वर्ण्यगुणामानोक्तेराधेयाधिक्यं स्पष्टमेवेति भावः । उदादरणान्तरं स्पष्टम् । पूर्वोक्ताधिकवैपरीत्येन द्वितीयमधि-

---

१. '**विचित्रं चेत्प्रयत्नः स्याद्विपरीतफलप्रदः** ।' इति चन्द्रालोकपाठः ।

२. चन्द्रालोके तु '**अधिकं बोध्यमाधारादाधेयाधिक्यवर्णनम् । यया व्याप्तं जगत्तस्यां वाचि मान्ति न ते गुणाः** ॥' इति पाठः ।

पृथ्व्वाधेयाद्यधाराधिक्यं तदपि तन्मतम् ।
कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव ॥

अत्र 'एत' इति प्रत्यक्षदृष्टमहावैभवत्वेनोक्तानां गुणानां 'विश्राम्यन्ती'त्यसंबाधावस्थानोक्त्या आधारस्य वाग्ब्रह्मण आधिक्यं वर्णितम् ।
यथा वा—

'अहो विशालं भूपाल! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥'

अत्र यद्यप्युदाहरणद्वयेऽपि 'कियद्वाग्ब्रह्मे'त्य 'हो विशाल' मिति चाधारयोः प्रशंसा क्रियते । तथापि तनुत्वेन सिद्धवत्कृतयोश्शब्दब्रह्मभुवनोदरयोर्गुणयशोराश्यधिकत्वेनाधिकरणत्वं प्रकल्प्यैव प्रशंसा क्रियत इति तत्प्रशंसा प्रस्तुतगुणयशोराशिप्रशंसायामेव पर्यवस्यति ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अधिकप्रकरणम् ॥४०॥

---

क्रमाह—**पृथ्व्वाधेयादिति** । महत्त्वेन प्रसिद्धादाधेयादाधाराधिक्यवर्णनमप्याधिकम् । उदाहरणयोर्गुणानां महावैभवशालितया 'एत' इति शब्दनिर्दिष्टानामाधारभूतस्य वाग्ब्रह्मणो मातुमशक्य इत्युक्त्या विशालतया निर्दिष्टस्य यशोराशेर्भुवनगर्भमानोक्त्या भुवनोदरस्य च महत्त्ववर्णनादुक्तरूपमधिकमत्रेति भावः । **तनुत्वेनेति** । एतच्छब्दनिर्दिष्टप्रत्यक्षपरिदृष्टातिवैभवशालिगुणापेक्षया मातुमशक्य इत्युक्त्या यशोराशिमहत्त्वेन च वाग्ब्रह्मभुवनोदरयोस्तनुत्वस्य सिद्धतया गुणयशोराश्यधिकरणतया काल्पनिकमाधिक्यमादाय प्रशंसा प्रस्तुतगुणादिप्रशंसापर्यवसायिनीति भावः । 'आधाराधेययोरनानुरूप्यमधिकं तच्चाधारवैपुल्याद्वे'ति लक्षणं सर्वस्वकारीयमपि आधाराधेययोरानुरूप्याभाववर्णनं यत्राधाराधेयान्यतरवैपुल्यपर्यवसायि तत्राधिकमिति परिष्करणीयम् । एतेन सर्वस्वलक्षणस्य 'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः । कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥' इत्यत्र कपालित्वकान्तिमत्त्वाभ्यां परस्परानानुरूपयोः कपालिचन्द्रकलयोर्वर्ण्यमानस्य सङ्घटनस्याधाराधेयभावरूपतया उक्तलक्षणसद्भावेन विषमविशेषे अतिव्याप्तेर्नेदं लक्षणं युज्यते । न चात्राधिकमेवास्तु, अननुरूपसङ्घटनस्याधाराधेयरूपतायामधिकं तदतिरिक्तसामानाधिकरण्यादिसम्बन्धरूपतायां च विषममित्येवाधिकविषमयोर्भेदः[1] । उदाहृतश्लोके तुरीयचरणे 'विधिरेवे'त्यादिप्रागुदाहृते विषमोदाहरणे च तथैव स्पष्टत्वादिति वाच्यम् । तथा सति एतत्प्रतिद्वन्द्विसमालङ्कारस्यापि अनुरूपयोराधाराधेयभावान्यसम्बन्ध एव प्रवृत्त्यापत्त्या प्रागुदाहृतसमालङ्कारोदाहरणस्य 'कौमुदीव तुहिनांशुमण्डल'मित्यादेस्तदनुदाहरणत्व-

---

१. अयं भेदः चन्द्रालोके नोक्तः ।

अथ अल्पम्—

**[१]अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ।**
**मणिमालोर्मिका तेऽद्य करे जपवटायते ॥**

अत्र मणिमालामयोर्मिका तावदंगुलिमात्रपरिमितत्वात्सूक्ष्मा । सापि विरहिण्याः करे कङ्कणवत्प्रवेशिता तस्मिन् जपमालावल्लम्बत इत्युक्त्या ततोऽपि करस्य विरहकार्श्यादतिसौक्ष्म्यं दर्शितम् ।

यथा वा—

'यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि! लक्ष्यते ।
मृणालसूत्रमपि ते न संमाति स्तनान्तरे ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अल्पप्रकरणम् ॥४१॥

अथ अन्योन्यम्—

**अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ।**
**त्रियामा शशिना भाति शशी भाति त्रियामया ॥**

यथा वा—

'यथोर्ध्वाक्षः पिबत्यम्भः पथिको विरलांगुलिः ।

---

प्रसङ्गात् । अतः प्रागुदाहृते विषमे लक्षणातिव्याप्तिर्दुरुद्धरेति केषांचिदुत्प्रेक्षणं निरस्तम् । उक्तोदाहरणे आधाराधेयानानुरूप्यस्य तदन्यतरवैपुल्यपर्यवसानाभावेनातिव्याप्त्यप्रसक्तेरिति दिक् ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अधिकप्रकरणम् ॥ ४०॥

अल्पालङ्कारं लक्षयति—**अल्पमिति** । यत्राधेयसूक्ष्मता आधारसौक्ष्म्यपर्यवसायिनी तत्र सूक्ष्मालङ्कारः । उदाहरणे मणिमालामयोर्मिकायाः अंगुलिमात्रतया सूक्ष्मायाः करधृतजपवटसादृश्येन लम्बमानताप्रतीतेर्वर्ण्यमानोर्मिकासौक्ष्म्यस्य विरहनिबन्धनशरीरकार्श्यव्यञ्जनेन करस्य सौक्ष्म्ये पर्यवसानमिति लक्षणानुगतिरिति भावः । उदाहरणान्तरं स्पष्टम् । एवमाधारसौक्ष्म्यादाधेयसौक्ष्म्यवर्णनमपि अल्पमेव । यथा—'यदसौ पदमणिमनिधेर्विदधौ दशरथवधूदरस्यान्तः । ख्यापितमणोरणीयानिति निगमोक्तेरनेन याथार्थ्यम् ॥' अत्राधारभूतदशरथवधूदरस्याणीयस्तया आधेयस्य तद्गर्भस्थितस्य भगवतोऽणयिस्त्वं निबद्धमित्यवधेयम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अल्पप्रकरणम् ॥ ४१ ॥

अन्योन्यालङ्कारमाह—**अन्योन्यमिति** । परस्परसद्भावस्य परस्परव्यापारस्य वा परस्परोपकारजनकत्वे अन्योन्यालङ्कारः । उदाहरणे शशिनिशयोः परस्परसद्भावेन चारुतोत्कर्षादन्योन्यालङ्कार इत्यर्थः । द्वितीयमुदाहरति—**यथोर्ध्वाक्ष इति** । नन्वत्रोभयोर्व्यापा-

---

१. अल्पालङ्कारः चन्द्रालोके न दृश्यते ।

तथा प्रपापालिकापि धारां वितनुते तनुम् ॥'

अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषन्त्या विरलांगुलीकरणतः चिरं पानीयदानानुवृत्तिसंपादनेनोपकारः कृतः । तथा प्रपापालिकयापि पानीयपानव्याजेन चिरं स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणताश्चिरं पानीयपानानुवृत्तिसंपादनेनोपकारः कृतः । अत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेऽपि परस्परोपकारोऽपि न निवार्यते ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अन्योन्यप्रकरणम् ॥४२॥

अथ विशेषः—

**विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।**
**गते सूर्येऽपि दीपस्थाः तमश्छिन्दन्ति तत्कराः ॥**

यथा वा—

'कमलमनंभसि कमले कुवलयमेते च कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥'

अत्राद्ये सूर्यस्य प्रसिद्धाधारस्याभावेऽपि तत्किरणानां दीपस्थितिरुक्ता । द्वितीये सलिलस्य प्रसिद्धाधारस्याभावेऽपि कमलकुवलययोरन्यत्रावस्थितिरुक्ता। क्वचित्प्रसिद्धाधाररहितानामाधारान्तरनिर्देशं विनैवाप्रलयमवस्थितेर्वर्णनं दृश्यते । यथा—

'दिवमप्युपयातानामाकल्पमनल्पगुणगणा एषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥'

अत्र कवीनामभावेऽपि तद्गिरामाधारान्तरनिर्देशं विनैवाप्रलयमवस्थितिर्वर्णिता।

---

राभ्यां पथिकप्रपापालिकयोः स्वस्वोपकारस्यापि विद्यमानतया कथमन्योन्यमित्यत आह—**अत्रोभयोरिति** ॥इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अन्योन्यप्रकरणम् ॥ ४२ ॥

विशेषं लक्षयति—**विशेष इति** । प्रसिद्धाधाराभावेऽपि आधेयसद्भावो वर्ण्यमानः विशेषालङ्कारः । उदाहरणे सूर्यकिरणानामाधारस्य सूर्यस्याभावेऽपि अन्यत्र स्थितिवर्णनात् । द्वितीये प्रसिद्धाधारमुदकं विना कमलादीनां स्थितिवर्णनाल्लक्षणानुगतिः । पूर्वोदाहरणे शुद्धः, द्वितीये अतिशयोक्तिसङ्कीर्णोऽयमिति भावः । सर्वमिदमाधारान्तरनिर्देशसहितम् । क्वचित्प्रसिद्धाधाररहितानामाधारान्तरनिर्देशं विनैव सद्भावो दृश्यत इत्याह—**क्वचिदिति** ।

**विशेषस्सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।**
**अन्तः पुरो बहिः पश्चात्सर्वदिक्ष्वपि सैव मे ॥**

यथा वा—

'हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स! राम! गतोऽसीति सन्तापेनानुमीयसे ॥'

**किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ।**
**त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥**

यथा वा—

'स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूः भुवि सत्यं सविता बृहस्पतिश्च ॥'

अत्राद्ये राजदर्शनारम्भेण कल्पवृक्षदर्शनरूपाशक्यवस्त्वन्तरकृतिः । द्वितीये राजसृष्ट्यारम्भेण मनोभवादिसृष्टिरूपाशक्यवस्त्वन्तरकृतिः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विशेषप्रकरणम् ॥४३॥

अथ व्याघातः—

**स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् ।**
**यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥**

यत् यत्साधनत्वेन लोकेऽवगतं तत्केनचित्तद्विरुद्धसाधनं क्रियेत चेत् स व्याघातः । यद्वा यत्साधनतया केनचिदुपात्तं तदन्येन तत्प्रतिद्वन्द्विना तद्विरुद्धसाधनं क्रियेत चेत्सोऽपि व्याघातः । तत्राद्य उदाहृतः ।

---

अथान्यं विशेषं लक्षयति—**विशेष इति** । एकस्य वस्तुनोऽनेकाधारेषु स्थितिर्वर्णनं द्वितीयो विशेष इत्यर्थः । उदाहरणे लक्षणानुगतिः स्पष्टा । तृतीयं विशेषमाह—**किञ्चिदिति** । किञ्चित्कार्यानुकूलयत्नतोऽशक्यवस्त्वन्तरकरणं तृतीयो विशेष इत्यर्थः । उत्तरो ग्रन्थो निगदव्याख्यातः ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विशेषप्रकरणम् ॥ ४३ ॥

व्याघातालङ्कारकारिकां विवृणोति—**यदिति** । यत् यत्कारणत्वेन लोकप्रसिद्धं तत् अन्येन केन चित् तद्विपरीतकारि क्रियते चेत् स व्याघात इत्यर्थः । अयमेको व्याघातः । यत् यत्साधनत्वेन केन चिदङ्गीकृतं तत्तत्प्रतिद्वन्द्विना तद्विरुद्धसाधनत्वेन करणं द्वितीयो व्याघातः । आद्यस्योत्तरार्धमुदाहरणम् । तत्र कुसुमानां जगत्प्रीतिसाधनतया प्रसि-

१.२.इमौ विशेषभेदौ चन्द्रालोके नोक्तौ । ३. अत्र चंद्रालोके '**वस्त्वन्यक्रियमु-**

द्वितीयो यथा—

'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥'

**[1]सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी ।**
**दया चेद्बाल इति मय्यपरित्याज्य एव ते ॥**

कार्यविशेषनिष्पादकतया केनचित्सम्भाव्यमानादर्थादन्येन कार्यविरोधिक्रियासौकर्येण समर्थ्यते चेत् सोऽपि व्याघातः । कार्यविरुद्धक्रियायां सौकर्यं कारणस्य सुतरां तदानुगुण्यम् । यथा—जैत्रयात्रोन्मुखेन राज्ञा युवराजस्य राज्य एव स्थापने यत्कारणत्वेन सम्भावितं बालत्वं तत्प्रत्युत तद्विरुद्धस्य सहानयनस्यैव कारणतया युवराजेन परित्यागस्यायुक्तत्वं दर्शयता समर्थ्यते । यथा वा—

'लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया ।
दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥'

अत्र पूर्वोत्तरार्धे पक्षप्रतिपक्षरूपे कयोश्चिद्वचने इति लक्षणानुगतिः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे व्याघातप्रकरणम् ॥४४॥

अथ कारणमाला—

**गुम्भः कारणमाला स्यात् यथा प्राक्प्रान्तकारणैः ।**
**नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥**

द्धानां तद्विरुद्धेन मन्मथेन जगदुपद्रवसाधनतया करणात् । द्वितीयमुदाहरति—**दृशा दग्धमिति** । अत्र मनसिजदाहसाधनतया शिवेनोपात्ताया दृशस्तत्प्रतिद्वन्द्विनीभिरङ्गनाभिस्तद्विरुद्धमनसिजोज्जीवनसाधनतया करणमुपनिबद्धमिति द्वितीयो व्याघात इत्यर्थः । अथापरं व्याघातं लक्षयति—**सौकर्येणेति** । किञ्चित्कार्यार्थतया केनचित्सम्भाविताद्वस्तुनः तत्कार्यविरोधि कारण सौकर्येण समर्थ्यते चेत् स तृतीयो व्याघातः । उदाहरणे जैत्रयात्राप्रस्थितेन नृपेण युवराजस्य बाल्याद्राज्ये स्थापनं कर्तव्यत्वेन सम्भावितं तत्स्थापनसाधनतयोपात्तं बालत्वं तद्विरुद्धस्वनयनसाधनतया युवराजेन समर्थितमिति लक्षणानुगतिः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां व्याघातप्रकरणम् ॥ ४४ ॥

कारणमालां लक्षयति—**गुम्भ इति** । प्राक्प्रान्तकारणैः पूर्वपूर्वकारणैः उत्तरोत्तरैः कारणैर्वा गुम्भः कारणमालेत्यर्थः । उत्तरार्धे नयश्रीत्यागानां पूर्वपूर्वेषां श्रीत्यागयशोरूपोत्त-

---

**च्यते** ।' इति द्वितीयपादपाठोऽन्यथा दृश्यते । १. अयं व्याघातभेदः चंद्रालोके नोक्तः ।

उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वा वस्तुभिः कृतो गुम्भः कारणमाला । आद्योदाहृता ।

द्वितीया यथा—

'भवन्ति नरकाः पापात् पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे कारणमालाप्रकरणम् ॥४५॥

अथ एकावलिः—

**गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता ।**
**नेत्रे कर्णान्तविश्रान्ते कर्णौ दोस्तम्भदोलिनौ ॥**
**दोस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ ।**
**जानुनी रत्नमुकुराकारे तस्य महीभुजः ॥**

उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः पूर्वपूर्वस्योत्तरोत्तरविशेषणभावो वा गृहीतमुक्तरीतिः । तत्राद्यः प्रकार उदाहृतः ।

द्वितीयो यथा—

'दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते
यत्रामुष्य सुधीभवन्ति किरणा राशेस्स यासामभूत् ।
यस्तत्पित्तमुषस्सु योऽस्य हविषे यस्तस्य जीवातवे
वोढा यद्गुणमेष मन्मथरिपोस्ताः पान्तु नो मूर्तयः ॥'

इति श्रीमदप्पयदीक्षतकृतौ कुवयानन्दे एकावलिप्रकरणम् ॥४६॥

---

रोत्तरकार्यकारणानां ग्रथनाल्लक्षणानुगतिः स्पष्टा । द्वितीयामुदाहरति—**भवन्तीति** । अत्र पापदारिद्र्याप्रमादानां पूर्वपूर्वनरकादिहेतुतयोपनिबद्धानां गुम्भनम् । इति ।

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां कारणमालाप्रकरणम् ॥ ४५ ॥

एकावलिं लक्षयति—**गृहीतेति** । गृहीतं च तन्मुक्तं च गृहीतमुक्तं तस्य रीतिः पङ्क्तिः तया गृहीतमुक्तरीत्या । अभेदे तृतीया । ततश्च गृहीतमुक्तपङ्क्तिरूपार्थश्रेणिरेकावली । गृहीतमुक्तरीतिं विवृणोति—**उत्तरोत्तरस्येति** । **आद्यः प्रकार इति** । उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः । उदाहरणे उत्तरोत्तरस्य कर्णादेः पूर्वपूर्वनेत्रादिविशेषणतया गृहीतस्य विशेषणभावपरित्यागेन वाक्यान्तरप्रक्रमात् गृहीतमुक्तरीतिः स्पष्टेति भावः । द्वितीयमुदाहरति—**दिक्कालात्मेति** । अत्र गगनादीनां पूर्वपूर्वेषामुत्तरोत्तरविशेषणभावः स्पष्टः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां एकावलिप्रकरर्णम् ॥ ४६ ॥

अथ मालादीपकम्—

**दीपकैकावलीयोगान्मालादीपकमिष्यते ।**
**स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥**

अत्र स्थितिरिति पदमेकं, स्मरेण तस्या हृदये स्थितिः कृता, तेन तस्या हृदयेन त्वयि स्थितिः कृतेत्येवंवाक्यद्वयान्वयि। अतो दीपकं गृहीतमुक्तरीतिसद्भावादेकावली चेति दीपकैकावलीयोगः ।

यथा वा—

'सङ्ग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलं,
तेन त्वं, भवता च कीर्तिरतुला, कीर्त्या च लोकत्रयम् ॥'

अत्र येन येन सहसा यद्यत्समासादित'मिति संक्षेपवाक्यस्थितमेकं समासादितमिति पदं 'कोदण्डेन शरा' इत्यादिषु षट्स्वपि विवरणवाक्येषु तत्त-

---

मालादीपकं लक्षयति—**दीपकेति** । एकधर्मान्वयस्य गृहीतमुक्तरीतेश्च मेलने मालादीपकमित्यर्थः । उदाहरणे स्मरहृदययोः स्थितिरूपैकधर्मान्वयेन दीपकस्य गृहीतमुक्तरितेश्च सद्भावात् दीपकैकावलीयोगः स्पष्ट स्याह—**अत्र स्थितिरिति** । उदाहरणान्तरमाह—**संग्रामांगणेति** । अत्र काव्यप्रकाशकृता, भवन्मतयोगदोषपराहतमिदं पद्यम् । आसादितमित्यासादनक्रियायां कोदण्डादीनां कर्मत्वे कोदण्डं शरानिति सर्वत्र द्वितीयाप्रसङ्गः । वाक्यार्थस्य कर्मत्वे प्रातिपदिकार्थमात्रविवक्षया कोदण्डः शरा इति प्रथमाप्रसङ्गः । येन कोदण्डादिना यद्यच्छरादिकमिति यच्छब्दार्थकोदण्डाद्योरभेदेनान्वयादासादनकर्मत्वावगतौ तस्याकर्णनकर्मत्वेनान्वये शरा इति लिङ्गवचनानुपपत्तेः । अतः भवन्मतयोगदोषकबलितमेतदिति प्रतिपादितम् । तन्निरासमभिप्रेत्य लिङ्गवचनविपरिणामादिना तत्तद्वाक्यार्थसमुचितेनाभिमतान्वयमाह—**अत्रेति** ।**समासादितमिति** । क्रियाया उत्तरवाक्ये 'कोदण्डेन शरा' इत्यत्र लिङ्गवचनविपरिणामेन 'समासादिता' इति 'तेन त्व'मित्यत्र 'आसादित' इति लिङ्गविपरिणामेन 'भवता च कीर्ति'रित्यत्रापि लिङ्गविपरिणामेन सर्वत्र क्रियासम्बन्धादभिमतान्वयसिद्धेर्दीपकैकावलीयोगः स्पष्ट इत्यर्थः । अत्र केचित्—'मालादीपकं नालङ्कारान्तरं, किं तु अलङ्कारद्वयसङ्करवद्दीपकोत्थापितत्वादेकावल्यास्तयोः सङ्कर एव । अन्यथा अलङ्कारान्तरसङ्करस्यापि सङ्करबहिर्भावापत्ते'रित्याहुः । वस्तुतस्तु, नात्र दीपकसम्भवः । उदाहरणे कोदण्डादीनां सर्वेषामपि प्रस्तुतत्वेन प्रस्तुताप्रस्तुतैकधर्मान्वयरूपदीपकस्यात्र प्रसरायोगात् । न चास्तु प्रकृतैकरूपधर्मान्वयात्तुल्ययोगितेति वाच्यम् । तथात्वे तत्सङ्करापत्तेरिति । वस्तु-

दुच्चलितलिङ्गवचनविपरिणामेनान्वेतीति दीपकम् । शरादीनामुत्तरोत्तरविशेषणभावादेकावली च इति दीपकैकावलीयोगः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे मालादीपकप्रकरणम् ॥४७॥

अथ सारः—

**'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते ।**
**मधुरं मधु तस्माच्च सुधा तस्याः कवेर्वचः ॥**

यथा वा—

'अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते
सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार ।
धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंहक्षितीन्द्र!
त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥'

अयं श्लाघ्यगुणोत्कर्षः ।

अश्लाघ्यगुणोत्कर्षो यथा—

'तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं प्रार्थयेदिति ॥'

उभयरूपो यथा—

'गिरिर्महान् गिरेरब्धिः महानब्धेर्नभो महत् ।
नभसोऽपि महद्ब्रह्म ततोऽप्याशा महीयसी ॥'

अत्र ब्रह्मपर्यन्तेषु महत्त्वं श्लाघ्यगुणः । प्रकृतार्थे त्वाशायामश्लाघ्यगुणः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे सारप्रकरणम् ॥४८॥

---

तत्तु, नात्रालङ्कारसङ्करवत् सङ्करमात्रकृतो विच्छित्तिविशेषः । नियतदीपकैकावलीयोगकृतविच्छित्तिविशेषस्यालङ्कारान्तरनिर्वाह्यत्वात् । इति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां मालादीपकप्रकरणम् ॥ ४७ ॥

सारालङ्कारं लक्षयति—**उत्तरोत्तरमिति** । पूर्वपूर्वापेक्षया उत्तरोत्तरोत्कर्षः सार इत्यर्थः । अयं च गुणागुणोत्कर्षाभ्यां द्विविध इत्यभिप्रेत्य उदाहरणानि दर्शयति—**मधुरमिति** । शेषमतिरोहितार्थम् ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां सारप्रकरणम् ॥ ४८ ॥

---

१. अत्र चन्द्रालोके **'सारो नाम यदोत्कर्षः सारताया यथोत्तरम् । सारं सारस्वतं तत्र काव्यं तत्र शिवस्तवः । उदारसारश्चेद्दाति भिन्नो**

अथ यथासङ्ख्यम्—

**यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ।**
**शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ॥**

यथा वा—

'शरणं किं प्रपन्नानि विषवन्मारयन्ति वा ।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥'

---

यथासंख्यं लक्षयति—**यथासंख्यमिति** । क्रमपठितानां समुदायद्वयमापन्नानां पाठक्रमानुरोधेनान्वयो यथासंख्यमित्यर्थः । तच्च द्विविधम् । शाब्दमार्थं च । क्रमिकाणां व्यस्तपदप्रतिपाद्यत्वे क्रमसम्बन्धस्याव्यवधानेन प्रतीत्या शाब्दत्वं, तेषां समस्तपदप्रतिपाद्यत्वे त्वार्थम् । तत्र समुदाययोरेव मिथस्सम्बन्धस्य शब्दतः प्रतीयमानतया समुदायिनां सम्बन्धस्यार्थलभ्यत्वादिति सर्वस्वकारादयः । तत्र शाब्दमुदाहरणं 'शत्रु'मित्यादि । अत्र शाब्दप्रभृतीनां 'जये'त्यादिक्रियापदैरर्थद्वारकः क्रमेण सम्बन्धः । उत्तरश्लोके शरणं किं प्रपन्नानि, यतो न त्यज्यन्ते, किं वा विषवन्मारयन्ति, यतो न भुज्यन्त इति क्रमपठितयोर्द्वयोर्वाक्यार्थयोः क्रमेण 'न त्यज्यन्ते' इत्यादावन्वयाल्लक्षणानुगतिः । पूर्वत्र पदार्थानां सङ्गतिः । अत्र क्रमिकानेकवाक्यार्थसङ्गतिरिति भेदः । समस्तपदनिबन्धनमार्थं यथा—'नयनरथचक्रमित्रं रूपाहारध्वजं सुवदनायाः । वीक्ष्य पदाम्बरगात्रं हरिहरमदनाः कथं न विवदन्ते ॥' अत्र हरिहरमदनानां समुदायावयवानां 'नयनरथचक्रमित्र'मिति द्वितीयसमुदायावयवानां च सम्बन्धोऽर्थलभ्य इत्यार्थमिदं यथासंख्यम् । अन्यतरसमुदायस्य समासनिर्देशेऽपि आर्थमेव । यथा 'कीर्तौ विष्फूर्तिमत्यां ते विधिवैकुण्ठशङ्कराः । आरोढुं शयितुं वस्तुं वाञ्छन्ति धरणीपते! ॥' अत्र विधिवैकुण्ठशङ्कराणां समासपदप्रतिपाद्यत्वम् । आरोहणादिक्रियाणां भिन्नपदप्रतिपाद्यतेत्यार्थम् । ननु, उद्देशक्रमानुसारेणानूद्देशाकरणे क्रमप्रक्रमभङ्गात्मको दोषः । यथा 'अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधाववितथमदाध्माते रोषान्मुनावभिधावति । अभिजनधनुर्विद्यादर्पक्षमाय च कर्मणे स्फुरति रभसात्पाणिः पादोपसङ्ग्रहणाय च ॥' अत्र हि, प्रक्रान्ततपस्तेजःक्रमानुसारेण तपोऽन्वायिनः पादसङ्ग्रहणस्य उत्तरार्धे प्रथमं पठितव्यस्य चरमं पाठः । अतोऽयं क्रमप्रक्रमभङ्ग इति । एवं च यथासंख्योदाहरणेषु तादृशदोषाभावमात्रं न त्वलङ्कारान्तरं कल्पनीयमिति चेन्न । क्रमप्रक्रमभङ्गदोषाभावस्तावद्द्वेधा सम्भवति । क्रमस्यैवाप्रक्रमात् प्रक्रान्तस्य तस्यानिर्वाहाद्वा । तत्र 'व्यानम्रा दयितानने सकरुणा मातङ्गचर्माम्बरे सोत्कम्पा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनी । मीलद्भ्रूस्सुरसिन्धुदर्शनविधौ ह्रीणा कपालोदरे पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः

---

भिन्नतया गुणः ॥ मधुरं मधु पीयूषं तस्मात्तस्मात्कवेर्वचः ।' इति पाठः ।

१. चन्द्रालोके तु, '**यथासंख्यं द्विधार्थाश्चेत्क्रमादेकैकमन्विताः** ।' इति पूर्वार्धपाठः ।

अमुं क्रमालङ्कार इति केचिद्व्याजह्रुः ।

'इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे यथासंख्यप्रकरणम् ॥४९॥

अथ पर्यायः—

**पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः ।**
**पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा ॥**

अत्रैकस्याः कामिनीवदनकान्तेः क्रमेण पद्मचन्द्ररूपानेकाधारसंश्रयणं पर्यायः । यद्यपि पद्मसंश्रयणं कण्ठतो नोक्तम् । तथापि 'पद्मं मुक्त्वे'ति

---

शिवायास्तु वः ॥' इत्यत्राद्यः प्रकारः । अत्र हि दयिताननादीनां उद्देश्यानां पृथक्पृथगेव तत्तत्सन्निधौ व्यानम्रत्वादिविधेयोपन्यासः । न तूद्देश्यसमूहपरिसमाप्त्यनन्तरं विधेयोपक्रम इति क्रमप्रक्रमभङ्गाभावः । द्वितीयस्तु प्रकारः उदाहृतयथासंख्यस्थल एव । अत्र हि प्रक्रान्ते उद्देश्यवर्गे पाठबलात्प्रक्रान्तस्य क्रमस्य तेनैव क्रमेण विधेयोपन्यासेन निर्वाहः । इत्थं द्विविधयोरनयोर्दोषाभावयोराद्यस्य विच्छित्तिविशेषाभावेनानलङ्कारत्वेऽपि द्वितीयस्य विच्छित्तिविशेषशालितयालङ्कारत्वं युक्तमेव । न हि विच्छित्तिविशेषशालित्वेऽपि दोषाभावमात्रेणालङ्कारत्वहानिः । तथा सति निरलङ्कारत्वस्य दोषतया अलङ्कारमात्रस्य दोषाभावरूपतया अलङ्कारत्वाभावापत्तेः। अतो दोषाभावरूपस्यापि यथासंख्यस्यालङ्कारत्वं युक्तमेव । वस्तुतस्तु, प्रक्रमभङ्गदोषस्याभिताार्थान्वयबोधाभावेन कवेर्विवक्षितान्वयसमर्पकपदविन्यसनसामर्थ्याभावस्फोरणेन रसापकर्षावहतया दोषत्वं तदभावे कवेस्तादृशाशक्तिस्फोरणमात्रं, न तु विच्छित्तिविशेषः कश्चित् । तस्य शपथनिर्णेयत्वात् । न हि निरलङ्कारत्वं नाम कश्चिद्दोषः शब्दार्थरसनिष्ठतया गणितः । येनालङ्कारवर्गमात्रस्यानलङ्कारता प्रसज्येत । अत एव साभिप्रायैकविशेषणविन्यासे अपुष्टार्थत्वदोषाभावमात्रं न तु परिकरालङ्कार इति सिद्धान्तः । अतो यथासंख्यस्य नालङ्कारत्वमिति युक्तमुत्पश्यामः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां यथासंख्यप्रकरणम् ॥ ४९ ॥

पर्यायं लक्षयति—**पर्याय इति** । एकस्यार्थस्य पर्यायेणानेकाधारसंश्रयणं पर्यायः । उदाहरणे कामिनीवदनकान्तेः पर्यायेण पद्मचन्द्ररूपानेकाधारसंश्रयणवर्णनाल्लक्षणानुगतिरिति भावः । ननूदाहरणे पद्माश्रयणानुक्तेः कथं पर्याय इत्यत आह—**यद्यपीति** । पद्मसंश्रयणस्य कण्ठतो निबन्धनाभावेऽपि 'पद्मं मुक्त्वे' ति पद्मपरित्यागोक्त्या तत्समाश्रयणस्यार्थतो लाभात्पर्यायोपपत्तिरिति भावः । अंशे आर्थस्य अंशान्तरे शाब्दस्यानेकाधारसंश्रय-

---

१. **पर्यायश्चेदनेकस्य स्यादेकत्र समन्वयः । पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥'** इति चंद्रालोकपाठः ।

तत्परित्यागोक्त्या प्राक्तत्संश्रयाक्षेपेण पर्यायनिर्वाहः । अतएव

'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥'

इत्यत्र पर्यायं काव्यप्रकाशकृदुदाजहार ।

सर्वत्र शाब्दः पर्यायो यथा—

'नन्वाश्रयस्थितिरियं तव कालकूट! केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः कवीनाम् ॥'

सर्वोऽप्ययं शुद्धपर्यायः ।

सङ्कोचपर्यायो यथा—

'प्रायश्चरित्वा वसुधामशेषां छायासु विश्रम्य ततस्तरूणाम् ।
प्रौढिं गते संप्रति तिग्मभानौ शैत्यं शनैरन्तरपामयासीत् ॥'

अत्र शैत्यस्योत्तरोत्तरमाधारसङ्कोचात्सङ्कोचपर्यायः ।

विकासपर्यायो यथा—

'बिम्बोष्ठ एव रागस्ते तन्वि! पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावकाक्षि! दृश्यते ॥'

अत्र रागस्य पूर्वाधारापरित्यागेनाधारान्तरसंक्रमणमिति विकासपर्यायः ।

**एकस्मिन् यद्यनेकं वा पर्यायः सोऽपि सम्मतः ।**
**अधुना पुलिनं तत्र यत्र स्रोतः पुराजनि ॥**

---

णस्य पर्यायत्वे काव्यप्रकाशोक्तिं संवादयति—**अत एवेति** । सर्वत्र शाब्दं पर्यायमुदाहरति—**नन्वाश्रयेति** । स्पष्टम् । **शुद्धपर्याय इति** । आधारसङ्कोचविकासयोरभावाच्छुद्ध इत्यर्थः । सङ्कोचपर्यायमुदाहरति—**प्राय इति** । द्वितीयं पर्यायं लक्षयति—**एकस्मिन्निति** । एकस्मिन्पर्यायेणानेकेषां वृत्तिवर्णनेऽप्येष पर्याय इत्यर्थः । उदाहरणे एकत्रैव प्रदेशे स्रोतःपुलिनयोः क्रमेण वर्णनाल्लक्षणानुगमः । अयं शुद्ध आधेयपर्यायः । सङ्कोचाधेयपर्यायो यथा 'प्राक्स्फुरत्सकलज्योतिस्ततस्तारेन्दुभासुरम् । ततश्चन्द्रावशेषं च

---

१. अयं भेदश्चंद्रालोके नोक्तः ।

यथा वा—

'पुराभूदस्माकं प्रथममविभिन्ना तनुरियं
ततो नु त्वं प्रेयान् वयमपि हताशाः प्रियतमाः।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥'

अत्र दम्पत्योः प्रथममभेदः ततः प्रेयसीप्रियतमभावः ततोभार्याप तिभाव इत्याधेयपर्यायः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे पर्यायप्रकरणम् ॥५०॥

अथ परिवृत्तिः—

**परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः।
जग्राहैकं शरं मुक्त्वा कटाक्षान् स रिपुश्रियाम् ॥**

---

नभः प्रातस्तरामभूत् ॥' यथा वा—कविसार्वभौमसमरपुङ्गवदीक्षितानाम्। 'सन्ध्यारुणं प्रा गथ सान्धकारं पश्चान्नभः प्लावितमिन्दुभासा। रेजे विराजः क्रमजृम्भमाणरजस्तमस्स त्वमिवान्तरङ्गम् ॥' इति। विकासाधेयपर्यायो यथा—'प्रथमं कलाभवदथो द्विकं त्रिकं गग नान्तरेऽथ चतुरादितः क्रमात्। अनुवासरं तुहिनदीधितेः कलाः सकला इति प्रकटता मुपाश्रिताः ॥' अलङ्कारसर्वस्वकारस्तु, अधारभूतस्याधेयभूतस्य वानेकस्य संहतासंहतरूपत या द्वैविध्यादाधाराधेयपर्याययोः प्रत्येकं द्वैविध्यमुपवर्णितवान्। तत्रासंहतभेदः पूर्वोदाहर णेषु द्रष्टव्यः। तत्राधाराधेयानामेकधर्मावच्छिन्नत्वाभावात्। द्वितीयो यथा 'निसृष्टरागादधरा न्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्तुकात्। कुशांकुरादानपरिक्षतांगुलिः कृतोऽक्षसूत्रप्र णयी तया करः ॥' अत्र निवृत्त्यपादानतया अधरकन्तुकयोः संहतत्वम्। 'यत्रैव मुग्धेति कृशोदरीति प्रियेति कान्तेति महोत्सवोऽभूत्। तत्रैव दैवाद्वदने मदीये पत्नीति भार्येति गिरश्चरन्ति ॥' अत्रानेकाधेयस्य मुग्धेत्यादिवाक्यरूपस्य महोत्सवत्ववाक्यत्वादिरूपैकधर्मा वच्छिन्नत्वात् संहतत्वमिति। अत्र पर्यायद्वयलक्षणे पर्यायेणेति विशेषणमेकस्याधेयस्य युगपदनेकाधारसंश्रयणरूपे प्रागुक्ते विशेषे एकस्याधारस्य युगपदनेकाधेयसम्बन्धरूपे व क्ष्यमाणसमुच्चये चातिव्याप्तिनिरासायेति द्रष्टव्यम्। तदित्थं सर्वसङ्कलनया पर्यायस्य बहवो भेदाः सम्पन्नाः। प्रथममाधाराधेयगोचरतया द्वैविध्यम्। ततः संहतत्वासंहतत्वाभ्यां प्र त्येकं द्वैविध्याच्चत्वारो भेदाः। ततश्चतुर्णामपि शुद्धत्वसङ्कोचविकासैस्त्रैविध्याद्द्वादशभेदा इति।

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां पर्यायप्रकरणम् ॥५०॥

परिवृत्तिं लक्षयति—**परिवृत्तिरिति**। न्यूनाभ्यधिकयोर्मिथो विनिमयः न्यून

---

१. '**कटाक्षान् शत्रुयोषिताम्।**' इति चन्द्रालोकपाठः।

यथा वा—

'तस्य च प्रवयसो जटायुषस्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्झरकलेबरव्ययात्क्रीतमिन्दुकिरणोज्वलं यशः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे परिवृत्तिप्रकरणम् ॥५१॥

अथ परिसंख्या—

**परिसंख्या निषिध्यैकमेकस्मिन् वस्तुयन्त्रणम् ।**
**स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥**

---

त्यागेनाधिकपरिग्रहः अधिगत्यागेन न्यूनपरिग्रहो वा यः स परिवृत्तिरित्यर्थः । तत्राद्ये उत्तरार्धे ग्रन्थकृदुदाहृतश्च श्लोक उदाहरणम् । अत्र न्यूनगुणस्यैकस्य शरस्य विनश्वरापरिशुद्धकलेबरस्य च प्रहाणेनाधिकगुणजयलक्ष्मीकटाक्षेन्दुकिरणावदातयशःशरीरस्वीकारवर्णनात् । अधिकपरिवृत्तिर्यथा—'किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् । वद प्रदोषे विनिकीर्णतारका निभावरी यद्यरुणाय कल्पते ॥' अत्राधिकगुणाभरणत्यागेन न्यूनगुणवल्कलस्वीकारो वर्णितः । अत्र सर्वस्वकृता 'किञ्चित्प्रहाणेन कस्यचिदुपादानं विनिमय' इति विनिमयो लक्षितः । तस्यायमभिप्रायः । नात्र तान्त्रिकाभिमतः स्वीयस्य परकीयत्वापादनपूर्वकं परकीयस्य स्वीकारलक्षणो विनिमयो विवक्षितः । उदाहरणेषु 'जग्राहैक'मित्यादौ शरादेः स्वीयस्य परकीयत्वापादनाभावात् । रिपुश्रीसम्बन्धि कटाक्षस्वीकारोक्त्या आद्योदाहरणे परकीयस्वीकारसत्त्वेऽपि द्वितीयोदाहरणे यशश्शरीरस्य परकीयत्वाभावेन तदादानांशस्याभावाच्च । 'लास्यं लताभ्यो दत्वासौ मान्द्यभाङ्मलयानिलः ।' इत्यादौ मलयानिलस्य लास्याभावेन लतानां मान्द्याभावेन चांशद्वयस्याप्यभावेनाव्याप्तेश्च । एतेन स्वीयस्य परकीयत्वापादनानुकूलव्यापारमात्रमिह विवक्षितो विनिमयः । 'किमित्यपास्याभरणानी'त्यत्र परकीयत्वापादनाभावेऽपि परकीयत्वापादनानुकूलव्यापाररूपस्याभरणानामपासनस्य सत्त्वादिति निरस्तम् । अतस्तान्त्रिकाभिमतविनिमयासम्भवात् पारिभाषिकविनिमयोत्प्रेक्षणं सर्वोदाहरणसाधारणं सर्वस्वकृतो युक्तमेव । यद्यपि सर्वस्वकारादिभिः 'समपरिवृत्तिरपि । 'सूक्तिमर्पयता सर्वसुमनश्श्रोत्रसीमनि । ह्रियते हृदयं तेषां कवीन्द्रेण यशस्विना ॥' अत्र स्वोक्तिसमर्पणपूर्वकसुमनोहृदयस्वीकारः समेन समस्य विनिमय' इति समपरिवृत्तिरपि लक्षिता । तत्र न्यूनाधिकपरिवृत्त्योरिव विच्छित्तिविशेषाभावात् ग्रन्थकृता सा परित्यक्तेति मन्तव्यम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां परिवृत्तिप्रकरणम् ॥ ५१ ॥

परिसंख्यालङ्कारमाह—**परिसंख्येति** । एकस्मिन्निषिद्ध्यापरत्र नियन्त्रणं परिसंख्येत्यर्थः । उदाहरणे स्नेहक्षयस्याङ्गनास्वान्तेषु निषेधनेन प्रदीपेषु निधानमुपनिबद्धम् । उदाहरणा-

यथा वा—

'विलंघयन्ति श्रुतिवर्त्म यस्यां लीलावतीनां नयनोत्पलानि ।
बिभर्ति यस्यामपि वक्रिमाणमेको महाकालजटार्धचन्द्रः ॥'

आद्योदाहरणे निषेधश्शाब्दः द्वितीये त्वार्थः ॥

इति श्रीमदप्पदीक्षितकृतौ कुवलयानन्दे परिसंख्याप्रकरणम् ॥५२॥

अथ विकल्पः—

**विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता ।**
**सद्यश्शिरांसि चापान्वा नमयन्तु महीभुजः ॥**

अत्र सन्धिविग्रहप्रमाणप्राप्तयोश्शिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्ययोर्विकल्पः ।

---

न्तरमाह—**विलंघयन्तीति** । नन्वत्र नयनोत्पलेषु महाकालजटार्धचन्द्रे च श्रुतिवर्त्मलङ्घनवक्रिमविधिमात्रमेव गम्यते न तु तद्व्यतिरिक्ते तन्निषेध इत्यत आह—**द्वितीये त्विति** । ततश्च 'सर्वं वाक्यं सावधारण'मिति न्यायेन नयनोत्पलान्येव 'विलङ्घयन्ती'त्यादिरूपेणावधारणगर्भवाक्यार्थलाभादितरत्र तन्निषेधप्रतीतेरार्थीयं परिसंख्येति नोक्तदोष इति भावः। इत्थं च परिसंख्यायाः शाब्दत्वार्थत्वाभ्यां द्वैविध्यं द्रष्टव्यम् । अस्याः प्रश्नपूर्वकत्वतदभावाभ्यां द्वैविध्यं प्राचीनैरुदाहृतमपि विच्छित्तिविशेषाभावाद्ग्रन्थकृतोपेक्षितम् । अस्याः श्लेषानुप्राणितत्वे अत्यन्तचमत्कारिता । यथा अत्रैव मूलोदाहरणे स्नेहश्रुतिवर्त्मशब्दश्लेषेणात्यन्तचारुता प्रतीयत इत्यवधेयम् । एषूदारणेषु उभयत्र प्रसिद्धसम्बन्धस्य एकत्र विधानेन अन्यत्र वर्जनं प्रतिपादितम् । क्वचित्तु एकत्रप्रसिद्धसम्बन्धस्यापि वस्तुनस्तस्मिन् धर्मिणि विधानेन तत्प्रसिद्धिशालिनि धर्म्यन्तरे तत्प्रतिषेधः प्रतिपाद्यते । यथा 'याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य । तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥' अत्र द्रुमगिरिसमुद्राणामेवात्यन्तभूभारता प्रसिद्धा, न तु याचकावमतिकारिणो जनस्य। अत्र च श्लोके तादृशजनेऽत्यंतभारत्वविधिः द्रुमादिषु तन्निषेधश्चेति उक्तपरिसंख्याभेदो व्यक्तः। पर्यस्तापह्नुतिरस्या एव भेद इत्यपह्नुतिप्रकरणे प्रतिपादितं न विस्मर्तव्यमिति दिक् ॥

इति कुवलयानंदटीकायां रसिकरञ्जन्यां परिसंख्याप्रकरणम् ॥ ५२ ॥

विकल्पालङ्कारं लक्षयति—**विकल्पेति** । तुल्यबलप्रमाणप्रापितयोः परस्परनिरपेक्षयोर्विरुद्धयोः पाक्षिकान्यतरप्राप्तिसापेक्षान्यतरप्रतिक्षेपो विकल्प इत्यर्थः । उदाहरणे प्रत्यर्थिराजविषये संधिविग्रहप्रमाणप्राप्तयोरत एव तुल्यबलयोर्युगपदसम्भवितोः शिरोधनुर्नमनयोः

---

१. '**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः । कान्ताचित्तेऽधरे वापि कुरु त्वं वीतरागताम्** ॥' इति पाठः ।

यथा वा—

'पतत्यविरतं वारि नृत्यन्ति च कलापिनः ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥'

अत्र प्रियसमागमश्चेन्न मरणमाशंसनीयम् । मरणे तु न प्रियसमागमसम्भव इति तयोराशंसायां विकल्पः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विकल्पप्रकरणम् ॥५३॥

अथ समुच्चयः—

**[1]बहूनां युगपद्भावभाजां गुम्भः समुच्चयः ।**
**नश्यन्ति पश्चात्पश्यन्ति भ्रश्यन्ति च तव द्विषः ॥**

अविरोधेन सम्भावितयौगपद्यानां नाशादीनां गुम्भनं समुच्चयः ।

---

पाक्षिकान्यतरप्राप्त्यनुपमर्देनान्यतरप्रतिक्षेपलक्षणस्य विकल्पस्य वर्णनाल्लक्षणानुगमः स्फुटः । न चात्र विकल्पबोधकशब्दाभावः । वाशब्दस्यैव परस्परप्रतिक्षेपार्थकस्य सत्त्वात् । न च सन्देहालङ्काराभेदः । तत्र तुल्यबलप्रमाणप्रापितत्वाभावात् । 'जीवनग्रहणे नम्रा' इत्यादौ औत्प्रेक्षिकतया तत्सद्भावेऽपि सर्वात्मनान्यतरपक्षे अन्यतरस्य तिरस्कारेण पाक्षिकान्यतरसम्प्राप्तिमपेक्ष्यान्यतरप्रतिक्षेपस्य तत्र वाकारार्थत्वाभावात् । अत एव व्रीहिभिर्वा यवैर्वा यष्टव्य'मिति सन्देहेन प्रश्ने 'व्रीहिभिर्वा यवैर्वा यष्टव्य'मिति प्रश्नवाक्यसमाकारं प्रश्नहेतुसन्देहनिवारकतया निर्णयजनकं दृश्यते । प्रश्नवाक्ये हि प्रश्नहेतुसन्देहविषयस्य सर्वात्मना परस्परप्रतिक्षेपस्य वाकारेण प्रतिपादनम् । उत्तरवाक्ये तुल्यबलप्रमाणप्रापितत्वमभिप्रेत्य पक्षेऽन्यतरप्राप्तिसापेक्षान्यतरप्रतिक्षेपो वाकारेण स्पृश्यत इति स्पष्टस्तयोर्भेदः । उदाहरणान्तरमाह—**पततीति** । ननु, कान्तकृतान्तयोर्दुःखान्तकारित्वे कथं विरोधः, येन विकल्पः स्यादित्यत आह—**प्रियसमागम इति** । तथा च प्रियसमागममरणाशंसयोः परस्परविरुद्धयोर्विकल्पः । स च न यद्यप्याहत्य शब्देन प्रतिपादितः । तथापि कान्तकृतान्तयोः पाक्षिकदुःखान्तकारित्वोक्त्या गम्यत इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विकल्पप्रकरणम् ॥ ५३ ॥

समुच्चयं लक्षयति—**बहूनामिति** । अनेकेषां सम्भवद्युगपद्भावानामेकत्र निबन्धनं समुच्चयः । स च गुणानां क्रियाणां वा व्याससमासाभ्यां सम्भवतीति त्रिविधोऽयं सम्पन्न इति भावः । तत्र क्रियासमुच्चयमुदाहरति—**नश्यन्तीति** । केचित् द्विषो नश्यन्ति । तदानीमन्ये पृष्ठतः पश्यन्ति, पलायनायेति भावः । भ्रश्यन्ति राज्याद्भ्रश्यन्तीति

---

१. चन्द्रालोके तु '**भूयसामेकसम्बन्धभाजाम्**' इति प्रथमपादपाठः ।

यथा वा—

'बिभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं
शल्यं यद्विदधाति सा विधुरिता साधो! तदाकर्ण्यताम् ।
शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेङ्खति
भ्राम्यत्युल्लुठति प्रणश्यति गलत्युन्मूर्छति त्रुट्यति ॥'

अत्र कासाञ्चित्क्रियाणां किञ्चित्कालभेदसम्भवेऽपि शतपत्रपत्रशतभेदन्यायेन यौगपद्यं विरहातिशयद्योतनाय विवक्षितमिति लक्षणानुगतिः ।

**अहंप्रथमिकाभाजामेककार्यान्वयोऽपि सः ।**
**कुलं रूपं वयो विद्या धनं च मदयन्त्यमुम् ॥**

यत्रैकः कार्यसिद्धिहेतुत्वेन प्रक्रान्तस्तत्रान्येऽपि यद्यहमहमिकया खलेकपोतन्यायेन तत्सिद्धिं कुर्वन्ति सोऽपि समुच्चयः । यथा मदे आभिजात्यमेकं समग्रं कारणम् । तादृगेव रूपादिकमपि तत्साधनत्वेनावतरतीति ।

यथा वा—

---

नाशादिक्रियाणामत्र युगपद्भवन्तीनां निबन्धनात्क्रियासमुच्चयः । उदाहरणान्तरमाह—**बिभ्राणेति** । नन्वत्र शयनप्रेङ्खणादीनां कालभेदेनोत्पत्तेर्यौगपद्यासम्भवात्कथं समुच्चय इत्यत आह—**अत्रेति** । तथा च कालभेदः सन्नपि विरहातिशयव्यञ्जनाय यौगपद्यस्यैव विवक्षिततया न विवक्षित इति नोक्तदोष इति भावः । गुणसमुच्चयो यथा—'तव यशसा रविवर्मन्नतिशयितययातिनहुषभरतेन । अखिलमपि भुवनमासीत्सुरभि च धवलं च रक्तं च ॥' अत्र सौरभादीनां गुणानां समुच्चयः । उभयसमुच्चयो यथा—'न्यञ्चत्कुञ्चितमाञ्चितं हसितवत्साकूतमाकेकरं व्यावृत्तं प्रसरत्प्रसादि मुकुलं सप्रेमकम्पस्थिरम् । उद्भ्रु भ्रान्तमपाङ्गवृत्तिरुचिरं मज्जत्तरङ्गोत्तरं चक्षुः साश्रु च वर्तते रसवशादेकैकमन्याक्रियम् ॥' अत्राकेकरत्वादयो गुणाः । न्यञ्चनाकुञ्चनादयः क्रिया इति उभयेषां समुच्चयः । अथापरं समुच्चयप्रकारं लक्षयति—**अहंप्रथमिकेति** । अहं प्रथमः अग्र्यः । अहम्प्रथमं प्रवृत्त इत्यर्थः । अहं प्रथम इत्यस्य भावः अहम्प्रथमिका । तच्छालिनामित्यर्थः । ततश्च बहूनां कारणानामन्योन्यमहमहमिकया युगपदेककार्यसाधनाय व्यापारो द्वितीयः समुच्चयः । **खलेकपोतिकेति** । यथा खले विद्यमानधान्यग्रहणाय युगपत्कपोताः पतन्ति तन्न्यायेनेत्यर्थः । तत्सिद्धिं कार्यसिद्धिं । उदाहरणे लक्षणं योजयति—**यथा मद इति**[1] मदलक्षणे कार्ये आभिजात्यादिकमेकैकं पुष्कलं कारणम् । तथाभूतानां तेषां परस्परस्पर्धयैव कार्यसाधनाया-

---

१. अयं भेदः चन्द्रालोके न दृश्यते ।

'प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः
निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः ।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे समुच्चयप्रकरणम् ॥५४॥

अथ कारकदीपकम्—

**क्रमिकैकगतानां तु गुम्फः[1] कारकदीपकम् ।**

वतरणमित्यर्थः । उदाहरणान्तरमाह—**प्रदानमिति** । 'प्रच्छन्न'मित्यनेन दम्भाद्यभावः । 'सम्भ्रमविधि'रित्यनेन गृहागमननिबन्धनसन्तोषातिशयः 'निरुत्सेक' इत्यनेन लक्ष्मीचाञ्चल्याभिसन्धिनिबन्धना विवेकिता । 'अनभिभवगन्धा' इत्यनेन परकीयदोषाभिज्ञानेऽपि तन्निगूहननैपुणी । 'प्रियं कृत्वे'त्यनेन ख्यातिलाभाद्युपाधिवैधुर्यम् । 'सदसी'त्यनेन रहस्युपकृतिकथनेन सदसि मौनकरणे खलता स्यादिति तद्व्यावृत्तिः । 'अत्यन्तासक्ति'रित्यनेन आस्तिकता व्यज्यते । अत्राभिजात्यप्रथनरूपकार्ये प्रच्छन्नप्रदानादेरेकैकस्य धूर्वहतया एकस्मिन् तत्कार्याय प्रवृत्ते इतरेषामपि तत्कार्यसाधनाय परापतनं निबद्धमिति भावः । अत्र प्राञ्चः—शोभनस्य शोभनेन समुच्चयः । अशोभनस्याशोभनेन । शोभनाशोभनस्य शोभनाशोभनेनेति त्रैविध्येन समुच्चयालङ्कारं विभज्य 'अकलङ्कं कुलं भद्रा मूर्तिर्धीः श्रुतिशालिनी । एभिर्नरो मदं याति राजन्नेते तवांकुशाः ॥' अत्रामालिन्येन शोभनस्य मूर्त्यादिभिः शोभनैः सह दर्पशान्तिलक्षणकार्यसम्बन्धाच्छोभनसमुच्चयः । 'प्रदानं प्रच्छन्न'मिति ग्रन्थकारोदाहरणमपि शोभनसमुच्चय एव । 'प्रियो दूरे स्मरः स्वान्ते गाढो रागो नवं वयः । असवो दुस्त्यजा वंशो निर्मलस्तत्सहे कथम् ॥' अत्र दूरत्वादिना अशोभनस्य प्रियतमस्य स्वान्तारूढत्वगाढत्वादिभिरशोभनैर्मदनादिभिः समुच्चयः । नववयःप्रेमादीनां स्वतःशोभनत्वेऽपि विरहिविषयत्वेनाशोभनता ज्ञेया । उभययोगो यथा—'शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।' इत्यादौ अत्र शशिनः स्वतः शोभनतया दिवसधूसरत्वेनाशोभनतया उभयरूपस्य गलितयौवनकामिन्यादिभिस्तादृशैरेव समुच्चय इत्युदाजह्रुः । तदित्थं भेदस्य समाध्यलङ्कारेऽपि सम्भवात् शोभनत्वादिकृतविच्छित्तिविशेषाभावात्, 'संकुचन्ति सरोजानि दिवाकरकरास्तथा ।' इत्यादितुल्ययोगितादौ स्वतःशोभनानां कमलरविकिरणानां सङ्कोचशालितया अशोभनानां च योगादेवं भेदस्य सुलभतया वक्तुं शक्यत्वाच्च ग्रन्थकृतोपेक्षितः ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां समुच्चयप्रकरणम् ॥ ५४ ॥

कारकदीपकं लक्षयति—**क्रमिकेति** । एककारकगतानां क्रमिकाणां नियतक्रम-

1. अयमलङ्कारः चन्द्रालोके नोक्तः । काव्यप्रकाशे तु, दीपकप्रकरणे तद्भेदतया लक्षि-

गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ॥

यथा वा—

'निद्राति स्नाति भुंक्ते चलति कचभरं शोषयत्यन्तरास्ते
दीव्यत्यक्षैर्नचायं गदितुमवसरो[1] भूय आयाहि याहि ।
इत्युद्दण्डैः प्रभूणामसकृदधिकृतैर्वारितान् द्वारि दीना-
नस्मान्पश्याब्धिकन्ये सरसिरुहरुचामन्तरङ्गैरपाङ्गैः ॥'

आद्योदाहरणे श्रुतस्य पान्थस्य कर्तृकारकस्यैकस्य गमनादिष्वन्वयः । द्वितीये त्वध्याहृतस्य प्रभोः कर्तृकारकस्यैकस्य निद्रादिष्वन्वय इत्येकस्यानेकवा-

---

रहितानां गुणक्रियारूपधर्माणां निबन्धनं कारकदीपकमित्यर्थः । अत्र 'धुनोति चासिं तनुते च कीर्ति'मिति समुच्चयेऽतिव्याप्तिः परिहृता 'क्रमिकाणा'मिति विशेषणेन । 'अरुणः प्रथमं पश्चात्कनकाभो निशापतिः । ततो विरहिणिगण्डपाण्डुः पश्चाद्बिसच्छविः ॥' इति पर्याये अतिव्याप्ति'रनियतक्रमाणा'मिति विशेषणेन । अत्रारुण्यादीनां पाठतः क्रमिकत्वेऽपि पौर्वापर्यस्य नियतत्वेन प्रसिद्धतया अनियतक्रमत्वाभावात् । यद्यपीह निबध्यमानानां क्रियाणां प्रकृतत्वेन सर्वोद्देशेनैव धर्मिणः कारकस्य प्रवृत्तिरतः किञ्चिदुद्देशेन प्रवृत्तस्यान्यत्र प्रासङ्गिकत्वलक्षणदीपकसादृश्याभावान्न दीपकव्यपदेशो युक्तः । तथापि एकस्यानेकान्वयमात्रेण दीपकसादृश्यमाश्रित्य तथा व्यपदेशः । दण्डिना तु कारकदीपकं दीपक एवान्तर्भाव्य तुल्ययोगितामपि तद्भेदत्वेन प्रतिपाद्योदाहृतम् । तथा हि— 'जातिक्रियागुणद्रव्यवाचिना चैकवर्तिना । सर्ववाक्योपकारश्चेत्तमाहुर्दीपकं बुधाः ॥ पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् । स एव नतगात्रीणामङ्गभङ्गाय कल्पते ॥ चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः । चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥ श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः । भुवश्च सुकुमाराभिर्नवशाद्वलराशिभिः ॥ विष्णुना विक्रमस्थेन दानवानां विभूतयः । क्वापि नीताः कुतोऽप्यासन्नानीता दैवतर्द्धयः ॥' इति दीपकलक्षणं सोदाहरणं प्रपञ्चितम् । अत्र प्रथमोदाहरणे कारकदीपकं चतुर्थे च स्पष्टम् । द्वितीयतृतीययोस्तुल्ययोगिता च स्पष्टा । अतः प्रागुक्तायास्तुल्ययोगितायाः कारकदीपकस्य च दीपकभेदत्वमेवेति । तुल्ययोगितां तु 'गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता ।' इति ग्रन्थकृदुक्तामेवानुमेने । इयांस्तु विशेषस्तेनोक्तः । प्रकृताप्रकृतयोरेकधर्मान्वयनिबन्धनस्य स्तुतिनिन्दान्यतरपर्यवसायिनस्तुल्ययोगितात्वमिति । 'यमः कुबेरो वरुणः सहस्राक्षो भवानपि । बिभर्त्यनन्यविषयां लोकपाल इति श्रुतिम् ॥' 'सङ्गतानि मृगाक्षीणां तः । इति वेद्यम् ।

---

1. 'अवसरस्सायमायाहि याहि' इति पाठान्तरम् ।

क्यार्थान्वयेन दीपकच्छायापत्त्या कारकदीपकं प्रथमसमुच्चयप्रतिद्वन्द्वीदम् ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे कारकदीपकप्रकरणम् ॥५५॥

अथ समाधिः—

**समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः ।**
**उत्कण्ठिता च तरुणी जगामास्तं च भानुमान् ॥**

यथा वा—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥

केन चिदारिप्सितस्य कार्यस्य कारणान्तरसन्निधानाद्यत्सौकर्यं तत्सम्यगाधानात्समाधिः । द्वितीयसमुच्चयप्रतिद्वन्द्वी अयं समाधिः । तत्र हि बहूनां प्रत्येकं समर्थानां खलेकपोतिकान्यायेन युगपत्कार्यसाधनार्थमवतारः । अत्र त्वेकेन कार्ये समारिप्सितेऽन्यस्य काकतालीयन्यायेनापतितस्य तत्सौकर्याधायकत्वमात्रम् । अत्रोदाहरणमुत्कण्ठितेति । उत्कण्ठैव प्रियाभिसरणे पुष्कलं का-

---

टिद्विलसितान्यपि । क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥' इति तदुदाहरणयोः स्तुतिनिन्दापर्यवसानं स्फुटीकृतम् । 'गच्छत्यागच्छती'त्याद्युत्तरो ग्रन्थः स्पष्टः । **प्रथमेति** । तत्र बहूनां धर्माणां यौगपद्येन क्रमिकत्वाभावात्तत्प्रतिद्वन्द्वि कारकदीपकमित्यर्थः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां कारकदीपकप्रकरणम् ॥ ५५ ॥

समाधिं लक्षयति—**समाधिरिति** । कारिकां व्याचष्टे—**केनचिदिति** । कारणेनेति शेषः । **कारणान्तरेति** । दैवादुपस्थितस्य कारणान्तरस्य सन्निधानादित्यर्थः । 'दैवादुपस्थितस्ये'त्यनुपादाने द्वितीयसमुच्चये एकेन कारणेन प्रक्रान्तस्य अहंपूर्विकया समकक्ष्यत्वेन कारणान्तरसन्निधेः सत्वादतिव्याप्तिः । तदुपादाने तत्रैकस्यैव पुष्कलं कार्यं प्रति कारणत्वम् । कारणान्तरस्य तु काकतालीयन्यायेन सन्निधानमात्रमिति नोक्तदोष इत्यवधेयम् । **सौकर्यमिति** । अनतिप्रयत्नेनेत्यर्थः । समाधिशब्दस्यान्वर्थतामाह—**सम्यगिति** । कार्यकारणसम्बन्धस्येति शेषः । कार्यसम्बन्धस्य कारणान्तरसन्निधिना सम्यगतिप्रयत्नं विना आधानान्निष्पादनादित्यर्थः । **द्वितीयेति** । अनेन दैवादापतितेति कारणान्तरविशेषणप्रयोजनं प्रागुक्तं व्यक्तीकृतमिति भावः । एतदेवोपपादयति—**तत्र हीति** । उदाहरणं व्याचष्टे—**उत्कण्ठितेति** । कारणान्तरोपेक्षामेव लौकिकन्यायो-

---

१. चन्द्रालोके '**उत्कण्ठितां च कलयन्**' इति तृतीयपादपाठः ।

रणं नान्धकारागमनमपेक्षते। 'अत्यारूढो हि नारीणामकालज्ञो मनोभव' इ-ति न्यायात् दैवादापतता त्वन्धकारेण तत्सौकर्यमात्रं कृतमिति । एवं द्वितीयोदाहरणेऽपि योज्यम् ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे समाधिप्रकरणम् ॥५६॥

अथ प्रत्यनीकम्—

**प्रत्यनीकं बलवतश्शत्रोः पक्षे पराक्रमः ।**
**जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ ॥**

यथा वा—

'मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयस्सुतरां क्षिणोति खलु तां मदनः ॥'

एवं बलवति प्रतिपक्षे प्रतिकर्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेन फलति ।

यथा वा—

'मधुव्रतौघः कुपितस्स्वकीयमधुप्रपापद्मनिमीलनेन ।

---

दाहरणेन द्रढयति—**अत्यारूढ इति** । **एवमिति** । द्वितीयोदाहरणे हि कामिनीमाननिरसने पुष्कलं कारणं पादपतनमेव, न तु तत्र तस्य घनगर्जिताद्यपेक्षा । तदभावेऽपि पादपतनमात्रेण माननिवृत्तेः । तत्र दैवादापतता तु तेन तस्यानतिप्रयत्नतामात्रमिति भावः । तदे'वोपकाराये'त्यनेन स्फुटीकृतम् ॥

इति कुवलयानन्दटीकायां रासिकरञ्जन्यां समाधिप्रकरणम् ॥ ५६ ॥

प्रत्यनीकालङ्कारं लक्षयति—**प्रत्यनीकमिति** । यत्र बलवतः प्रतिपक्षस्य प्रतीकारः कर्तुमशक्यः तदीयस्य बाधनं प्रत्यनीकम् । अनीकस्य सैन्यस्य प्रतिनिधिः प्रत्यनीकम् । यथा अनीके निग्राह्ये तत्रासामर्थ्यात्तत्प्रतिनिधिभूतमन्यत्तिरस्क्रियते तद्वदिहापि साक्षात्प्रतिपक्षनिराकरणासमर्थस्य दुर्बलतदीयतिरस्करणमिति सादृश्यात्प्रत्यनीकमन्वर्थं नामेति भावः । उदाहरणे उत्पलतिरस्कारकयोर्नेत्रयोरुत्पलपरिपन्थितया तद्बाधनासमर्थाभ्यामवतंसीकृताभ्यामुत्पलाभ्यां स्वप्रतिपक्षनेत्रानुगतयोः कर्णयोः'अधःकृता'विति श्लेषेण तिरस्कारवर्णनाल्लक्षणानुगतिः स्फुटा । एवमुत्तरोदाहरणेऽपि लक्षणं योजनीयम् । अथापरं प्रत्यनीकप्रकारमाह—**एवमिति** । बलवत्परिपन्थिबाधनासमर्थस्य तदीयबाधनं प्रत्यनीकं चेत्साक्षात्तत्रैव पराक्रमकरणं कैमुतिकन्यायेन प्रत्यनीकं भवत्येवेति भावः । उदाहरति—**मधुव्रतौघ इति** । अत्र मधुव्रतौघस्य चन्द्रस्तावत्तदीयमधुप्रपातवर्त्मपितपद्मनिमीलनकर-

बिंबं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के ध्रुवमातनोति ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे प्रत्यनीकप्रकरणम् ॥५७॥

अथ काव्यार्थापत्तिः—

[1]**कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते ।**
**स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥**

अत्र 'स' इत्यनेन पद्मानि येन जितानीति विवक्षितम् । तथा च सोऽपि येन जितस्तेन पद्मानि जितानीति किमु वक्तव्यमिति दण्डापूपिकान्यायेन पद्मजयरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः । तान्त्रिकाभिमतार्थापत्तिव्यावर्तनाय काव्येति विशेषणम् ।

---

णेन मधुपानविघटनात्परिपन्थीति तदीयं बिम्बमेव बलादाकृष्य तत्र स कलङ्कमादधातीति वर्णनद्वयमपि प्रत्यनीकभेद इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां प्रत्यनीकप्रकरणम् ॥ ५७ ॥

अर्थापत्तिं लक्षयति—**कैमुत्येनेति** । यत्र कस्यचित् दुष्करस्यार्थस्य सिद्धौ सुकरस्यान्यस्य सिद्धिर्भवतीति किमु वक्तव्यमिति कैमुतिकन्यायेन सामर्थ्यादर्थान्तरापतनं सा अर्थापत्तिरित्यर्थः । उदाहरणे लक्षणयोजनेन कारिकां विवृणोति—**अत्रेति** । स इति चन्द्रविशेषणेन पद्मजेतृत्वरूपो विशेषश्चन्द्रमसि लभ्यते । तस्य च कैमुतिकन्यायोत्थापनेन सफलतेति भावः । तदेव स्पष्टयति—**तथा चेति** । **दण्डापूपिकेति** । दण्डापूपयोर्भावः दण्डापूपिका । 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति वुञ् । न च वुञो ञित्वादादिवृद्धिप्रसङ्गः । पृषोदरादित्वेनाहमहमिकेत्यादाविव वृद्ध्यभावोपपत्तेरिति केचित् । अन्ये तु दण्डापूपौ विद्येते यस्यां नीतौ अर्थान्तरनिष्पत्तौ न्यायसाम्यादर्थान्तरापतनरूपायां नीतौ दण्डापूपौ निदर्शनत्वेन विद्येते सा नीतिर्दण्डापूपिकेति मत्वर्थीयोऽ'त इनिठनौ'विति ठन्नित्याहुः । अपरे तु दण्टापूपाविव दण्डापूपिकेति 'इवे प्रतिकृतौ'वित्यधिकारविहितेन संज्ञायां कन्नित्यनेन कन्प्रत्ययः । न च दण्डापूपशब्दस्यासंज्ञात्वान्न ततः कन्प्रत्ययप्राप्तिरिति शङ्क्यम् । दण्डापूपिकाशब्दस्य दण्डापूपसदृशार्थविशेषसंज्ञात्वविवक्षया तत्प्रवृत्तिसम्भवादित्याहुः । ततश्च मूषिकाकर्तृकदण्डभक्षणेन तत्सहभाव्यपूपभक्षणमर्थादायातम् । अयं न्यायो दण्डापूपिकाशब्देनोच्यते । एवं च यथा दण्डभक्षणात् अपूपभक्षणं कैमुतिकन्यायेनायातं तद्वत् कस्य चिदर्थस्य निष्पत्तौ तत्सन्निधिवर्तित्वलक्षणसामर्थ्यादर्थान्तरापतनं स दण्डापूपिकान्याय इत्यर्थः । काव्यपदव्यावर्त्यमाह—**तान्त्रिकेति** । वाक्यविदाभिमतेत्यर्थः ।

---

१. चन्द्रालोके तु '**अर्थापत्तिः स्वयं सिद्ध्येत्पदार्थान्तरवर्णनम्**' इति पूर्वार्धपाठः ।

यथा वा—

'अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः ।
अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ॥'
'त्वदीयहृदयं भित्त्वा निर्गतौ यौ पयोधरौ ।
हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे काव्यार्थापत्तिप्रकरणम् ॥५८॥

अथ काव्यलिङ्गम्—

**समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं ।**
**जितोऽसि मन्द! कन्दर्प! मच्चित्तेऽस्ति त्रिलोचनः ॥**

अत्र कन्दर्पजयोपन्यासो दुष्करविषयत्वात्समर्थनसापेक्षः । तस्य मच्चित्तेऽस्ति त्रिलोचन' इति स्वान्तःकरणे शिवसन्निधानप्रदर्शनेन समर्थनं काव्यलिङ्गम् । व्याप्तिपक्षधर्मतादिसापेक्षनैय्यायिकाभिमतलिङ्गव्यावर्तनाय काव्यविशेषणम्।

---

उदाहरणान्तरमाह—**अधरोऽयमिति** । अत्र बन्धुजीवशब्दश्लेषेण कैमुतिकन्यायोत्थाना-द्विच्छित्तिविशेषः । **त्वदीयेति** । स्पष्टम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अर्थापत्तिप्रकरणम् ॥ ५८ ॥

काव्यलिङ्गं लक्षयति—**समर्थनीयस्येति** । समर्थनसापेक्षस्यार्थस्य समर्थनं हेतु-बलेन प्रत्यायनं यत् तत्काव्यलिङ्गमित्यर्थः । लक्षणं योजयन्नुदाहरणं व्याचष्टे—**अत्रेति** । कन्दर्पजयो हीह साध्यतया निर्दिष्टः । सोऽत्र दुष्करतया असम्भवन् केनचिद्धेतुना साधनमपे-क्षते । तादृशस्य तस्य 'मच्चित्तेऽस्ती'ति स्वान्तःकरणे मन्मथवैरिपरमेश्वरसन्निधानरूपहे-तुप्रदर्शनेन समर्थनं कृतमितीदं काव्यलिङ्गमित्यर्थः । उदाहरणे 'त्रिलोचन' इति विशेष्यं त्वद्दहनानलशालिलोचनवान् परमेश्वरो मद्धृदयेऽस्तीत्यभिप्रायगर्भमिति परिकरांकुरः । त-दुत्थापितं च काव्यलिङ्गमिति तयोः सङ्करः । ननु, लिङ्गेन व्याप्तिपक्षधर्मतावतार्थस्य सम-र्थने न कश्चिद्विच्छित्तिविशेषो धूमादिलिङ्गवदिति नायमलङ्कार इत्यत आह—**व्याप्तीति** । इह हि प्रत्याय्यप्रत्यायकभावे द्वयी गतिः । अप्रतीतसाध्यगोचरः प्रतीतसाध्यगोचर इति । तत्राप्रतीतप्रत्यायने अनुमानम् । प्रतीतगोचरत्वे तु समर्थ्यसमर्थकभाव इति । तत्रालौकि-कतया अस्य विच्छित्तिविशेषसद्भावितया अलङ्कार एव । समर्थ्यसमर्थकभावेऽपि यत्र प-दार्थो हेतुत्वेन निबध्यते । यथा—'नागेन्द्रहस्तास्त्वचिककर्कशत्वा'दिति । न तत्रायमलङ्कारः । यत्र तु उपात्तस्य पदार्थस्यार्थान्तरसमर्थनाय सामर्थ्याद्धेतुतावगतिस्तत्र काव्यलिङ्गम् । यथा

---

१. चन्द्रालोके '**स्यात्काव्यलिंगं वागर्थो नूतनार्थसमर्पकः**।' इति पूर्वार्धपाठः ।

इदं वाक्यार्थहेतुकं काव्यलिङ्गम् ।

पदार्थहेतुकं यथा—

'भस्मोद्धूलन? भद्रमस्तु भवते रुद्राक्षमाले? शुभं
हा सोपानपरम्परे? गिरिसुताकान्तालयालंकृते? ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे ॥'

अत्र मोक्षस्य महामोहत्वमप्रसिद्धमिति तत्समर्थने 'सुखालोकोच्छेदिनी' ति पदार्थो हेतुः । क्वचित्पदार्थवाक्यार्थौ परस्परसापेक्षं हेतुभावं भजतः ।

यथा वा—

'चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि यान्बिभर्ति सा ।
पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छति चामरेण कः ॥'

अत्र चामरस्य दमयन्तीकुन्तलभारसाम्याभावेऽपि 'विदुषी मूर्धनि यान्बिभर्ति से' ति वाक्यार्थः, 'पशुनाप्यपुरस्कृतेने' ति पदार्थश्चेत्युभयं मिलितं हेतुः । क्वचित्समर्थनीयार्थसमर्थनार्थे वाक्यार्थे पदार्थो हेतुः ।

यथा वा—

'वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे? न क्वापि क्वचिदपि भवन्तं प्रणतवान् ।

---

'जितोऽसी'त्यादौ अर्थान्तरन्यासादस्य भेदस्तत्रैव व्यक्तीकरिष्यत इति भावः । अस्य वाक्यार्थपदार्थहेतुकत्वादिकृतनानाभेदान्प्रदर्शयितुमाह—**इदमिति** । 'जितोऽसी'ति श्लोकगतमित्यर्थः । अत्र लक्षणं योजयति—**अत्र मोक्षस्येति** । न चैवमप्रसिद्धमहामोहत्वसमर्थने अनुमानतापत्तिः । व्याप्तिपक्षधर्मताद्युपेतलिङ्गप्रदर्शकावयवाद्यनुपन्यासात्कविप्रौढोक्तिसिद्धतया प्रतीतस्य महामोहत्वस्य समर्थन एव कविसंरम्भादिति भावः । मिलितोभयहेतुकमपीदं, तयोः परस्परापेक्षातदभावाभ्यां द्वैविध्यमभिप्रेत्याह—**क्वचिदिति** । उदाहरणे द्वयोस्सापेक्षतामुपपादयति—**अत्र चामरस्येति** । यद्यपि 'पशुनाप्यपुरस्कृतेने'ति चामरगतत्वेन तद्गतकुन्तलभरसाम्याभावे हेतूभवितुं योग्यः 'विदुषीमूर्धनी'ति वाक्यार्थः तदवृत्तितया कथं तत्र हेतुभावं भजताम् । तथापि साध्यकुन्तलभरसाम्याभावानुप्रविष्टकुन्तलभरगततयोपनिबध्यमानो वाक्यार्थस्तथाविधकुन्तलभरघटितसाम्याभावप्रयोजकतया तत्र हेतुत्वोपपत्तिरित्युभयं मिलितमत्र हेतुरिति भावः । क्वचित्समर्थकवाक्यार्थहेतुभूतः पदार्थस्तद्द्वारा समर्थनीयार्थसमर्थनोपयोगीत्याह—**वपुःप्रादुर्भावादिति** । स्पष्टम् ।

नमन्मुक्तस्संप्रत्यहमतनुरग्रेऽप्यनतिमान्

इतीश? क्षन्तव्यं तदिदमपराधद्वयमपि ॥'

अत्र तावदपराधद्वयमपि समर्थनीयम् । अस्पष्टत्वात् । तत्समर्थनं च पूर्वापरजन्मनोरनुमानाभ्यां वाक्यार्थभूताभ्यां क्रियते । अत्र द्वितीयवाक्यार्थे अतनुत्वमेकपदार्थो हेतुः । अत्रापि 'संप्रति नमन्मुक्त' इति वाक्यार्थोऽनेकपदार्थो वा हेतुः । क्वचित्परस्परविरुद्धयोस्समर्थनीययोरुभयोः क्रमादुभौ हेतुभावं भजतः । यथा—

'असोढा तत्कालोल्लसदसहभावस्य तपसः

कथानां विस्रंभेष्वथ च रासिकश्शैलदुहितुः ।

प्रमोदं वो दिश्यात्कपटवटुवेषापनयने

त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥'

अत्र शिवस्य युगपत्कृत्रिमब्रह्मचारिवेषापनयनत्वरातदनुवर्तनेच्छयोर्विरुद्धयोः क्रमाद्गिरिजातीव्रतपसोऽसहिष्णुत्वं तत्सल्लापकौतुकं चेत्युभौ हेतुत्वेन निबद्धौ । क्वचित्परस्परविरुद्धयोरुभयोस्समर्थनीययोरेक एव हेतुः । यथा—

'जीयादम्बुधितनयाधररसमास्वदयन्मुरारिरयम् ।

अम्बुधिमथनक्लेशं कलयन् सुफलं च विफलं च ॥'

अत्र सफलत्वविफलत्वकलनयोरुभयोर्विरुद्धयोरेक एवांबुधितनयाधररसास्वादो हेतुः । इदं काव्यलिङ्गं हेत्वलङ्कार इति केचिद्व्याजह्रुः ।

'हे गोदावरि? देवि? तावकतटोद्देशे कलिङ्गः कवि-

वाग्देवीं बहुदेशदर्शनसखीं त्यक्त्वा विरक्तिं गतः ।

---

यथासंख्यालङ्कारसङ्कीर्णतयाऽस्य चारुतेत्याह—**क्वचिदिति** । उदाहरति—**असोढेति** । अत्र क्रमनिर्दिष्टयोः वटुवेषपरित्यागत्वरातच्छिथिलीकरणयोः परस्परविरुद्धयोः पार्वतीतीव्रतपोऽसहनं तदीयरहस्सल्लापरसिकत्वं चेति क्रमनिर्दिष्टौ पदार्थौ हेतुभावं भजत इति भावः । क्वचिदेकस्यैव विरुद्धोभयसमर्थकत्वमित्याह—**एक एवेति** । उदाहरणे उक्तभेदमुदाहरति—**अत्र सफलत्वेति** । अम्बुधितनयाधररसास्वादालम्बनलक्ष्मीप्राप्तिहेतुत्वेन प्राप्तलक्ष्मीकस्य ततोऽमृतप्राप्तिपर्यन्ततदनुवर्तनक्लेशस्य तत्फलामृतास्वादसाध्यफलस्य ततोऽप्यतिशयिताधररसास्वादेन सिद्धतया विफलत्वस्य चाधररसास्वादेनैकेन समर्थनादुक्तभेदोदाहरणं युक्तमिति भावः । अत्र जयदेवमतं तदभिमतोदाहरणोपन्यासपूर्वकं दर्शयति—**हे गोदाव-**

एनामर्णवमध्यसुप्तमुरभिन्नाभीसरोजासनं
ब्रम्हाणं गमय क्षितौ कथमसावेकाकिनी स्थास्यति ॥'

इत्यत्र ब्रम्हणः प्रापणं कथं गोदावर्या कर्तव्यमित्यसम्भावनीयार्थोपपादकस्यार्णवमध्येत्यादितद्विशेषणस्य न्यसनं श्लेषाख्यो गुण इति ।

'श्लेषोऽविघटमानार्थघटकार्थस्य वर्णनम् ।'

इति श्लेषलक्षणमिति च जयदेवेनोक्तम् । वस्तुतस्त्वत्रापि पदार्थहेतुकं काव्यलिङ्गमेव । तद्भेदकाभावात् । ननु, साभिप्रायपदार्थवाक्यार्थविन्यसनरूपात्परिकरात्काव्यलिङ्गस्य किं भेदकम् । उच्यते । परिकरे पदार्थवाक्यार्थबलात्प्रतीयमानोऽर्थो वाच्योपस्कारकतां भजते । काव्यलिङ्गे तु पदार्थवाक्यार्थावेव हेतुभावं भजतः । ननु, यद्यपि सुखालोकोच्छेदिनी'त्यादिपदार्थहेतुककाव्यलिङ्गोदाहरणे 'अग्रेऽप्यनतिमा' नित्यादिवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे च पदार्थवाक्यार्थावेव हेतुभावं भजतः । तथापि

---

**रीति** । तामालम्ब्य विलीय महीपालस्थानेषु निजवैदुषीख्यापनेन कीर्त्यादिलाभाद्वाग्देव्याः बहुदेशदर्शनसखीत्वकल्पनम् । अत्र तदीयाघटमानार्थघटकविशेषणविन्यासः श्लेषरूपो गुण इति लक्षणकथनपूर्वकं तद्रीत्या श्लेषमुपपादयति—**इत्यत्रेति**। **वस्तुतस्त्विति**। अर्णवमध्येत्यादिपदार्थस्य ब्रह्मसमीपप्रापणरूपार्थे हेतुत्वेन काव्यलिङ्गमेव युक्तम् । 'जितोऽसी'त्याद्युदाहरणेषु उक्तश्लेषासम्भवेन काव्यलिङ्गस्याप्रतिहतत्वात् । इहोदाहरणे सङ्करोपपत्तेः । काव्यप्रकाशकारादिभिरर्थगतवैचित्र्यरूपतयास्य गुणत्वाभावस्य समर्थितत्वाच्चेति भावः । **साभिप्रायेति** । 'जितोऽसी'त्याद्युदाहरणे साभिप्रायविशेष्यविशेषणविन्यसनस्य स्पष्टत्वान्न ततोऽस्य भेदस्सम्भवति। परिकरविविक्तविषयाभावादिति भावः । 'परिकरा'दित्युपलक्षणम् । परिकरांकुरादपीति द्रष्टव्यम् । समाधत्ते—**परिकर इति** । तत्र हि 'सुधांशुकलितोत्तंस' इत्यादौ विशेषणबलात्प्रतीयमानस्य तापनिवारकामृतकिरणसन्निधानस्य तापहरणरूपवाच्योपस्कारकता, न तु पदार्थवाक्यार्थयोस्तत्र उपकारता । अतस्तत्र काव्यलिङ्गासम्भवात् परिकर एव युक्तः । काव्यलिङ्गे तु पदार्थवाक्यार्थयोरेव हेतुत्वं न तु प्रतीयमानार्थापेक्षा । 'सुखालोकोच्छेदिनि' 'अग्रेऽप्यनतिमा'नित्यादिप्रदर्शितपदार्थवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे च सुखालोकोच्छदित्वोत्तरकालानमनरूपाभ्यां पदार्थवाक्यार्थाभ्यामेव प्रतीयमाननैरपेक्ष्येण वाच्यार्थसमर्थनादुभयोर्विविक्तविषयतया भेदस्सम्भवतीति भावः । ननु, उक्तकाव्यलिङ्गोदाहरणयोः परिकरविविक्तविषयसम्भवेऽपि उदाहरणान्तरे प्रतीयमानार्थसद्भावेन तस्य वाच्यार्थहेतुभावसम्भवात्तत्र परिकर एव युक्त इति पुनरशङ्कते—**नन्वि-**

'पशुनाप्यपुरस्कृतेने'ति पदार्थहेतुकोदाहरणे 'मच्चित्तेऽस्ति त्रिलोचन' इति वाक्यार्थहेतुकोदाहरणे च प्रतीयमानार्थस्यापि हेतुकोव्यनुप्रवेशो दृश्यते । 'पशुने' ति ह्यविवेकित्वाभिप्रायगर्भम् । 'विदुषी' त्यस्य प्रतिनिर्दे- श्यत्वात् । 'त्रिलोचन' इति च कन्दर्पदाहकतृतीयलोचनत्वाभिप्रायगर्भम् । कन्दर्पजयोपयोगित्वात्तस्य । सत्यं, तथापि न तयोः परिकरांकुर एव । किं तु तदुत्थापितं काव्यलिङ्गमपि । प्रतीयमानाविवेकित्वविशिष्टेन पशुनाप्यपुर- स्कृतत्वस्यानेकपदार्थस्य प्रतीयमानकन्दर्पदाहकभावतृतीयलोचनाविशिष्टस्य शिवस्य चित्ते सन्निधानस्य वाक्यार्थस्य च वाच्यस्यैव हेतुभावात् । न हि तयोर्वाच्ययोर्हेतुभावे ताभ्यां प्रतीयमानं मध्ये किञ्चित् द्वारमस्ति । यथा 'सर्वाशुचिनिधानस्ये' त्यादिपदार्थपरिकरोदाहरणे 'सर्वाशुचिनिधानस्ये' त्या- दिनानेकेन पदार्थेन प्रतीयमानं शरीरस्यासंरक्षणीयत्वम् । यथा च वाक्यार्थ- परिकरोदाहरणेऽपि पर्यायोक्तविधया तत्तद्वाक्यार्थेन प्रतीयमानं 'नाहं व्यास' इत्यादि । 'तस्मात्पशुने' त्यत्र 'त्रिलोचन' इत्यत्र च प्रतीयमानं वाच्यस्यैव पदार्थस्य वाक्यार्थस्य च हेतुभावोपपादकतया काव्यलिङ्गस्याङ्गमेव । यथा

ति । एतदेव प्रतीयमानार्थस्य हेतुत्वप्रदर्शनेनोपपादयति—**पशुनेति हीति** । उक्तरी- त्या विविक्तविषययोरनयोरुक्तोदाहरणयोस्सङ्करोपपत्त्या न परिकरपरिशेषणेन काव्यलिङ्गनि- रसनं सम्भवतीति परिहरति—**तथापीति** । ननु, परिकरे वाच्यस्य हेतुत्वसद्भावात्तत्रा- पि काव्यलिङ्गमेव स्यादिति परिकरोच्छेद एव स्यादित्यत आह—**न हीति** । काव्यलिङ्ग- योः पदार्थवाक्यार्थयोः प्रतीयमानद्वारापेक्षतां विनापि साक्षादेव हेतुत्वम् । उदाहरणे तथैवा- वगतेः । परिकरे तु प्रतीयमानं द्वारीकृत्यैव वाच्यस्य हेतुत्वम् । 'सुधांशुकलितोत्तंसः' 'स- र्वाशुचिनिधानस्ये'त्यादौ तथैव दर्शनादिति भावः । ततश्च प्रतीयमानस्य काव्यलिङ्गोदाहर- णे वाच्यार्थहेतुभावोपपादकतया काव्यलिङ्गाङ्गत्वमेव । न तेनास्यान्यथासिद्धिः । न चैवं प्रतीयमानस्य वाच्यार्थद्वारत्वानुपपत्तिः । द्वारत्वं हि नात्र तज्जन्यत्वलक्षणं चक्षुरादौ सं- योगादेरिव । किं तु आरुण्यादेरेकहायन्यादिसापेक्षत्ववद्वाच्यस्य प्रतीयमानसापेक्षमेव हेतुत्व- मिति । यस्य हि यत्सापेक्षं हेतुत्वं प्रमाणतोऽवगम्यते तत्तस्य द्वारमिति तल्लक्षणादिति भा-

१. 'परिकर' इति पाठान्तरम् । २. 'हेतुभूतस्य सत्त्वात्' इति पाठान्तरम् ।
३. 'काव्यलिङ्गे हि वाच्ययोः पदार्थयोः पदार्थवाक्यार्थयोः हेतुत्वम्' इति **घ.** पाठः । **ग.** पु- स्तके तु काव्यलिङ्गे हि वाच्ययोः पदार्थवाक्यार्थयोः प्रतीयमानद्वारापेक्षतां विनापि साक्षा- देव हेतुत्वम्' इति पाठः ।

'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवर' मित्यनेकवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे 'त्वन्नेत्रसमानकान्ती' त्यादिकानीन्दीवरशशिहंसविशेषणानि तेषां वाक्यार्थानां हेतुभावोपपादकानीति। तत्र वाक्यार्थहेतुककाव्यलिङ्गे पदार्थहेतुककाव्यलिङ्गमङ्गमिति न तयोः काव्यलिङ्गोदाहरणत्वे काचिदनुपपत्तिः॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे काव्यलिङ्गप्रकरणम् ॥५९॥

अथ अर्थान्तरन्यासः—

**उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयोः ।**
**हनुमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥**
**गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।**
**पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥**

सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थान्तरन्यासः । तयोश्चैकं प्रस्तुतमन्यदप्रस्तुतं भवति । ततश्च विशेषे प्रस्तुते तेन सहाप्रस्तुतसामान्यरूपस्य, सामान्ये प्रस्तुते तेन सहाप्रस्तुतविशेषरूपस्य वार्थान्तरस्य न्यसनमर्थान्तरन्यास इत्युक्तं भवति । तत्राद्यस्य द्वितीयार्धमुदाहरणं, द्वितीय-

---

वः । एतदेवोदाहरणान्तरोपन्यासपूर्वकं विशदयति—**यत्त्वन्नेत्रेति** । अत्र दैवगतं सादृश्यविनोदाक्षमत्वं प्रधानभूतो वाक्यार्थः । पादत्रयप्रतिपाद्यवाक्यार्थाः समर्थकाः । तेषु च प्रतिवाक्यमिन्दीवरशशिहंसविशेषणानि 'त्वन्नेत्रसमानकान्ती'त्यादीनि हेतुभावोपपादकानीति । तत्रानेकवाक्यार्थहेतुककाव्यलिङ्गे पदार्थहेतुककाव्यलिङ्गमङ्गमिति तत्र काव्यलिङ्गवत् 'पशुने'त्यत्रापि प्रतीयमानं वाच्यस्यैव पदार्थस्य वाक्यार्थस्य हेतुभावोपपादकतया काव्यलिङ्गाङ्गत्वमयुक्तमिति तयोः काव्यलिङ्गोदाहरणतायां न कश्चिद्विरोध इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां काव्यलिङ्गप्रकरणम् ॥ ५९ ॥

अर्थान्तरन्यासं लक्षयति—**उक्तिरिति** । यत्र सामान्यविशेषयोः प्रस्तुतयोः युगपदुक्तिरन्यतरेणाप्रस्तुतेन सह तत्रार्थान्तरस्य न्यसनमिति अन्वर्थनामा अर्थान्तरन्यासोऽलङ्कार इत्यर्थः । अत्र 'प्रस्तुताप्रस्तुतयोः सहोक्तिरर्थान्तरन्यास' इत्येतावदुक्तौ प्रस्तुताप्रस्तुतैकधर्मान्वयरूपे दीपके अतिव्याप्तिः । अतः सामान्यविशेषयोरिति । ततश्च विशेषे प्रस्तुते तेन सहाप्रस्तुतस्य सामान्यस्य सामान्ये वा प्रस्तुते तेन सहाप्रस्तुतविशेषस्य उक्तिरिति पर्यवसानादुत्तरः सार्धश्लोकः क्रमेणोदाहरणमित्याह—**तत्राद्यस्येति** । द्वितीयार्धे [illegible]मदब्धि

---

१. चन्द्रालोके तु '**भवेदर्थान्तरन्यासोऽनुषक्तार्थान्तराभिधा** ।' इति पाठः ।

स्य द्वितीयश्लोकः। नन्वयं काव्यलिङ्गान्नातिरिच्यते। तथा हि—उदाहरणद्वयेऽप्यप्रस्तुतयोस्सामान्यविशेषयोरुक्तिः प्रस्तुतयोर्विशेषसामान्ययोः कथमुपकरोतीति विवेक्तव्यम्। न हि सर्वथैव प्रस्तुतानन्वय्यप्रस्तुताभिधानं युज्यते। न तावदप्रस्तुतप्रशंसायामिव प्रस्तुतव्यञ्जकतया। प्रस्तुतयोरपि विशेषसामान्ययोस्स्वशब्दोपात्तत्वात्। नाप्यनुमानालङ्कार इव प्रस्तुतप्रतीतिजनकतया। तद्वदिह व्याप्तिपक्षधर्मताद्यभावात्। नापि दृष्टान्तालङ्कार इव उपमानतया।

'विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः।
वनतरुभंगध्वनिरिव हरिनिद्रातस्करः करिणः॥'

इत्यादिषु सामान्ये विशेषस्योपमानत्वदर्शनेऽपि विशेषे सामान्यस्य क्वचिदपि तददर्शनात्। उपमानतया तदन्वये सामञ्जस्याप्रतीतेश्च। तस्मात्प्र-

---

तरणस्य विशेषस्य प्रस्तुतस्य 'दुष्करं किं महात्मना'मिति अप्रस्तुतस्य सामान्यस्य चोक्तिः 'गुणवद्वस्तुसंसर्गा'दिति द्वितीयश्लोके क्षुद्रस्य गुणवद्वस्तुसंसर्गहेतुकमहत्वापत्तिरूपसामान्यस्य प्रस्तुतस्य पुष्पमालानुषक्तसूत्रशिरोधारणस्याप्रस्तुतविशेषस्योक्तिरिति भावः। आक्षिपति—**नन्विति**। **काव्यलिंगादिति**। वाक्यार्थहेतुककाव्यलिङ्गादित्यर्थः। **उदाहरणद्वयेऽपीति**। हनूमानित्यादिरूप इत्यर्थः। **कथमिति**। प्रस्तुतस्य वर्णनीयतया कविसंरम्भगोचरत्वेन उक्तिसम्भवेऽपि अप्रस्तुतोक्तिः कविसरम्भाविषयतया प्रस्तुतान्वयं विना न सामञ्जस्यमश्नुत इति तदन्वयः कथमप्रस्तुतस्येति निर्धारयितव्यमेवेति भावः। प्रस्तुतान्वयो हि तस्याप्रस्तुतप्रशंसायामिव प्रस्तुतव्यञ्जकतया वा अनुमानालङ्कार इव प्रस्तुतप्रतीतिजनकतया वा दृष्टान्तालङ्कार इव उपमानतया वा। नाद्य इत्याह—**न तावदिति**। तत्र हि क्षुद्रेभ्यो याचनान्निवृत्तमानिपुरुषस्य वृत्तान्तः प्रस्तुतः। तस्य शब्दानुपात्ततया प्रस्तुतचातकवृत्तान्तवर्णनस्य तद्व्यञ्जकतया 'विधाय वैरं सामर्षे' 'अङ्काधिरोपितमृग' इत्यादिसामान्यविशेषनिबन्धनाप्रस्तुतप्रशंसोदाहरणे प्रस्तुतविशेषसामान्यावगमकतया प्रस्तुतसामान्यविशेषाभिधानस्योपयोगसम्भवेऽपि नात्र तत्सम्भवः। अप्रस्तुतस्यापि शब्दनिवेदितत्वादित्यर्थः। न द्वितीय इत्याह—**नाप्यनुमानेति**। तत्र हि व्याप्तिपक्षधर्मतावदप्रस्तुताभिधानं प्रस्तुतप्रतीतिजनकतया 'यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयती'त्यादौ युज्यते। न चेह तादृशाप्रस्तुताभिधानमित्यर्थः। न तृतीय इत्याह—**नापि दृष्टान्तेति**। तत्र हि 'विस्रब्धघातदोष' इत्युदाहरणे सामान्ये विशेषस्योपमानत्वनिबन्धनदर्शनेऽपि विशेषे सामान्यस्योपमानत्वादर्शनात् उपमानोपमेयवाक्यगतविशेषणानां 'त्वमेव कीर्तिमा'नित्यादौ बिम्बप्रतिबिम्बभावेनान्वयवदिह तथान्वये सामञ्जस्याभावाच्चेत्याह—**उपमानतयेति**। इदमुपलक्षणम्। सर्वत्राप्रस्तुतस्य वाच्यतया तद्व्यञ्जकत्वानुपपत्तिरिति प्रथमविकल्पोक्तदूषणम-

स्तुतसमर्थकतयैवाप्रस्तुतस्योपयोग इहापि वक्तव्यः। ततश्च वाक्यार्थहेतुकं काव्यलिङ्गमेवात्रापि स्यान्नत्वलङ्कारान्तरस्यावकाश इति चेत् अत्र केचित् समर्थनसापेक्षस्यार्थस्य समर्थने काव्यलिङ्गं निरपेक्षस्यापि प्रतिभावैभवात्समर्थने अर्थान्तरन्यासः। न हि 'यत्त्वन्नेत्रसमानकान्ती' त्यादिकाव्यलिङ्गोदाहरणेष्विव

'अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततटित्कटाक्षा ।
कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥'
'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैश्शिरसां सतीव ॥'

इत्याद्यर्थान्तरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनसापेक्षत्वमस्तीति। वस्तुतस्तु प्रायोवादोऽयम्। अर्थान्तरन्यासेऽपि हि विशेषस्य सामान्येन समर्थनानपेक्षत्वेऽपि सामान्यं विशेषेण समर्थनमपेक्षत एव। 'निर्विशेषं न सामान्य' मिति न्यायेन 'बहूनामप्यसाराणां संयोगः कार्यसाधकः।' इत्यादिसामान्यस्य 'तृणैरारभ्यते रज्जुस्तया नागोऽपि बध्यते'। इत्यादि सम्प्रतिपन्नविशेषावतरणं विना बुद्धौ प्रतिष्ठितत्वासम्भवात्। न चात्र सामान्यस्य 'कासां न सौ-

---

नुसन्धेयम्। अत एव निदर्शनावत्प्रस्तुतारोपेणाप्रस्तुतोपयोगः। तद्वदिह ऐक्यारोपाभावात्। अतः प्रस्तुतसमर्थकतयैवोपयोगो वाच्य इति वाक्यार्थहेतुककाव्यलिङ्गमित्येव युक्तं न त्वलङ्कारान्तरमभ्युपगन्तुं युक्तमित्यभिप्रेत्याह—**ततश्चेति**। काव्यलिङ्गस्य तु पदार्थहेतुककाव्यलिङ्गोदाहरणे लब्धावकाशत्वान्नानेन तस्यान्यथासिद्धिसम्भव इति भावः। अत्र केषांचित्परिहारमाह—**अत्र केचिदिति**। **समर्थनेति**। अत एव तल्लक्षणे समर्थनीयार्थस्येति समर्थनसापेक्षत्वं तत्रोट्टङ्कितम्। **प्रतिभेति**। निरपेक्षस्यापि कविना स्वप्रतिभाबलेन समर्थने विच्छित्तिविशेषसद्भावात्तदाधायकतया अलङ्कारान्तरमभ्युपेतव्यमिति भावः। एतदेव तत्तदुदाहरणोपन्यासपूर्वकं द्रढयति—**न हीति**। केचिदित्यस्वरसोद्भावनम्। तदेव स्पष्टयति—**वस्तुतस्त्विति**। समर्थनानपेक्षत्वं विशेषस्य प्रस्तुततायामस्तीति सामान्यस्य प्रस्तुतत्वे विशेषेण समर्थनमन्तरा न बुद्धावारोहः सम्भवतीति। अत्रापि समर्थनापेक्षणमस्तीति नैवं काव्यलिङ्गाद्वैलक्षण्यं सम्भवतीति भावः। अर्थान्तरन्यासेऽपि सामान्यस्य विशेषावतरणं विनैव 'कासां न सौभाग्यतुणोऽङ्गनाना'मित्यादौ सामान्यस्य लोकसम्प्रतिपन्नतया बुद्ध्यारोहः सम्भवतीत्याशङ्क्य परिहरति—**न चेति**। सामान्यस्यातिप्रसिद्धस्य विशेषोपन्यासमन्तरेण बुद्ध्युपारोहेऽपि असम्प्रतिपन्नसामान्यस्य विशेषोपन्यासमन्तरेण बुद्ध्यु-

---

१. 'प्रस्तुतकारणतयैव' इति पाठान्तरम्। २ 'शिरसामतीव' इति पाठान्तरम्।

भाग्यगुणोऽङ्गनाना' मित्यादिविशेषसमर्थनार्थसामान्यस्यैव लोकसम्प्रतिपन्नतया विश्लेषावतरणं विनैव बुद्धौ प्रतिष्ठितत्वं सम्भवतीति श्लोके तन्न्यसनं नापेक्षितमस्तीति वाच्यम् । सामान्यस्य सर्वत्र लोकसम्प्रतिपन्नत्वनियमाभावात् । न हि 'यो यो धूमवान् स सोऽग्निमा'निति व्याप्तिरूपसामान्यस्य लोकसंप्रतिपन्नतया 'यथा महानस' इति तद्विशेषरूपदृष्टान्तानुपादानसंभवमात्रेणाप्रसिद्धव्याप्तिरूपसामान्योपन्यासेऽपि तद्विशेषरूपदृष्टान्तोपन्यासनैरपेक्ष्यं संभवति । न चैवं सामान्येन विशेषसमर्थनस्थलेऽपि क्वचित्तस्य सामान्यस्य लोकप्रसिद्धत्वाभावेन तस्य बुद्धावारोहाय पुनर्विशेषान्तरस्य न्यासप्रसङ्ग इति वाच्यम् । इष्टापत्तेः । अत्रैव विषये विकस्वरालङ्कारस्यानुपदमेव दर्शयिष्यमाणत्वात् । किं च । काव्यलिङ्गेऽपि सर्वत्र न समर्थनसापेक्षत्वनियमः । 'चिकुरप्रकरा जयन्ति त' इत्यत्र तदभावादुपमानवस्तुषु वर्णनीयसाम्याभावेन निन्दायाः कविकुलक्षुण्णत्वेनात्र समर्थनापेक्षाविरहात् । न हि 'तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्वणशर्वरीश्वरः ।' इत्यादिषु समर्थनं दृश्यते ।

'न विषेण न शस्त्रेण नाग्निना न च मृत्युना ।
अप्रतीकारपारुष्याः स्त्रीभिरेवं स्त्रियः कृताः ॥'

इत्यादिकाव्यलिङ्गविषयेषु समर्थनापेक्षाविरहेऽप्यप्रतीकारपारुष्या इत्यादिना समर्थनदर्शनाच्च । न हि तत्र स्त्रीणां विषादिनिर्मितत्वाभावप्रतिपादनं

---

पारोहो न सम्भवत्येव । धूमादिलिङ्गेषु 'यो धूमवान् सोऽग्निमानि'त्यादिसामान्यव्याप्तेर्महानसादिविशेषरूपदृष्टान्तोपादानाभावेऽपि बुद्ध्यारोहवद्द्रव्यत्वादिलिङ्गे यद्द्रव्यं तत्संयोगवदिति सामान्यव्याप्त्युपन्यासेऽपि दृष्टान्तनिर्देशं विना न बुद्ध्यारोहस्सम्भवतीत्यभिप्रेत्य परिहरति—**सामान्यस्येति** । **एवमिति** । सामान्यस्य विशेषोपन्यासमन्तरेण बुद्ध्यारोहाभाव इत्यर्थः । **अत्रैवेति** । विशेषे कस्मिंश्चित् प्रस्तुते तत्समर्थनाय निर्दिष्टस्य सामान्यस्याप्रसिद्धौ पुनस्तस्य बुद्धिविश्रान्तये विशेषान्तरनिर्देशस्थल इत्यर्थः । ननु, अर्थान्तरन्यासे समर्थनसापेक्षत्वनियमाभावेऽपि काव्यलिङ्गाद्भेदस्सम्भवत्येव । तस्य समर्थनसापेक्षत्वनियमे सत्येव प्रवृत्तिरत्र तु तदनियम इत्येव तयोर्भेदोपपत्तेरित्यस्वरसादाह—**किं चेति** । तथा च 'तदास्यदास्येऽपी'त्यत्र शारदनिशाकरे मुखसाम्याभावेन निन्दायास्समर्थनानपेक्षत्ववच्चामरे दमयन्तीचिकुरभारसाम्याभावस्य कविसमयप्रसिद्धतया समर्थनापेक्षाभावा-

समर्थनसापेक्षम् । प्रसिद्धत्वात् । तस्मादुभयतो व्यभिचारात्समर्थनापेक्षसमर्थने काव्यलिंगम् । तन्निरपेक्षसमर्थने अर्थान्तरन्यास इति न विभागः । किं तु समर्थ्यसमर्थकयोस्समान्यविशेषसंबन्धेऽर्थान्तरन्यासः । तदितरसंबन्धे काव्यलिंगमित्येव व्यवस्थावधारणीया । प्रपञ्चस्तु चित्रमीमांसायां द्रष्टव्यः । एवमप्रकृतेन प्रकृतसमर्थनमुदाहृतम् ॥

प्रकृतेनाप्रकृतसमर्थनं यथा—

'यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥'

---

त्र तन्नियमानियमाभ्यां तयोर्भेदः सम्भवतीति भावः । उपसंहरति—**तस्मादिति** । विधान्तरेणानयोर्वैधर्म्यमाह—**किं त्विति** । तदितरसम्बन्धे कार्यकारणभावादिरूप इत्यर्थः । अत एव काव्यलिङ्गोदाहरणेषु त्रिलोचनसन्निधानकन्दर्पजययोः समर्थ्यसमर्थकयोः सुधालोकोच्छेदित्वमहामोहयोश्च कार्यकारणभावः स्पष्ट उपलभ्यत इति भावः । अपि च अर्थांतरन्यासे अर्थांतरसमर्थनमेव चमत्कारकारि । अन्यस्य चमत्कारकारिणोऽभावात् । अत एव समर्थ्यसमर्थकभावद्योतकहिशब्दोपादानानुपादानाभ्यां समर्थकपूर्वोपन्यासानन्तरोपन्यासाभ्यामस्य भेदान्तरं सम्भवतीति भट्टोद्भटः प्रतिपादयाम्बभूव । काव्यलिङ्गे वाक्यार्थहेतुके नैवंविधो भेदः सम्भवतीति तयोर्वैलक्षण्यम् । अपि चार्थान्तरन्यासे प्रस्तुतत्वाप्रस्तुतत्वकृतो विशेषस्समर्थ्यसमर्थकयोरस्ति, न तु काव्यलिङ्गे । 'जितोऽसी'त्यादौ दुर्जयकन्दर्पजयोपयोगितया तद्वैरिशिवसन्निधानस्यापि वर्णनीयत्वात् । किं च साधर्म्यवैधर्म्याभ्यां समर्थ्यसमर्थकभावेऽपि अर्थान्तरन्यासः सम्भवति । यथा 'अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेरितम् । त एव धन्यास्सुहृदां पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥' अत्रायुःकर्तृकापराधाक्षिप्तस्याधन्यत्वस्यायुर्विरोधिक्षयप्रयुक्तं धन्यत्वं विरुद्धं समर्थकत्वेनोक्तमित्यतोऽपि काव्यलिङ्गादस्य वैलक्षण्यसम्भवः । वस्तुतस्तु, काव्यलिङ्गे समर्थ्यसमर्थकभावस्य नैवापेक्षा । वाक्यार्थपदार्थयोर्हेतुभावमात्रसापेक्षत्वात् । अत एव 'काव्यलिङ्गं भवेद्यत्र हेतोर्वाक्यपदार्थता ।' इति समर्थ्यसमर्थकभावाघटितमेव काव्यलिङ्गं काव्यप्रकाशकारेण लक्षितम् । तथैव 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्ग'मिति काव्यलिङ्गं लक्षयता सर्वस्वकृता एतदेव स्पष्टीकृतम् । अर्थान्तरन्यासस्तु तद्गर्भ एव लक्षित इति न काव्यलिङ्गतोऽस्य चारितार्थ्यप्रसक्तिः । अतः सामान्यविशेषाभ्यामप्रस्तुताभ्यां तदितरयोः प्रस्तुतयोः समर्थनमर्थान्तरन्यास इत्येव तल्लक्षणम् । काव्यलिङ्गस्य तु, काव्यप्रकाशकाराद्युक्तमेव । समर्थनीयस्येति कारिकोक्तं लक्षणं तु एकदेशिमतेनेत्यभिप्रेत्याह—**प्रपञ्चस्त्विति** । अत्राप्रकृतस्य प्रकृतसमर्थकत्ववत् प्रकृतस्याप्यप्रकृतसमर्थकत्वं दृश्यत इत्याह—**एवमिति** । उदाहरणमुखेन विवृणोति—**यदुच्यत इति** । अत्र 'रूपं भव्यस्वरूपं पापवृत्तिसाधनं न भ-

यथा वा—

'दानं ददत्यपि जलैस्सहसाधिरूढे को विद्यमानगतिरासितुमुत्सहेत ।
यद्दन्तिनः कटकटाहतटान्मिमंक्षोर्मंक्षूदपाति परितः पटलैरलीनाम् ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अर्थान्तरन्यासप्रकरणम् ॥ ६० ॥

अथ विकस्वरः—

**यस्मिन्विशेषसामान्यविशेषास्स विकस्वरः ।**
**स न जिग्ये महान्तो हि दुर्धर्षास्सागरा इव ॥**[1]

यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरमुपमानरीत्यार्थान्तरन्यासविधया वा विन्यस्यते तत्र विकस्वरालङ्कारः । उत्तरार्धं यथा कथञ्चिदुदाहरणम् ।

---

वती'त्येष लौकिकवादो यथार्थ इति सामान्यमप्रस्तुतं मुनीनामपि धर्मोपदेशतया स्थितं देव्याश्चरित्रं प्रस्तुतं यत्तेन समर्थ्यत इति । उदाहरणान्तरमाह—**दानमिति** । अत्र गजवर्णने मज्जनेच्छुकरटिकटकटाहतटतो भृङ्गपटलापगमो वर्णनीयतया प्रकृतः । तेन दुर्विनीतपरगन्धासहजडजनाक्रान्तदानरसिकमहाप्रभुसमीपाद्गत्यन्तरशालिनो निरंकुशादुष्यवदप्यवतोऽपक्रमणमप्रकृतं समर्थ्यत इतीदमपि तत्रोदाहरणमिति भावः । अत्र जलशब्दश्लेषेण निष्पत्तिविशेषो द्रष्टव्यः ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अर्थान्तरन्यासप्रकरणम् ॥ ६० ॥

विकस्वरालङ्कारमाह—**यस्मिन्निति** । अत्र यच्छब्देन 'समर्थनीयस्यार्थस्ये'ति श्लोकगतसमर्थनपदनिर्दिष्टं समर्थनं परामृश्यते । तथा च यस्मिन्समर्थने । विषयत्वं सप्तम्यर्थः । तथा च यत्समर्थनविषयाः विशेषसामान्यविशेषाः तत्समर्थनं विकस्वरालङ्कार इत्यर्थः । श्लोकं व्याचष्टे—**यत्रेति** । **विशेषस्येति** । प्रकृतस्येति शेषः । सामान्यमप्रस्तुतं विन्यस्यार्थान्तरन्यासविधयेति शेषः । पुनर्विशेषान्तरमानेतुमाह— **तत्प्रसिद्धाविति** विशेषोपन्यासमन्तरेण तस्य बुद्ध्यनारोहात्तद्बुद्ध्युपारोहाय प्रकृतविशेषान्तरं न्यस्यत इति भावः । **उपमानरीत्येति** । इदमुपलक्षणम् । अर्थान्तरन्यासविधयेत्यपि द्रष्टव्यम् । **यथा कथञ्चिदिति** । अत्र प्रकृतस्य कस्यचित्पुरुषविशेषस्य दुर्जयत्वं विशेषं समर्थयितुं महतां दुर्धर्षत्वं सामान्यमुपात्तम् । तस्यालोकसामान्यतया बुद्ध्यनारोहात् विशेषान्तरेण सागरदुर्धर्षत्वेन समर्थनं कृतम् । अत्र विशेषसामान्यविशेषाणां प्रस्तुताप्रस्तुतभावस्याव्यक्तत्वादिति भा-

---

1. **'दुर्धर्षाः क्ष्माधरा इव'** इति चन्द्रालोकपाठः ।

इदं तु व्यक्तमुदाहरणम्—

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥'

इदमुपमानरीत्या विशेषान्तरस्य न्यसने उदाहरणम् ।

अर्थान्तरन्यासविधया यथा—

'कर्णारुन्तुदमन्तरेण रणितं गाहस्व काक? स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम् ।
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालफालपतिते पङ्के न शङ्केत कः ॥'

यथा वा—

'मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ
धत्तो मुखे तु तव हक्तिलकाञ्जनाभाम् ।

वः । यत्र तद्व्यक्तं तादृशमुदाहरणमाह—**अनन्तेति** । अत्र हिमवद्वर्णनस्य प्रस्तुतत्वाद्धिमस्य हिमवत्सौभाग्याविलोपित्वं प्रस्तुतमुत्तरार्धगताभ्यां सामान्यविशेषाभ्यां समर्थ्यसमर्थकभावापन्नाभ्यां समर्थ्यत इति व्यक्तोऽत्र प्रस्तुताप्रस्तुतभाव इति भावः । अस्य द्वितीयं भेदमुदाहरति—**कर्णारुन्तुदमिति** । अत्र काकस्य माकन्दाश्रयणप्रयुक्तमाहात्म्यावगतिविषयतापत्तिः प्रस्तुतार्थान्तरन्यासविधया तुरीयपादगतविशेषसमर्थितेन तृतीयपादगतसामान्येनाप्रस्तुतेन समर्थिता । अत्र श्लोके अप्रस्तुतप्रशंसारीत्या प्रस्तुतकाकवृत्तान्तवर्णनेन मूर्खस्य महागुणशालिनृपाङ्कणगतस्यासम्बद्धं जल्पतो मौनभजनेन विद्वत्तावगतिविषयत्वं तत्स्वरूपं गम्यत इत्यप्रस्तुतप्रशंसाभ्युपगमे वाच्यस्य विशेषस्याप्रस्तुतत्वादप्रस्तुतानामेव समर्थ्यसमर्थकभाव इति विशेषो द्रष्टव्यः । अयं चात्रापरो विशेषः । सामान्यविशेषाभ्यां गम्यस्य विशेषस्यापि समर्थनं सम्भवतीति ततो विच्छित्तिविशेषः । अत्रैवाप्रस्तुतप्रशंसासङ्कीर्णमुदाहरणान्तरमाह—**मालिन्यमिति** । अत्राब्जशशिमालिन्यप्रदयोर्भ्रमरकलङ्कयोर्दोषभावमुपगतयोर्भवन्मुखं हक्तिलकव्याजेनाश्रित्य शोभावहतया गुणत्वकथनं प्रस्तुतं प्रत्येकं दोषतया स्थितमिदमुभयं कथं मिलितं गुणः स्यादिति शङ्कायां दोषावपि सन्तौ मेलनेन क्वचित् अधिकरणविशेषे गुणत्वं प्राप्नुत इति सामान्येन समर्थितम् । तदपि सामान्यमप्रसिद्धतया समर्थनसापेक्षम् । भ्रमविप्रलम्भयोः प्रत्येकं वाक्यस्याप्रामाण्यावहतया दोषयोर्मेलनेन तत्प्रामाण्यावहतया गुणभावापत्त्या । यथा विप्रलम्भकः सत्येव सद्मनि देवदत्ते स तत्र नास्तीति भ्राम्यन् स्वज्ञातविपरीतार्थबुबोधयिषारूपविप्रलम्भेन सद्मनि देवदत्तोऽस्तीति परं बोधयति तद्वाक्यं विषयाबाधात्प्रमाणमेवेति भ्रमविप्रलम्भयोर्गुणभाव इत्युपमारीत्या समर्थि-

तमिति भावः । अत्रेदं चिन्त्यम् । (‘मालिन्य’मित्यादिपूर्वार्धोक्तार्थस्याप्रसिद्धस्य बुद्ध्यारोहाय प्रयुज्यमानस्य तत्समर्थकस्य ‘दोषावित’ इति तृतीतपादार्थस्य सामान्यस्यापि स्वयमसर्वगोचरतया समर्थकतद्विशेषापेक्षायां तेन विशेषेण सुप्रसिद्धेनैव भाव्यम् । न चोक्तविधया तुरीयपादार्थकथने तत्सम्भवति । देवदत्तान्वेष्टुरन्योक्तभ्रान्तिपूर्वकविप्रलम्भवचनस्य तत्वार्थविषयकतया गुणीभवनरूपस्य विशेषस्य सुतरामप्रसिद्धतया तत्कथनं सागरमग्नस्य प्रस्तरपोत्रीकरणवदसाम्प्रतमिति तुरीयपादस्यान्य एवार्थो वर्णनीयः । तद्यथा—हि यस्मात् वचसि सुभाषिते सुकविप्रयोजित इति यावत् । भ्रमः सादृश्यनिबन्धनान्यत्वबुद्धिः । विप्रलम्भो निह्नवः । द्वाविमौ कविना प्रयोजिताविति भावः । कैक्तुः तथाविधभ्रान्तिमदपह्नवाद्यलंकृतिविन्यसनशीलस्य कवेः कविनिबद्धस्यान्यस्य वा गुणः श्लाघापदमित्यर्थः । तथाविधोक्तेरेव चमत्कारकारित्वादिति भावः । तदुक्तम् । ‘वक्रोक्तयो यत्र विभूषणानि वाच्यार्थबाधः परमः प्रकर्षः । अर्थेषु बोध्येष्वभिधैव दोषः सा काचिदन्या सरणिः कवीनाम् ॥’ इति । अत्रानेनैव ग्रन्थकृता छेकापह्नुतिविशेषोदाहरणतया प्रपञ्चितार्थं ‘पद्मे त्वन्नयने स्मरामि सततम्’ इत्यादि पद्यमुदाहर्तव्यम् । तत्र हि भगवतो हरेर्लक्ष्म्यादिगोचरतया प्रवर्तितवचोमूलभूतस्य स्वास्तिकस्य भ्रमस्य राधानिर्भर्त्सनानन्तरप्रवर्तितस्य तस्यैव राधापरतया प्रपञ्चनरूपस्य विप्रलम्भस्य च स्वप्नेऽपि स्वीयगुणानन्दनोद्भावितानवरतस्वानुसन्धानावगतिजानितभगवद्विषयकराधामतप्रेमातिशयरूपो भगवतो गुण एव भवति । तथा तादृशप्रवक्तृपरिकल्पनपूर्वकचमत्कृतार्थकस्य कवेश्च सहृदयहृदयाह्लादकः प्रतिभादिगुणश्च भवतः । इति । तत्र च गुणीभवनं भ्रमविप्रलम्भयोर्मिलितयोरेव, न पुनः केवलस्य भ्रमस्य वा विप्रलम्भस्य वेति । अत इत्थं सुप्रसिद्धस्य दोषयोर्मिलितयोर्गुणीभावविशेषस्य युक्तं सामान्यसमर्थकत्वमित्यलं पल्लवितेन । इदमन्यदत्र विचिन्त्यम् ।) अत्र हि विशेषस्य समर्थनार्थे सामान्ये विशेषान्तरं समर्थकतया निर्दिश्यत इत्युपमारीत्या अर्थान्तरन्यासरीत्या वा विशेषेण सामान्यसमर्थनात्मकस्तावदेकोऽर्थान्तरन्यासः । तथा समर्थितेन सामान्येन विशेषस्य समर्थनात्तदुत्थापितो द्वितीयोऽर्थान्तरन्यास इति द्वयोरर्थान्तरन्यासयोरङ्गाङ्गिभावसङ्कर एव चमत्कारकारितया अलङ्कारः । न तु विकस्वराख्यमलङ्कारान्तरं कल्पनीयम् । यथा समर्थनीयार्थसमर्थनार्थवाक्यार्थसमर्थकत्वे पदार्थस्य ‘वपुःप्रादुर्भावा’दित्यादौ काव्यलिङ्गोत्थापितं काव्यलिङ्गमेव न त्वलङ्कारान्तरम् । अन्यथा अत्राप्यलङ्कारान्तरकल्पनापत्तेः । न चात्र विशेषसमर्थकसामान्यस्याप्रस्तुततया विशेषेणसमर्थनेऽपि न निर्दिष्टप्रस्तुतसमर्थनात्मा अर्थान्तरन्यासः सम्भवतीति वाच्यम् । प्रस्तुतत्वाप्रस्तुतत्वानादरेण सामान्यस्याप्रस्तुततया कविसंरम्भागोचरत्वेन तत्समर्थनार्थविशेषोपन्यसनस्यासामञ्जस्यप्रसङ्गात् । अन्यथा कवेरसम्बद्धाभिधायित्वापत्तेः । न चैवमप्रस्तुतेन प्रस्तुतसमर्थनाभावाद्द्वितीयोऽर्थान्तरन्तरन्यासो न स्यादिति वाच्यम् । समर्थ-

१. ‘मालिन्य’मित्यारभ्य ‘इदमन्यदत्र विचिन्त्य’मित्यन्तो ग्रन्थः ख. पुस्तक एव दृश्यते । नान्येषु । ततः अन्येन केनचिद्विदुषा विलिख्य संयोजित इति प्रतिभाति । तथाप्यानिश्चयाट्टीकायामेव सचिह्नं तस्य विन्यासः कृत इति वेदितव्यम् ।

दोषावितः क्व च न मेलनतो गुणत्वं
वक्तृगुणौ हि वचसि भ्रमविप्रलम्भौ ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विकस्वरप्रकरणम् ॥६१॥

अथ प्रौढोक्तिः—

**प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ।**
**कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥**

कार्यातिशयाहेतौ तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः । यथा तमालगतनैल्यातिशयाहेतौ यमुनातटरोहणे तद्धेतुत्वपरिकल्पनम् ।

यथा वा—

'कल्पतरुकामदोग्ध्री चिन्तामणिधनदशङ्खानाम् ।
रचितो रजोभरपयस्तेजश्श्वासान्तराम्बरैरेषः ॥'

अत्र कल्पवृक्षाद्येकैकवितरणातिशायिवर्णनीयराजावितरणातिशयाहेतौ

---

कविशेषापेक्षया समर्थनीयत्वेन प्रस्तुतत्वेऽपि प्रस्तुतं विशेषमपेक्ष्य तस्य समर्थकतया प्रस्तुतत्वात्प्रकृतेनाप्रकृतसमर्थन इव प्रकृतयोरेवाप्रकृतयोरेव वा सामान्यविशेषयोस्समर्थ्यसमर्थकभावेऽर्थान्तन्यास इत्युक्तौ बाधकाभावादलङ्कारान्तरकल्पनापेक्षयाऽस्य लघुत्वात् । किं च एवं परम्परितरूपकस्थलेऽपि अलङ्कारान्तरकल्पनाप्रसङ्गः । न च तत्र 'सद्वंशमुक्तारत्न'मित्यादौ रूपकाङ्गाङ्गिभावायत्तचमत्कारविलक्षणचमत्काराभावान्नालङ्कारान्तरकल्पनं युज्यत इति वाच्यम् । प्रकृतेऽप्यर्थान्तरन्यासयोः सङ्करकृत एव सः नाधिक इति वक्तुं शक्यत्वात्तद्विलक्षणोऽत्र चमत्कार इत्यस्य दिव्यमात्रावधारणीयत्वात् । अपि च प्रतीपोपमयोर्विलक्षणयोर्मेलनरूपोपमेयोपमाप्रकृताप्रकृतविषयोपमाद्वयरूपतया नालङ्कारान्तरमिति वदतामिह सजातीयालङ्कारद्वयमेलने अलङ्कारान्तरोक्तिः कथं सामञ्जस्यमश्नुताम् । किं बहुना । सजातीयविजातीयालङ्कारसङ्करमात्रस्यैवं सत्युच्छेद एवापद्येतेति बहुव्याकुली स्यात् । अत एव प्राचीनैरयं न लक्षित इति किमधिकेन ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विकस्वरप्रकरणम् ॥ ६१ ॥

प्रौढोक्तिं लक्षयति—**प्रौढोक्तिरिति** । किञ्चिदुत्कर्षाहेतुभूते वस्तुनि तद्धेतुत्वकल्पनं प्रौढोक्तिरित्यर्थः । उदाहरणे लक्षणं योजयति—**तमालगतेति** । उत्तरो ग्रन्थः स्पष्टः । अत्रापीदं चिन्त्यम् । 'कलिन्दजातीरे'ति तमालविशेषणं निरभिप्रायतयाऽपुष्टार्थम् । निर-

---

१. चन्द्रालोके तु '**प्रौढोक्तिस्तदशक्तस्य तच्छक्तत्वावकल्पनम्** । **कलिन्दजातीररुहाः श्यामलास्सरलद्रुमाः** ॥' इति पाठः । २. दिव्यम्—अग्नितुलादिदिव्यप्रमाणमित्यर्थः । अग्न्यादिदिव्यशोधनविधानप्रकाराः मन्वादिस्मृतितोऽवगन्तव्याः ।

कल्पनेन रागादिरूपप्रपञ्चभुवननिर्मितत्वेन तद्धेतुत्वपरिकल्पनं प्रौढोक्तिः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे प्रौढोक्तिप्रकरणम् ॥६२॥

अथ संभावना—

संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥

यथा वा—

'कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।
यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥'

'यद्यर्थोक्तौ च कल्पनमतिशयोक्तिभेद' इति काव्यप्रकाशकारः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे संभावनाप्रकरणम् ॥६३॥

अथ मिथ्याध्यवसितिः—

[1]किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् ।
मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् ॥

---

मिथ्यार्थविशेषणोपादाने तस्य दोषः। अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः । मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥' इत्यादौ त्वस्य सम्प्रतिपन्नत्वात् । न च तादृशविशेषणानुपादाने प्रौढोक्तौ कश्चिदपकर्षः । येन तन्निवारकतया विशेषणसार्थक्यं भवतु । इति ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां प्रौढोक्तिप्रकरणम् ॥ ६२ ॥

सम्भावनालङ्कारं लक्षयति—**सम्भावनमिति** । यत्र किञ्चित्तर्कणमन्यतर्कणसाधनं तत्सम्भावनेत्यर्थः । उदाहरणे शेषस्य वक्तृत्वतर्कणेन वर्णनीयनृपगुणानां कथितत्वतर्कणाल्लक्षणानुगतिः स्फुटा । द्वितीयोदाहरणेऽपि स्वस्य विधित्वतर्कणेन खलजिह्वायां गन्धगुणनिवेशकर्तृत्वतर्कणमिति लक्षणसङ्गतिः । अत्र काव्यप्रकाशकारस्य मतमाह—**यद्यर्थोक्ताविति** । तेन हि 'यद्यर्थोक्तौ च कल्पन'मित्यतिशयोक्तिभेदं लक्षयित्वा 'राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः । तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥' इत्युदाहरता 'यदि शेषो भवे'दित्यादावप्ययमेवातिशयोक्तिभेद अङ्गीकृत इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां संभावनाप्रकरणम् ॥६३॥

मिथ्याध्यवसितिं लक्षयति—**किञ्चिदिति** । कस्यचिदात्यन्तिकविरहसिद्धये अत्य-

---

1. चन्द्रालोके तु '**सम्भावनं यदीत्थं स्यादित्यूहोऽन्यप्रसिद्धये । सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः ॥ मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः** ॥' इति पाठः । २. चन्द्रालोके तृतीये काव्यलक्षणमयूखे

अत्र वेश्यावशीकरणस्यात्यन्तासंभावितत्वसिद्धये गगनकुसुममालिकाधारणरूपार्थान्तरकल्पनं मिथ्याध्यवसितिः ।

यथा वा—

'अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणी दुग्धोदधे रोधसि ॥'

अत्राद्योदाहरणं निदर्शनागर्भम् । द्वितीयं तु शुद्धम् । असम्बन्धे सम्बन्धरूपातिशयोक्तितो मिथ्याध्यवसितेः किञ्चिन्मिथ्यात्वसिध्यर्थं मिथ्यार्थान्तरकल्पनात्मना विच्छित्तिविशेषेण भेदः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे मिथ्याध्यवसितिप्रकरणम् ॥६४॥

---

न्तासम्भावितार्थकल्पनं मिथ्याध्यवसितिरित्यर्थः । उदाहरणे 'खपुष्पमालिकां वहन्वेश्यां वशयेदि'ति निदर्शनामुखेन वेश्यावशीकरणस्यात्यन्तासम्भावितत्वसिद्धये गगनकुसुममालिकावहनरूपमिथ्यार्थकल्पनमिति लक्षणसङ्गतिः स्पष्टेत्याह—**अत्रेति** । न चात्र वेश्यावशीकरणासम्भावितत्वसिद्ध्यर्थतायाश्शब्देनाप्रतिपादनात्कथं मिथ्याध्यवसितिरिति वाच्यम् । 'वह'न्निति हेत्वर्थकेन शतृप्रत्ययेन तस्याः प्रतिपादनादिति तात्पर्यात् । उदाहरणान्तरमाह—**अस्य क्षोणिपतेरिति** । अत्र वर्ण्यमानाकीर्त्यसम्भावितत्वसिद्ध्यर्थं परार्धाधिकसंख्यादिरूपमिथ्यार्थान्तरकल्पनामिति अत्रापि मिथ्याध्यवसितिरुक्तेति भावः । उदाहरणयोर्वैलक्षण्यं प्रदर्शयति—**अत्रेति** । नन्वसम्बन्धे सम्बन्धरूपातिशयोक्तितो नास्या वैलक्षण्यमित्यत आह—**असम्बन्धे इति** । ततश्च 'किञ्चिन्मिथ्यात्वसिद्ध्यर्थ'मिति तत्स्वरूपकथनमेव विशेषद्योतनमुखेन अस्यास्ततो वैलक्षण्यं स्पष्टयतीति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां मिथ्याध्यवसितिप्रकरणम् ॥ ६४ ॥

---

काव्यलक्षणत्वेन यानि अक्षरसंहतिशोभाभिमानहेतुगुणाख्या निरुक्तमिथ्याध्यवसायसिद्धियुक्तिकार्याणि दश निरूपितानि तान्यत्र अर्थालङ्कारतया मूलकृन्न्यरूपयत् । तेष्वेकतमेयं मिथ्याध्यवसितिरिति वेदितव्यम् । चन्द्रालोके तदित्थमयं मुखे एवं पाठः । यथा— **'स्यान्मिथ्याध्यवसायश्चेदसतो साध्यसाधने । चन्द्रांशुसूत्रग्रथितां नभःपुष्पस्रजं वह ॥'** इति पाठः ।

अथ ललितम्—

**[1]प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम् ।**
**ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥**

प्रस्तुते धर्मिणि यो वर्णनीयो वाक्यार्थस्तमवर्णयित्वा तत्रैव तत्प्रतिबिम्बरूपस्य कस्यचिदप्रस्तुतवाक्यार्थस्य वर्णनं ललितम् । यथा कथञ्चिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य, सख्या वचनेन तद्व्यापारप्रतिबिम्बभूतगतजलसेतुबन्धनवर्णनम् । नेयमप्रस्तुतप्रशंसा प्रस्तुतधर्मिकत्वात् । नापि समासोक्तिः । प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाधारण्येन सारूप्येण वा अप्रस्तुतवृत्तान्तस्फूर्त्यभावात् । अप्रस्तुतवृत्तान्तादेव सरूपादिह प्रस्तुतवृ-

---

ललितालङ्कारं लक्षयति—**प्रस्तुते इति** । प्रस्तुते धर्मिणि वर्णनीयवृत्तान्तसरूपप्रस्तुतवृत्तान्तवर्णनं यत्तल्ललितमित्यभिप्रायेण लक्षणं व्याचष्टे—**प्रस्तुते धर्मिणीति** । अत्र 'तमवर्णयित्वे'ति प्रस्तुतवाक्यार्थवर्णनमपि न लक्षणे निवेशनीयम् । प्रयोजनविरहात् । यथोक्तस्यैवानतिप्रसक्तत्वात् । अप्रस्तुतप्रशंसायां प्रस्तुतवाक्यार्थसरूपाप्रस्तुतवाक्यार्थवर्णनसत्वेऽपि तस्य प्रस्तुतधर्मिकत्वाभावात् तत एव तद्व्यावृत्तेः । अतः स्वरूपकथनमेव तदिति द्रष्टव्यम् । उदाहरणे लक्षणं योजयति—**यथा कथं चिदिति** । नानाविधसान्त्वनादिकृतदाक्षिण्यसमागतेत्यर्थः । **तत्कालोपेक्षितेति** । नायिकान्तरानुरागनिवारणेन स्वाधीनताकरणतात्पर्यं व्यज्यते । 'प्रतिनिवृत्ते'त्यनेन स्वाच्छन्द्याद्वर्तमानोऽहं नैतदीयवञ्चनाभाजनीभूय तद्वशीभवेयमिति व्यज्यते । 'नायिकान्तरासक्ते'त्यनेन नायिकान्तरासक्त्यवगमेन समागतस्य नायकस्य निजदुर्विनयकृतवैमुख्यकृतरोषातिशयो व्यज्यते । इत्थम्भूतस्य नायकस्य समनन्तरोपजातपश्चात्तापकातरहृदयां विरहवेदनामसहमानां तथाविधं नायकमानेतुं सखीं प्रेषयितुमुद्यतामिति भावः । **उद्दिश्येति** । लक्ष्यीकृत्येत्यर्थः । न तु सम्बोध्येति । तथा सति उदाहरणे 'एषा चिकीर्षती'त्यस्यासामञ्जस्यप्रसङ्गादित्यर्थः । **व्यापारेति** । प्रतिनिवृत्तनायकानयनरूपव्यापारेत्यर्थः । अप्रस्तुतवर्णनमात्रमभिप्रेत्य निषेधति—**नेयमिति** । **प्रस्तुतधर्मिकत्वादिति** । एतदभिप्रायो लक्षणविवरणावसर एवाविष्कृत इति भावः । प्रस्तुतवृत्तान्तावगतिमात्रेण समासोक्तिरिति निमीलिताक्षशङ्कां परिहरति—**नापीति** । **प्रस्तुतेति** । नयनोन्मीलनमभिप्रेत्य । ननु मास्तु उक्तालङ्कारयोरप्रस्तुतवृत्तान्तस्य शब्दोपादानप्रस्तुतधर्मिकत्वाभ्यां समासोक्त्यप्रस्तुतप्रशंसयोर्मास्त्वस्यान्तर्भावः । प्रस्तु-

---

१. अयमलङ्कारश्चन्द्रालोके नास्ति । प्रकाशकारादिभिर्निदर्शनायामन्तर्भावित इति च वेद्यम् ।

त्तान्तस्य गम्यत्वात् । नापि निदर्शना । प्रस्तुताप्रस्तुतवृत्तान्तयोरशब्दोपात्तयोरैक्यसमारोप एव तस्यास्समुन्मेषात् । यदि विषयविषयिणोरशब्दोपात्तयोः प्रवर्तमान एवालङ्कारो विषयिमात्रोपादानेऽपि स्यात्तदा रूपकमेव भेदेऽप्यभेदरूपाया अतिशयोक्तेरपि विषयमाक्रामेत् । ननु, तर्ह्यत्र प्रस्तुतनायकादिनिगरणेन तत्र शब्दोपात्ताप्रस्तुतनीराद्यभेदाध्यवसाय इति भेदे अभेदरूपातिशयोक्तिरस्तु, एवं तर्हि सारूप्यनिबन्धनाप्रस्तुतप्रशंसाविषयेऽपि सैवातिशयोक्तिः स्यात् । अप्रस्तुतधर्मिकत्वान्न भवतीति चेत् । तत्राप्यप्रस्तुतधर्मिवाचकपदस्यापि प्रसिद्धातिशयोक्त्युदाहरणेष्विव प्रस्तुतधर्मिलक्षकत्वसंभवात् । नन्वप्रस्तुतप्रशंसायां सरूपादप्रस्तुवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यते, नत्वतिशयोक्ताविव विषयवाचकैस्तत्तत्पदैर्विषया लक्ष्यन्त इति भेद इति चेत् । तर्हीहापि प्रस्तुतगतादप्रस्तुतवृत्तान्तरूपाद्वाक्यार्थात्तद्गतप्रस्तुतवृ-

---

ताप्रस्तुतवृत्तान्तयोरैक्यारोपात्सम्भवन्तीं निदर्शनां को वा निवारयितुं प्रभवतीत्याशङ्क्य निषेधति—**नापीति । शब्दोपात्तयोरिति ।** 'विषयविषयिवाचकशब्दयोः सामानाधिकरण्येन ऐक्यारोप एव निदर्शने'ति तल्लक्षणम् । प्रकृते तदभावान्नात्र युज्यत इति भावः । ननु, विषयविषयिणोरशाब्दयोरेषा शाब्दी । आर्थी तु विषयानुपादानेऽप्यस्त्यादेवेत्यत आह—**यदिति ।** विषयविषयिणोः शब्दोपादान एव लब्धात्मनोऽलङ्कारस्य विषयिमात्रोपादाने प्रवृत्त्यङ्गीकारे आद्यातिशयोक्तेरपि आर्थत्वरूपकभावापत्त्या दत्तजलाञ्जलितापत्तिरिति भावः । ननु, अतिशयोक्तिविषये माभूद्रूपकप्रसक्तिः । मा च भूदत्र निदर्शना । आद्यातिशयोक्तिस्तु स्यात् । अत्राप्रस्तुतवाचकनीरादिशब्देन साध्यवसानलक्षणया प्रस्तुतनायकादेर्निगरणेन प्रतिपादनपूर्वकं नीराद्यभेदाध्यवसायसम्भवादित्यभिप्रेत्य शङ्कते—**ननु तर्हीति ।** एवं सति 'एकः कृती शकुन्तेष्वि'ति सारूप्यनिबन्धनाप्रस्तुतप्रशंसास्थलेऽपि आद्यातिशयोक्तिप्रसङ्गः । क्षुद्रयाचननिवृत्तमानिपुरुषवृत्तान्ते प्रस्तुते अप्रस्तुतचातकवृत्तान्तारोपसम्भवादिति प्रतिबन्द्या परिहरति—**एवं तर्हीति ।** शङ्कते—**अप्रस्तुतेति ।** यद्यप्रस्तुतारोपः प्रस्तुते स्यात्तदैव प्रस्तुतस्यानुपादाने आद्यातिशयोक्तिः । अप्रस्तुतप्रशंसायां तु अप्रस्तुतधर्मिगतत्वेन तत्प्रतिपादनादतो न तत्रातिशयोक्तिप्रसङ्ग इति भावः । **प्रस्तुतधर्मीति ।** अप्रस्तुतवाचकचातकादिपदैर्लक्षणया अतिशयोक्तिगतचन्द्रादिपदैरिव प्रस्तुतधर्मिप्रतिपत्तिसम्भवेन तत्राप्रस्तुतैक्यारोपसम्भवेनातिशयोक्तेर्दुर्निवारत्वादिति भावः । ननु, तत्राप्रस्तुतवाक्यार्थात्सारूप्यादिना सम्बन्धेन प्रस्तुतवाक्यार्थावगतिमात्रं न तु विषयिवाचकशकुन्तादिवाचकपदैर्विषयाणां मानिपुरुषमनुष्यसामान्यादीनां लक्षणया प्रतिपत्तिस्तथात्वे अप्रस्तुतवाक्यार्थान्वयासामञ्जस्यप्रसङ्गादित्यभिप्रेत्य पुनरशङ्कते—**नन्विति । इहापीति ।** प्रकृतेऽपि प्र-

त्तान्तरूपो वाक्यार्थोऽवगम्यत इत्येवातिशयोक्तितो भेदोऽस्तु । वस्तुतस्तु

'कोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिस्सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा ।
पूर्वं निश्चितवानसि भ्रमर! हे यद्वारणोऽद्याप्यसा-
वन्तश्शून्यकरो निषेव्यत इति भ्रान्तः क एष ग्रहः ॥'[1]

इत्याद्यप्रस्तुतप्रशंसोदाहरणे प्रथमप्रतीतादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यत इत्येतन्न घटते । अप्रस्तुते वारणस्य भ्रमरासेव्यत्वे कर्णचापलमात्रस्य भ्रमरनिरासकरणहेतुत्वसंभवेऽपि रसनाविपर्ययान्तश्शून्यकरत्वयोर्हेतुत्वासंभवेन मदस्य प्रत्युत तत्सेव्यत्व एव हेतुत्वेन च रसनाविपर्ययादीनां तत्र हेतुत्वान्वयार्थं वारणपदस्य दुष्प्रभुरूपविषयकोडीकारेणैव प्रवृत्तेर्वक्तव्यत्वात् । एवं सत्यपि यद्यप्रस्तुतसंबोधनादिविच्छित्तिविशेषात्तत्राप्रस्तुतप्रशंसाया अतिशयोक्तितो भेदो घटते । तदात्रापि प्रस्तुतं धर्मिणं स्वपदेन निर्दिश्य तत्राप्रस्तुतवर्णनारूपस्य विच्छित्तिविशेषस्य सद्भावान् ततोऽभेदः सुतरां घटते । 'पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति' 'वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्ये'त्यादिषु तु प्रस्तुतस्य क-

---

स्तुतगततया प्रतिपाद्यमानात्तद्गतस्यैव प्रस्तुतवृत्तान्तस्यावगममात्रं न तु अप्रस्तुतवाचकनीरादिपदलक्षणया प्रस्तुतावगतिरिति नातिशयोक्तिः सम्भवतीत्यर्थः । वस्तुतत्त्वावधारणे अप्रस्तुतप्रशंसाविशेषे प्रस्तुते धर्मिणि वाक्यार्थान्वयायाप्रस्तुतधर्मिणः प्रस्तुतविषयाभेदारोपस्यावश्यवक्तव्यतया तत्रातिशयोक्तिः प्रस्तुतविषयनिगरणादापद्येतेति वक्तुं शक्यम् । न तु प्रकृते प्रस्तुते धर्मिणि वाक्यार्थान्वयासामञ्जस्यम् । येन तदनुरोधादप्रस्तुततादात्म्यापत्तिर्वक्तव्येति अतिशयोक्तितो भेदो न घटत इत्यभिप्रायेणाह—**वस्तुतस्त्विति** । **अप्रस्तुत इति** । तत्स्वरूपदुष्प्रभुसेवात्यागात्मन इव भ्रमरसेवात्यागे रसनाविपर्ययादेर्हेतुत्वान्वयस्य वक्तव्यत्वात् । **यद्यप्रस्तुतेति** । एवमतिशयोक्तेरस्मिन्नप्रस्तुतप्रशंसाविशेषे वक्तुं शक्यत्वेऽपि अप्रस्तुतसम्बोधनादिकृतवैचित्र्यावलम्बनेनाप्रस्तुतप्रशंसातिशयोक्त्योर्वैलक्षण्यमुपपाद्यते चेत् । प्रकृतेऽपि प्रस्तुत एव धर्मिणि शब्दनिर्देशपूर्वकमप्रस्तुतवृत्तान्तवर्णनात्मनो वैचित्र्यस्याप्रत्याख्येयतया नातिशयोक्तिः सम्भवतीति नास्यालङ्कारस्यातिशयोक्त्या चारितार्थ्यमिति भावः । ननु, अतिशयोक्त्या अस्या गतार्थत्वेऽपि अनेन तस्या विषयापहारः किं न स्यात् तदुदाहरणेष्वस्यैव सम्भवादित्यत आह—**पश्येति** । तत्र प्रस्तुतधर्मिणश्शब्दानुपात्ततया तत्राप्रस्तुतवृत्तान्त-

---

1. 'भ्रातः क एष ग्रहः ।' इति पाठान्तरम् ।

स्यचिद्धर्मिणः स्ववाचकेनानिर्दिष्टत्वादतिशयोक्तिरेव । एतेन गतजलसेतुबन्धवर्णनादिष्वसंबन्धे संबन्धरूपातिशयोक्तिरस्त्विति शङ्कापि निरस्ता । तथा च सति 'कस्त्वंभोः कथयामी' त्यादावपि तत्प्रसङ्गात्सारूप्यनिन्धनाप्रस्तुतवाक्यार्थावगतिरूपविच्छित्तिविशेषेण अलङ्कारान्तरत्वकल्पनं तु इहापि तुल्यम् । तस्मात्सर्वालङ्कारविलक्षणमिदं ललितम् ।

यथा वा—

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

अत्रापि निदर्शनाभ्रान्तिर्न कार्या । अल्पविषयया मत्या सूर्यवंशं व-

---

वर्णनामात्रान्नायमलङ्कारो वक्तुं शक्यः । किं तु अतिशयोक्तिरेवेति भावः । ननु तथापि अत्राद्यातिशयोक्तेरसम्भवेऽपि असम्बन्धे सम्बन्धरूपातिशयोक्तिरस्तु वर्णनीयनायिकादौ गतजलसेतुबन्धासम्बन्धेऽपि तत्सम्बन्धवर्णनसद्भावादित्याशङ्क्य निराकरोति—**एतेनेति**। अतिशयोक्तितो नास्य चारितार्थ्यमेतेनेत्यर्थः । किञ्चैवं सति 'कस्त्वं भो' इत्यादावपि प्रश्नोत्तरनिबन्धनस्याचेतने असम्भवात् असम्बन्धे सम्बन्धरूपातिशयोक्तिः स्यादित्याह—**तथासतीति** । प्रस्तुताप्रस्तुतवृत्तान्तावगतिः समासोक्त्यप्रस्तुतप्रशंसाश्लेषललितेष्वविशिष्टा । तत्र समासोक्तौ प्रस्तुतधर्मिगतवृत्तान्तवर्णनेनाप्रस्तुतधर्मिव्यक्तिपूर्वकतद्वृत्तान्तारोपश्चारुताहेतुः । अप्रस्तुतप्रशंसायां पुनरप्रस्तुतधर्मिगततया तद्वृत्तान्तवर्णनात्प्रस्तुतवृत्तान्तः प्रस्तुतधर्मिगत एव प्रतीयते सारूप्यादिसम्बन्धत्रितयेनेति । तत्र तदवगतिरेव चारुताहेतुर्न तु तदारोपः । 'सोऽपूर्व'इत्यादौ क्वचिद्वाच्यार्थासम्भाविनोऽपि अर्थस्याभिधानं प्रस्तुतावगतिद्वारा विच्छित्तिविशेषहेतुः । एवं प्रस्तुताप्रस्तुतश्लेषे तयोर्द्वयोरपि तुल्यतयैवावगतिर्न त्वेकत्रैकतरारोपः । प्रकृते तु प्रस्तुते धर्मिणि अप्रस्तुतवृत्तान्तव्यारोपस्समासोक्तिवदेव चारुताहेतुः । तत्रारोपो गम्यः इह शाब्द इति । अतिशयोक्तौ तु नैव वृत्तान्तावगतिः काचिदपि । अप्रकृतरूपमात्रारोपो विषय इति नात्रालङ्कारान्तरं सम्भावनापदवीमारोहतीति ललितमेव विलक्षणं स्वीकार्यमित्यभिप्रेत्य उपसंहरति—**तस्मादिति** । उदाहरणान्तरमाह—**क्व सूर्येति** । नन्वत्र 'दोर्भ्यां तितीर्षेदप्यब्धि'मित्यादाविव निदर्शनैव युक्ता न ललितमित्यत आह—**अत्रापीति** । तत्र 'तुष्टूषुस्त्वद्गुणार्णव'मिति प्रस्तुतवाक्यार्थस्यापि शब्देनावेदनात्प्रस्तुताप्रस्तुतवाक्यार्थयोरैक्यारोपाद्युक्ता निदर्शना । इहाधिकरणशक्तिप्रधानाभ्यामदन्ताभ्यामव्ययाभ्यामननुरूपयोर्महावंशाल्पविषयमत्योर्घटनरूपविषमालङ्कारेणाप्रस्तुतार्थवर्णने अल्पविषयमतिकरणकसूर्यवंशवर्णनेच्छुरहमिति प्रस्तुतार्थस्य गम्यमानतया तयोरैक्यारोपाभावान्न निदर्शना सम्भ-

र्णयितुमिच्छुरहमिति प्रस्तुतवृत्तान्तानुपन्यासात्तत्प्रतिबिम्बभूतस्य 'उडुपेन सागरं तितीर्षुरस्मी'त्यप्रस्तुतवृत्तान्तस्य वर्णनेनादौ विषमालङ्कारविन्यासेन च केवलं तत्र तात्पर्यस्य गम्यमानत्वात् ।

यथा वा—

'अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य ।
त्वदाप्तसङ्केततया कृतार्था श्राव्यापि नानेन जनेन संज्ञा ॥'

अत्र 'कतमो देशस्त्वया परित्यक्तं' इति प्रस्तुतार्थमनुपन्यस्य 'वसन्तमुक्तस्य वनस्य दशामनायी'ति तत्प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललितालङ्कारः ॥

इति श्रीमदप्पय्यदीक्षितकृतौ कुवलयानन्दे ललितप्रकरणम् ॥६५॥

अथ प्रहर्षणम्—

**[1]उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥**

**उत्कण्ठा** इच्छाविशेषः ।

'सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते ।
तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः ॥'

इत्युक्तलक्षणः तद्विषयस्यार्थस्य तदुपायसंपादनयत्नं विना सिद्धिः प्र-

---

वर्तीति भावः । उदाहरणान्तरमाह—**अनायीति** । अत्रापि लक्षणं योजयति—**अत्र कतम इति** ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां ललितप्रकरणम् ॥६५॥

प्रहर्षणालङ्कारं लक्षयति—**उत्कण्ठितेति** । उत्कण्ठाशब्दार्थविवरणपूर्वकं कारिकां विवृणोति—**उत्कण्ठेति** । **सर्वेन्द्रियेति** । सर्वेन्द्रियजन्यसुखास्वादो यस्मिन्नुपाये अनुष्ठिते सति भवति तत्प्राप्तीच्छां सङ्कल्पसहितामुत्कण्ठां विदुरिति कारिकार्थः । **तद्विषयस्येति** । उक्तलक्षणलक्षितोत्कण्ठाविषयस्येत्यर्थः । **तदुपायेति** । उत्कण्ठितार्थप्राप्त्युपायेत्यर्थः । तथा च उत्कण्ठितार्थप्राप्त्यनुकूलतदुपायगोचरयत्नं विना उत्कण्ठादिप्रयार्थसिद्धिः प्रहर्षणमिति भावः । उदाहरणे 'तामेव ध्यायत' इत्यनेन तद्गोचरसङ्कल्पोदयात्तादृशसङ्कल्पविषयीभूतप्रियतमालाभे सति आलिङ्गनप्रेक्षणचुम्बनाङ्गरागसौरभमणितादिश्रवणानां त्वङ्नेत्ररसनाघ्राणश्रोत्रेन्द्रियविषयाणां निष्पत्त्या सर्वेन्द्रियप्रयोज्यसुखास्वादसम्पत्तेस्तादृशप्रियतमालाभगोचरेच्छासङ्कल्पोपनता उत्कण्ठेति तद्विषयीभूतप्रियतमालाभानुकूलदूतीस-

---

1. प्रहर्षणस्यायमाद्यो भेदश्चन्द्रालोके न दृश्यते ।

हर्षणम् । उदाहरणं स्पष्टम् ।

यथा वा—

'मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैः
नक्तं भीरुरयं त्वमेव तदिमं राधे! गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥'

अत्र राधामाधवयोः परस्परमुत्कण्ठितत्वं प्रसिद्धतरम् । अग्रे च ग्रन्थकारेण निबद्धमित्यत्रोदाहरणे लक्षणानुगतिः ॥

**वांछितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ।**
**दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥**

स्पष्टम् ।

यथा वा—

'चातकस्त्रिचतुरान्पयःकणान् याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥'

---

प्रेषणगोचरप्रयत्नमन्तरेणैव नायिकाया एव दूतीभावोक्त्या प्रियतमालाभसिद्धिवर्णनाल्लक्षणानुगतिः स्पष्टेत्याह—**उदाहरणमिति** । उदाहरणान्तरमाह— **मेघैरिति** । अत्र नन्दाज्ञया गृहं प्रति प्रचलितयोरन्योन्यालम्बनिरन्तरपयोदसम्भृताम्बराद्युद्दीपितौत्सुक्यावेगादिव्यभिचारिव्यञ्जितः सम्भोगशृङ्गारो ध्वन्यत इति शृङ्गारध्वनिः । अत्र लक्षणानुगतिं दर्शयति—**अत्रेति** । 'त्वमेव प्रापये'त्यनेन राधाप्राप्तिसाधनतदर्थितकदूतीप्रेषणादिव्यापारगोचरयत्नं विनैव माधवस्योत्कण्ठितराधाप्राप्तेः राधायाश्च उत्कण्ठितमाधवप्राप्त्यनुकूलतदन्तिकसखीप्रेषणादिगोचरयत्नं विनैव माधवप्राप्तेश्च प्रतीतेरुत्कण्ठितार्थसिद्धिः परस्परमुभयोर्जातेति लक्षणानुगतिरत्राविहतेति भावः । द्वितीय प्रहर्षणभेदं लक्षयति—**वाञ्छितादिति** । इच्छाविषयीभूतार्थादधिकार्थस्य तदुद्योचनयत्नं विनैव सिद्धिर्द्वितीयं प्रहर्षणमित्यर्थः । उदाहरणे इष्टस्यालोकस्य सिद्धये तत्साधनदीपोत्तेजनव्यापारकाले सूर्योदयेन भुवनोदरविस्मरतया दीपप्रकाशादधिकस्यालोकस्य सम्पत्तिवर्णनाल्लक्षणानुगतिर्लक्ष्ये स्पष्टा । उदाहरणान्तरमाह— **चातक इति** । अत्र चातकस्य त्रिचतुरतोयबिन्दुयाचनोक्त्या तदिच्छाविषयीभूतत्रिचतुर

१. चन्द्रालोके तु '**वाञ्छितार्थाधिकप्राप्तिरयत्नेन प्रहर्षणम् । दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥**' इति एक एव भेदो निरूपितः ।

**यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च ।**
**निध्यंजनौषधीमूलं खनता साधितो निधिः ॥**

फलोपायसिध्यर्थाद्यत्नान्मध्ये उपायसिद्धिमनपेक्ष्यापि साक्षात्फलस्यैव लाभोऽपि प्रहर्षणम् । यथा निध्यञ्जनसिद्ध्यर्थं मूलिकां खनतस्तत्रैव निधेर्लाभः ।

यथा वा—

'उज्झित्य प्रथममधः स्थितं मृगाक्षी पुष्पौघं श्रितविटपं गृहीतुकामा ।
आरोढुं पदमदधादशोकयष्ट्यामामूलं पुनरपि तेन पुष्पिताभूत् ॥'

अत्र पुष्पग्रहणोपायभूतारोहणासिद्ध्यर्थात्पदनिधानात्तत्रैव पुष्पग्रहणलाभः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे प्रहर्षणप्रकरणम् ॥६६॥

अथ विषादनम्—

**इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् ।**

कर्णिकाविकपयोधरविस्मरधारासम्पातेन विश्वपूरणवर्णनादधिकार्थसिद्धिरविकलेति भावः । अथास्यैव तृतीयं भेदं लक्षयति—**यत्नादिति** । लक्षणं व्याचष्टे—**फलोपायेति** । फलानवाप्त्या तत्प्राप्तये तदुपायगोचरयत्नो लोके प्रसिद्धः । तादृशयत्नादतर्किततत्फलस्यैव लाभो यस्सोऽपि तृतीयं प्रहर्षणमित्यर्थः । ईप्सितनिधिसाधनीभूताञ्जनसाधनमूलिकाप्राप्त्यनुकूलखननयत्नतोऽञ्जननैरपेक्ष्येण निधिलाभवर्णनाल्लक्षणानुगतिः । उदाहरणान्तरेऽपि कुसुमलिप्सया अशोकसमीपं गताया नायिकायाः करप्राप्त्याधोभागस्थितपुष्पापचये विटपाश्रितपुष्पग्रहणाय तरुसमारोहणाय चरणनिधाने यत्नः । तेन दोहलसम्पत्त्या आमूलाग्र पुष्पोद्गमेन विनैवारोहणं यावदपेक्षितपुष्पलाभाल्लक्षणानुगतिः स्पष्टेत्याह—**अत्रेति** । अत्रेदं वक्तव्यम् । प्रथमप्रहर्षणोदाहरणे इष्टार्थानुकूलप्रयत्नाभावेऽपि इष्टप्राप्तिवर्णनेन प्रहर्षणाख्यमलङ्कारान्तरमुररीकरणीयम् । प्रयत्नस्य कार्यमात्रकारणतया इष्टार्थे तदुपायगोचरप्रयत्नाभावेऽपि इष्टार्थसिद्ध्या विभावनालङ्कारस्य लब्धप्रसरत्वात् । 'अप्यलाक्षारसासिक्त'मित्यादाविव लाक्षारसावसेकादिरूपव्यापाराभावेऽपि कार्योत्पत्तिवर्णनान्मात्रयाप्यस्य ततो भेदाभावात्तत्र चरणारुणिम्नोऽनागन्तुकत्वेन विरोधपरिहारवदिहापि रागौत्सुक्यादिना स्वत एव प्रियतमासमागमेन नायकस्य तल्लाभोऽभूदिति विरोधपरिहारस्यापि साम्यात् । अतः प्रहर्षणस्य भेदद्वयमेवेति । इयांस्तु विशेषः । यत्तत्र कारणाभावश्शब्दः । इह तु प्रियतमाया एव दूतीभावोक्त्या दूतीप्रेषणाभावोऽर्थसिद्ध इत्यस्फुटा सेति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां प्रहर्षणप्रकरणम् ॥६६॥

विषादनं लक्षयति—**इष्यमाणेति** । इष्टार्थप्राप्त्यनुकूलयत्नतस्तद्विरुद्धार्थप्राप्ति-

1. अयं तृतीयो भेदश्च चन्द्रालोके नास्ति ।

दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥

यथा वा—

'रात्रिर्गमिष्यति भविष्यति च प्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजं च ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विषादनप्रकरणम् ॥६७॥

अथ उल्लासः—

**एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ।**
**अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी ॥**

---

विषादनमित्यर्थः । उदाहरणे प्रकाशार्थं तत्साधनदीपोद्योजनयत्नेन दीपोपरमादिष्यमाण-प्रकाशविरोधितमःप्रादुर्भावप्रतीतेर्लक्षणानुगम इति भावः । उदाहरणान्तरेऽपि रात्रिवि-रामप्रातरागमभास्वदुदयपङ्कजविकासतन्निबन्धनस्वच्छन्दमकरन्दपानबहिर्विहारादिगोचरेष्टार्थ-चिन्तनसमकालं गजकर्तृकनलिनीभञ्जनोक्त्या भ्रमरस्येष्टार्थविपरीतानिष्टवर्णनात्सुगमा लक्ष-णानुगतिः । अत्रेदं विषादनालङ्कारकथनमिष्टार्थसमुद्यमादिष्टार्थविपरीतावाप्तिरूपविषमाल-ङ्कारलक्षणमिष्टार्थोद्यमघटितं वदतां काव्यप्रकाशसर्वस्वकारादीनां मतेन । ते हि 'कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च तद्भवे'दिति कर्तृघटितं विषमालङ्कारलक्षणं वदन्त इष्टा-र्थगोचरोद्यममपि लक्षणे न्यवेशयन् । यद्यपि सर्वस्वकारादिभि'र्विरूपकार्यानर्थयोरुत्पत्ति-र्विरूपसंघटना च विषम'मिति इष्टार्थोद्यमाघटितमेव विषमलक्षणं सूत्रितम् । तथापीष्टा-र्थमुद्यतस्य न केवलं तदनवाप्तिरित्यादिनोद्यमगर्भतयैव स्वकृतलक्षणं व्याख्यातमिति ते-षामपि तथैव सम्प्रतिपत्तेरतस्तद्घटितविषमलक्षणस्य 'रात्रिर्गमिष्यती'त्यादावप्रवृत्तेरुक्त-विषमस्य तन्मतरीत्या विषादनालङ्कारविशेषत्वमेष्टव्यम् । इष्टार्थविरुद्धावाप्तिरूपतल्लक्ष-णसत्त्वात् । ग्रन्थकृतापि तदनुसारेणैव लक्षणोक्तेश्च । ये 'त्विष्टार्थमीप्सतस्तद्विपरीतावा-प्तिर्विषम'मिति वदन्ति तन्मते प्रकृतोदाहरणेऽपि विषमालङ्कारस्यैव प्रवृत्त्या नालङ्कारान्तरं कल्पनीयम् । यद्यपि 'दीपमुद्योजये'दित्युदाहरणे इष्टार्थोद्यमो निबद्ध इति प्रागुक्तविष-मालङ्कार एव तथापि द्वितीयोदाहरणं युक्तमेवेत्याकलनीयम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विषादनप्रकरणम् ॥६७॥

उल्लासालङ्कारं लक्षयति—**एकस्येति** । लक्षणं व्याचष्टे—**कस्यचिदिति** ।

---

१. **उल्लासोऽन्यमहिम्ना चेद्दोषो ह्यन्यत्र वर्ण्यते । तद्भाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ॥**' इति पाठः ।

काठिन्यं कुचयोः स्रष्टुं वांछन्त्यः पादपद्मयोः ।
निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः ॥
तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ।
लाभोऽयमेव भूपाल! सेवकानां न चेद्वधः ॥

यत्र कस्यचिद्गुणेनान्यस्य गुणो दोषेण दोषो गुणेन दोषो दोषेण गुणो वा वर्ण्यते स उल्लासः । द्वितीयार्धमाद्यस्योदाहरणम् । तत्र पतिव्रतामहिमगुणेन तदीयस्नानतो गङ्गायाः पावनत्वगुणो वर्णितः । द्वितीयश्लोके द्वितीयस्योदाहरणम् । तत्र राज्ञो धाटीषु वने पलायमानानामरियोषितां पादयोर्धावनपरिपन्थिमार्दवदोषेण तयोः काठिन्यमसृष्ट्वा व्यर्थं कुचयोः तत्सृष्टवतो धातुर्निन्द्यत्वदोषो वर्णितः । तृतीयश्लोकस्तृतीयचतुर्थयोरुदाहरणम् । तत्र सज्जनमहिमगुणेन धनस्य तदनाश्रयणे दोषत्वेन राज्ञः क्रौर्यदोषेण तत्सेवकानां वधं विना निर्गमनं गुणत्वेन वर्णितम् । अनेनैव क्रमेणोदाहरणान्तराणि ।

'यदयं रथसंक्षोभादंसेनांसो निपीडितः ।
एकः कृती मदङ्गेषु शेषमङ्गं भुवो भरः ॥'

---

किञ्चित्पदार्थगतगुणदोषाभ्यामस्मिन्गुणदोषाधानमुल्लास इत्यर्थः । अन्यगुणेनान्यगुणः । तद्दोषेण तद्दोषः । दोषेण गुणः । गुणेन दोषः । इति । तावतेति तच्छब्देन गुणदोषयोर्दोषगुणयोश्च क्रमव्युत्क्रमाभ्यां परामर्शाच्चतुर्विधोऽयमित्यभिप्रेत्य लक्षणाविवरणमुखेनामुं विभजते—**कस्यचिदिति** । क्रमेणोदाहरणेषु लक्षणं योजयति—**द्वितीयार्धमिति** । 'अपि मा'मित्येतादित्यर्थः । अत्र यद्यपि पतिव्रतास्नानतो गङ्गायाः पावनत्वगुणो न वर्णितः । किं तु तदिच्छामात्रम् । तथापि इच्छानिबन्धने तत्रेप्सितत्वप्रतीतेः पावनत्वगुणवर्णनं द्रष्टव्यम् । **द्वितीयश्लोक इति** । 'काठिन्यं कुचयो'रित्यादिरित्यर्थः । **द्वितीयस्येति** । अन्यदोषेणान्यस्य दोषस्येत्यर्थः । द्वितीयोदाहरणे लक्षणानुगमं स्पष्टयति—**तत्रेति** । 'धावने'त्यनेन चरणमार्दवस्य दोषत्वं व्यक्तीकृतम् । **तृतीयश्लोक इति** । 'तदभाग्य'मित्यादिरित्यर्थः । **तृतीयचतुर्थयोरिति** । अन्यगुणेन दोषस्य अन्यदोषेण गुणस्य चेत्यर्थः । **उदाहरणमिति** । तृतीयश्लोकस्य पूर्वार्द्धं तृतीयस्योदाहरणं उत्तरार्धं चतुर्थस्येत्यर्थः । क्रमेण तयोर्लक्षणं योजयति—**तत्रेति** । **यदयमिति** । उदाहरणे लक्षणानुगमः स्पष्ट इत्याह

अत्र नायिकासौन्दर्यगुणेन तदंसनिपीडितस्य स्वांसस्य कृतित्वगुणो वर्णितः ।

'लोकानन्दन? चन्दनद्रुम? सखे ! नास्मिन्वने स्थीयतां
दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् ।
ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला
न स्वान्येव कुलानि केवलममी, सर्वं दहेयुर्वनम् ॥'

अत्र वेणूनां परस्परसंघर्षसञ्जातदहनसंकुलत्वदोषेण वननाशरूपदोषो दर्शितः ।

'दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डतलमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥'

अत्र भ्रमराणामलङ्कारत्वगुणेन गजस्य तत्प्रतिक्षेपो दोषत्वेन वर्णितः ।

'आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनश्चर्वितं
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः ।
हे? सद्रत्न? तवैतदेव कुशलं यद्वानरेणादरा-
दन्तस्सारविलोकनव्यसनिना चूर्णीकृतं नाश्मना ॥'

अत्र वानरस्य चापलदोषेण रत्नस्य चूर्णनाभावो गुणत्वेन वर्णितः ।

अत्र प्रथमचतुर्थयोरुल्लासोऽन्वर्थः । मध्यमयोश्छत्रिन्यायेन लाक्षणिकः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे उल्लासप्रकरणम् ॥६८॥

---

—**अत्रेति** । **लोकानन्दनेति** । द्वितीयोदाहरणे लक्षणमुपपादयति—**अत्र वेणूनामिति** । **दानार्थिन इति** । तृतीयोदाहरणे तृतीयस्य लक्षणमुपपादयति—**अत्र भ्रमराणामिति** । **आघ्रातमिति** । चतुर्थश्लोके चतुर्थोल्लासमुपपादयति—**अत्र वानरस्येति** । प्रथमचतुर्थयोर्गुणाधानस्य साम्येऽपि दोषेण गुणाधानवर्णनात्मनस्तस्य प्रथमोल्लासतो विच्छित्तिविशेषसद्भावाच्चारुत्वं द्रष्टव्यम् । ननु, प्रथमचतुर्थयोर्गुणाधानादुल्लासशब्दस्यान्वर्थतया प्रवृत्तिसंभवेऽपि मध्यमयोर्दोषाधानलक्षणयोः कथमस्य शब्दस्य प्रवृत्तिरित्यत आह—**अत्रेति** । **मध्यमयोरिति** । दोषाधानात्मनोस्तयोश्छत्रिशब्दस्येवाच्छत्रिषु उल्लासशब्दस्यापि लक्षणया प्रवृत्तिस्सम्भवतीति भावः । न च तत्र छत्र्यच्छत्रिसाधारणैकलक्ष्यतावच्छेदकवदिह नानुगतमेकं लक्ष्यतावच्छेदकमस्तीति शङ्क्यम् । अन्याधीनधर्माधानत्वस्य चतुष्ट्यानुगतस्य सद्भावात् । वस्तुतस्तु, इह शास्त्रे तत्तदलङ्कारनाम्नां वैयाकरणाभिमतनदीवृद्ध्यादिवदर्थविशेषे परिभाषिकत्वेन न लक्षणापेक्षेति द्रष्टव्यम् । अत्रेदमवधेयम् । उल्लासाख्यमलङ्काकारान्तरमलक्षयतां प्राचामयमभिसन्धिः । उल्लासोदाह-

अथ अवज्ञा—

**ताभ्यां तौ यदि न स्यातामवज्ञालंकृतिस्तु सा ।**
**स्वल्पमेवाम्बु लभते प्रस्थं प्राप्यापि सागरम् ॥**
**मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ।**

ताभ्यां गुणदोषाभ्यां । तौ गुणदोषौ । अत्र कस्यचिद्गुणेनान्यस्य गुणालाभे द्वितीयार्धमुदाहरणम् । दोषेण दोषस्याप्राप्तौ तृतीयार्धम् । यथा वा—

'मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ।
यथा यूनस्तद्वत्परमरणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ॥'

**'त्वं चेत्सञ्चरसे वृषेण लघुता का नाम दिग्दन्तिनां**
**व्यालैः कङ्कणभूषणानि कुरुषे हानिर्न हेम्नामपि ।**

रणेषु अलङ्कारान्तराणां यथायथं सम्भवात् नाधिकोऽयमभ्युपगन्तव्यः । 'अपि मां पावयेदि'त्यत्र इच्छासम्बन्धेऽपि सम्बन्धवर्णनरूपातिशयोक्तेः पतिव्रतास्नानस्य गङ्गागतपावनत्वाहेतोस्तद्धेतुत्ववर्णनेन चातिशयोक्तेस्सम्भवात् । 'यदयं रथसंक्षोभा'दित्युदाहरणे अंसकृतित्वस्य समर्थनीयस्य नायिकांससङ्घर्षेण रथसंक्षोभकृतेन समर्थनात्काव्यलिङ्गस्य सम्भवात् 'काठिन्यं कुचयो'रित्यत्र विधातृनिन्दायास्समर्थनसापेक्षायाः पदमार्दवस्यास्थानसृष्ट्या समर्थनात् 'तदभाग्यं धनस्ये'त्यत्रापि सन्ननानाश्रयणेन धनगताभाग्यस्य समर्थनाच्च काव्यलिङ्गस्योपपत्तेः । 'लाभोऽयमेवे'त्यत्रापि विच्छित्तिविशेषाभावान्न कश्चिदलङ्कारः । 'लोकानन्दने'त्यादिषु सारूप्यनिबन्धनाप्रस्तुतप्रशंसायाः स्पष्टं प्रतीतिरुक्तोदाहरणानां प्राक्प्रदर्शिततत्तदलङ्कारोदाहरणेभ्यो न वैलक्षण्यमनुभवरूढमस्ति । यद्बलेनालङ्कारान्तरमन्वेषणीयमिति । न चैतेषूदाहरणेषु तत्तदलङ्कारान्तरसम्भवे अस्य तत्सङ्कर एव । न त्वेतावतास्यापलाप इति वाच्यम् । असङ्कीर्णस्यास्य विषयाभावेनाप्रवृत्तेः । इति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां उल्लासप्रकरणम् ॥ ६८ ॥

अवज्ञालङ्कारं लक्षयति—**ताभ्यामिति** । ताभ्यामन्यगुणदोषाभ्यामन्यगुणदोषयोरभावे अवज्ञालङ्कार इत्यर्थः । **द्वितीयार्धमिति** । तत्र हि सागरे अम्बुसमृद्धिसत्त्वेऽपि प्रस्थे तदनुरूपाम्बुसमृद्ध्यभावाल्लक्षणानुगतिरित्यर्थः । **तृतीयार्धमिति** । तत्र पद्मनिमीलनदोषेण चन्द्रस्य दोषलेशाभाववर्णनात् द्वितीयावज्ञेत्यर्थः । क्रमेणोदाहरणान्तरमाह—**म-**

१. चन्द्रालोके तु '**अवज्ञा वर्ण्यते वस्तु गुणदोषाक्षमं यदि । म्लायन्ति**

मूर्धन्यं कुरुषे सुधांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥'

अत्राद्ये कवितारमणीगुणाभ्यामरसबालिशहृदयोल्लासरूपगुणाभावो वर्णितः । द्वितीये परमेश्वरानङ्गीकरणदोषेण दिग्गजादीनां लघुतादिदोषाभावो वर्णितः ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अवज्ञाप्रकरणम् ॥६९॥

अथ अनुज्ञा—

**दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् ।**
**विपदस्सन्तु नश्शश्वद्यासु सङ्कीर्त्यते हरिः ॥**

यथा वा—

'मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे ।

---

**दुक्तिश्चेदित्यादि** । अत्रोभयत्रापि लक्षणमुपपादयति—**अत्राद्य इति** । अत्र केचित् अवज्ञोदाहरणेषु 'स्वल्पमेवाम्बु लभत'इत्यादिषु प्रदर्शितेषु नावज्ञाख्यमलङ्कारान्तरमभ्युपेयम् । तत्रान्यगुणेनान्यगुणदोषयोरन्यगुणदोषजननसमर्थयोः सतोरपि तदजननवर्णनेन विशेषोक्तेरेव वक्तुमुचितत्वात् । सागरसलिलसमृद्धिसत्त्वेऽपि प्रस्थे समृद्ध्यभावस्य पद्मसङ्कोचेऽपि चन्द्रगतदोषाभावस्य कवितायां सहृदयोल्लासकत्वगुणे सत्यपि अलसहृदयोल्लासाभावस्य परमेश्वरानारोहणदोषे सत्यपि दिग्गजादीनां लाघवादिलक्षणदोषाभावस्य च वर्णनेन तल्लक्षणसाविकलत्वादिति वदन्ति । वस्तुतस्तु, नात्र विशेषोक्तिर्वक्तु शक्या । 'हृदि स्नेहक्षयो नाभू'दित्यादितदुदाहरणेषु दीपज्वालास्नेहयोरिवात्र सागरसलिलसन्निधानप्रस्थगताम्बुसमृद्ध्यभावयोः कार्यकारणभावस्य लोकसिद्धस्याभावेनोक्तविशेषोक्तिलक्षणाभावा'न्मदुक्तिश्चे'दित्यत्र कवितारमणीगुणाभ्यामलसबालिशहृदयोल्लासाभाववर्णनेऽपि तयोः सहृदयतरुणोल्लासं प्रत्येव कारणतया तत्सत्त्वे सरसतरुणजनोल्लासाजन्मन्येव विशेषोक्तेर्लब्धप्रसरत्वाच्च । अतो ग्रन्थकारोक्तरीतिरेव समाश्रयणीयेति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अवज्ञाप्रकरणम् ॥ ६९ ॥

अनुज्ञालङ्कारं लक्षयति—**दोषस्येति** । अनिष्टसाधनतया प्रतीयमानस्य दोषस्य बलवदिष्टसाधनीभूतगुणावहतया इष्टसाधनत्वावगमेनाभ्यर्थनमनुज्ञालङ्कार इत्यर्थः।उदाहरणे विपदामनिष्टसाधनत्वेन प्रसिद्धानां बलवदिष्टसाधनीभूतहरिस्मरणापादकतयेष्टसाधनत्वात्तदभ्यर्थनं वर्णितमिति लक्षणानुगतिरिति भावः । उदाहरणान्तरमाह—**मय्येवेति** । अत्र लक्ष-

---

**यदि पद्मानि कां हानिस्तुहिनद्युतेः ॥'** इति पाठः । १. अयं चन्द्रालोकेऽनुक्तः ।

नरः प्रत्युपकारार्थी विपत्तिमभिकांक्षति ॥'

इयं हनूमन्तं प्रति राघवस्योक्तिः । अत्र प्रत्युपकाराभावो दोषः । तदभ्युपगमे हेतुर्गुणो विपत्त्याकांक्षाया अप्रसक्तिः ।सा च व्यतिरेकमुखप्रवृत्तेन सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन दर्शिता ।

यथा वा—

'भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसंपदः प्रमथनाथ! नाथामहे ।
भवद्भवनदेहलीविकटतण्डुदण्डाहति-
त्रुटन्मकुटकोटिभिर्मघवदादिभिर्भूयते ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अनुज्ञाप्रकरणम् ॥७०॥

अथ लेशः—

**लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।**
**अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ॥**
**शुक! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ।**

दोषस्य गुणत्वकल्पनं गुणस्य दोषत्वकल्पनं च लेशः। उदाहरणम्—

---

णसत्त्वमुपपादयति—**अत्रेति** । उपकारिणः प्रत्युपकारस्य कर्तव्यताया लोकशास्त्रसिद्धतया तदभावो दोष इत्यर्थः । **तदिति** । अत्र विपत्त्याकाङ्क्षाप्रसक्त्यभावो बलवदिष्टसाधनतया गुणः । तदाधायकतया प्रत्युपकाराभावस्याभ्यर्थनं वर्णितमितीदमपि अभ्यर्थनोदाहरणमिति भावः । नन्वत्र विपत्त्याकाङ्क्षाप्रसक्तिरूपगुणस्याप्रतिपादनात्कथमुदाहरणतेत्यत आह—**सा चेति** । अप्रसक्तिरित्यर्थः । तथा च वैधर्म्यनिबन्धनसामान्यकृतविशेषसमर्थनरूपार्थान्तरन्यासेन तस्याः प्रदर्शितत्वादुक्तालङ्कारोदाहरणतास्य युज्यत इत्यर्थः । उदाहरणान्तरमाह—**भजेमेति** । अत्रापि पिशाचस्वरूपप्राप्तिरूपदोषस्य भगवन्मन्दिरदेहलीस्थितत्रैलोक्याधिपत्यैश्वर्यशालिशतमखादिदिक्पालकिरीटकोटिभञ्जकप्रमथाधिपतितण्डुप्रभृतिदण्डाघाताभावरूपप्रबलगुणावहतया काव्यलिङ्गविधया समर्थितस्याभ्यनुज्ञानमभ्यर्थनं निबद्धमिति इदमपि तदुदाहरणमिति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अनुज्ञाप्रकरणम् ॥७०॥

लेशालङ्कारं लक्षयति—**लेशः स्यादिति** । दोषगुणयोस्तद्विपरीतभावकल्पनं लेश इ-

---

१. अयमलङ्कारश्चन्द्रालोके नोक्तः ।

राज्ञोऽभिमते विदुषि पुत्रे चिरं राजधान्यां प्रवसति तद्दर्शनोत्कण्ठितस्य गृहे स्थितस्य पितुर्वचनं अप्रस्तुतप्रशंसारूपम् । तत्र प्रथमार्धे इतरविहङ्गानामवक्तृत्वदोषस्य स्वच्छन्दचरणानुकूलतया गुणत्वं कल्पितम् । द्वितीयार्धे मधुरभाषित्वस्य गुणस्य पञ्जरबन्धहेतुतया दोषत्वं कल्पितम् ॥ न च अत्र व्याजस्तुतिराशङ्कनीया । नह्यत्र विहङ्गान्तराणां स्तुतिव्याजेन निन्दायां शुकस्य निन्दाव्याजेन स्तुतौ च तात्पर्यम् । किं तु पुत्रदर्शनोत्कण्ठितस्य पितुर्दोषगुणयोर्गुणत्वदोषत्वाभिमान एवात्र श्लोके निबद्धः ॥

यथा वा—

'सन्तस्सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा ।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥'

---

त्यर्थः । लक्षणं लक्ष्ये उपपादयति—**राज्ञ इति** । अयं श्लोकोऽप्रस्तुतप्रशंसारूपोऽप्रस्तुतशुकवृत्तान्तेन राजबहुमताचरकालप्रवासशीलवैदुष्यान्वितपुत्रदिदृक्षुगृहस्थितजनकवाक्यतया पुत्रवृत्तान्तस्य प्रतीतिरप्रस्तुतप्रशंसैवात्रालङ्कारो युक्तः । नत्वलङ्कारान्तरं लेशनामकं युक्तमित्यत आह—**तत्र प्रथमार्ध इति** । वाच्यव्यङ्ग्ययोरप्रस्तुतप्रस्तुतवृत्तान्तयोस्समुदितयोरप्रस्तुतप्रस्तुतप्रशंसाविश्रान्तावपि अप्रस्तुतवाच्यकक्ष्यायां लेशः सम्भवत्येवेति भावः । ननु, 'कस्ते शौर्यमदो योद्धु'मित्यादाविव निन्दया स्तुत्यभिव्यक्तिवत् स्तुत्या निन्दाभिव्यक्तिवच्चात्रापि विहगान्तराणां स्तुतिव्याजेन निन्दायाश्शुकनिन्दाव्याजेन पुत्रस्तुतेश्च प्रतीतेर्व्याजस्तुतिरेवात्र युक्तेत्याशङ्क्य परिहरति—**न चेति** । **न ह्यत्रेति** । व्याजस्तुत्युदाहरणे ह्यत्र नृपनिन्दाव्याजेन वर्णनीयराजस्तुतौ तात्पर्यवदिह विहगान्तरनिन्दाशुकस्तुतिभ्यां विद्वत्पुरुषान्तरनिन्दाविद्वत्तनयस्तुत्योस्तात्पर्यविरहान्न व्याजस्तुतिरत्र युक्तेत्यर्थः । क्व तर्हि तात्पर्यमित्यत्राह—**किं त्विति** । पुत्रदर्शनोत्कण्ठितपितृवचने अस्मिन्नितरविहगानामवक्तृत्वदोषस्यैच्छिकविहारसाधनतया गुणत्वकल्पने मधुरभाषितारूपगुणस्य पञ्जरबन्धहेतुतया दोषत्वकल्पनं एव तात्पर्यं, न तु निन्दास्तुत्योरित्यर्थः । उदाहरणान्तरमाह—**सन्त इति** । व्यसनिनः उद्योगिन इत्यर्थः । **प्रादुर्भवद्यन्त्रणा इति** । यन्त्रणमिह शास्त्रमार्गानतिलङ्घनं तच्छालिन इत्यर्थः । 'जनापवादचकिता' इत्यनेन आस्तिकता व्यज्यते । अत्र सत्पुरुषसौशील्यविवेकादिगुणस्य सार्वत्रिकदुःखाकुलजीवनसाधनतया दोषत्वस्य प्राकृतजनचारित्रस्य दोषस्य तद्धन्यत्वोक्त्या गुणत्वस्य च कल्पनादिदमपि ले-

दण्डी त्वत्रोदाजहार—

'युवैष गुणवान्राजा योग्यस्ते पतिरूर्जितः ।
रणोत्सवे मनस्सक्तं यस्य कामोत्सवादपि ॥'
'चपलो निर्दयश्चासौ जनः किं तेन मे सखि! ।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥'

अत्राद्यश्लोके राज्ञो वीर्योत्कर्षस्तुतिः कन्याया निरन्तरं भोगं निर्विविक्षोर्दोषत्वेन प्रतिभासतामित्यभिप्रेत्य विदग्धया सख्या राजप्रकोपपरिजिहीर्षया स एव दोषो गुणत्वेन वर्णितः । उत्तरश्लोके सखीभिरुपदिष्टं मानं कर्तुमशक्तयापि तासामग्रतो मानपरिग्रहानुगुणं प्रतिज्ञाय तदनिर्वाहमपाशङ्कमानया सखीनामुपहासं परिजिहीर्षन्त्या नायिकया नायकस्य चाटुकारितागुण एव दोषत्वेन वर्णितः । न चाद्यश्लोके स्तुतिर्निन्दापर्यवसायिनी द्वितीयश्लोके निन्दा स्तुतिपर्यवसायिनीति व्याजस्तुतिराशङ्कनीया । राजप्रकोपादिपरिहारार्थमिह निन्दास्तुत्योरन्याविदिततया लेशत एवोद्घाटनेन

---

शोदाहरणमिति भावः । श्लोकयोः क्रमेण लक्षणमुपपादयति—**अत्रेति** । कामोत्सवादिति ल्यब्लोपे पञ्चमी । कामोत्सवमपेक्ष्येत्यर्थः । तथा च तदतिशयितरणोत्सवप्रीतिवर्णनेन राज्ञो वीर्यातिशयस्तुतिरित्यर्थः । **दोषत्वेनेति** । युवतिं परित्यज्य यूनोऽन्यत्रासक्तिर्लोके दोषत्वेन प्रसिद्धेति कान्तापरित्यागेन रणोत्सवासक्तिवर्णनेन तस्य शौर्यस्तुतिर्दोषत्वेन भासतामित्यभिप्रायेण प्रतिपादनाद्वैदग्ध्यशालिन्या सख्या राजक्रोधपरिहाराय वीर्योत्सेकस्तुतिरूपदोषस्य गुणत्वेन वर्णनादाद्यश्लोक आद्यलेशस्योदाहरणमिति भावः । **उत्तरश्लोक इति** । 'चपलो निर्दयश्चे'ति द्वितीयश्लोके नायिकावाक्ये नायकवृत्तान्तं सदा स्वस्मिन् सापराधमाकर्ण्य सखीभिर्मानवत्या त्वया भवितव्यं तथा सति विविधसान्त्वनादिभिः स्वयमेव पादयोः पतिष्यतीत्युपदिष्टं मानं तदागमनजनितहर्षादिपरवशतया कर्तुमसमर्थायाः मानङ्करिष्यामीति तासां पुरः प्रतिज्ञाय तदकरणेन सखीनामुपहासं परिहर्तुं नायिकाया विदग्धाया उक्तौ तदीयचाटुकारितागुणस्यागःप्रमार्जनैदम्पर्यवर्णनेन दोषत्ववर्णनात् द्वितीयस्य लेशस्येदमुदाहरणं युक्तमेवेति भावः । ननु, श्लोकयोरनयोर्वीर्योत्सेकस्तुतिर्निर्दयत्वादिकृतनायकनिन्दयोर्निन्दास्तुतिपर्यवसायितया व्याजस्तुतिरेवात्र युक्तेत्याशङ्क्य परिहरति—**न चेति** । **राजेति** । स्तुतिनिन्दयोरिह निन्दास्तुतिपर्यवसानस्य विदग्धसखीनायिकावचनप्रतिपादितगुणदोषभाववर्णनरूपलेशत एव प्रतीतेः 'कस्स्वर्धुनी'त्यादि

ततो विशेषादिति। वस्तुतस्त्विह व्याजस्तुतिसद्भावेऽपि न दोषः । न ह्येतावता लेशमात्रस्य व्याजस्तुत्यन्तर्भावः प्रसज्यते। तदसङ्कीर्णयोरपि लेशोदाहरणयोर्दर्शितत्वात्। नापि व्याजस्तुतिमात्रस्य लेशान्तर्भावः प्रसज्यते। भिन्नविषयव्याजस्तुत्युदाहरणेषु

'कस्त्वं वानर? रामचन्द्रभवने लेखार्थसंवाहकः'

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा'

इत्यादिषु दोषगुणीकरणस्य गुणदोषीकरणस्य चाभावात्।तत्रान्यगुणदोषाभ्यामन्यत्र गुणदोषयोः प्रतीतेः ।

विषयैक्येऽपि—

'इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिः
दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक! श्यामलिम्नानुलिप्ता-
न्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥'

इत्याद्युदाहरणेषु लेशास्पर्शनात्। अत्र हीन्दुलक्ष्मादीनां धवलीकरणाभावदोष एव गुणत्वेन न पर्यवस्यति । किं तु परिसङ्ख्यारूपेण त-

---

व्याजस्तुत्युदाहरण इव स्वतो निन्दास्तुतिपर्यवसानाभावान्नेह व्याजस्तुतेरवकाश इति भावः । तत्सद्भावेऽपि व्याजस्तुतिलेशयोरन्योन्यविविक्तविषययोरत्र सङ्करोपपत्तिरित्याह— **वस्तुतस्त्वि.ति** । **दर्शितत्वादिति** । 'अखिलेषु विहङ्गेषु' 'सन्तस्सच्चरितोदये'त्युदाहरणयोः स्तुतिनिन्दाभ्यां निन्दास्तुत्योरनभिव्यक्तया व्याजस्तुतेस्तत्रावकाशाभावस्य उदाहरणव्याख्यावसरे प्रदर्शनादित्यर्थः । नन्वेवमपि व्याजस्तुतौ सर्वत्र लेशप्रसराद्व्याजस्तुतेर्लेशान्तर्भावोऽस्त्वित्याशङ्क्य परिहरति—**नापीति** । **भिन्नविषयेति**। अन्यविषयकनिन्दास्तुतिभ्यामन्यत्र स्तुतिनिन्दापर्यवसानसद्भावेऽपि दोषगुणयोर्गुणदोषभाववर्णनविरहेण लेशासम्भवाद्व्याजस्तुतेर्लेशालङ्कारान्तर्भावासम्भवादिति भावः । भिन्नविषयव्याजस्तुतेर्लेशासङ्करं प्रतिपाद्य विषयैक्येऽपि तमाह— **विषयैक्येऽपीति** ।असङ्करमेवोदाहरणं प्रदर्शयति — **अत्रहीति** । **परिसंख्यारूपेणेति** । इन्दुकलङ्कादिव्यतिरिक्तानां धवलीकरणस्य ऐन्दवकलङ्कादौ धवलिमविरोधिश्यामलतोपरागवर्णनेन धवलिमनिषेधप्रतीतेस्तदतिरिक्तवस्तुधवलीकरणलक्षणगुणान्तरप्रतीतेर्नात्र लेशसंस्पर्श इति भावः । क्वचिद्व्याजस्तुत्युदाहरणे लेशसद्भावेऽपि स्तु-

तोऽन्यत्सर्वं धवलितमित्यन्यो गुणः प्रतीयते । क्वचिद्व्याजस्तुत्युदाहरणे गुणदोषीकरणसत्त्वेऽपि स्तुतेर्विषयान्तरमपि दृश्यते ।

यथा—

'सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥'

अत्र हि वाच्यया निन्दया परिसङ्ख्यारूपेण ततोऽन्यत्सर्वमर्थिनामभिमतं दीनारादि दीयते इति स्तुत्यन्तरमपि प्रतीयते । एवं च येषूदाहरणेषु 'कस्ते शौर्यमदो योद्धु' मित्यादिषु गुणदोषादिषु गुणदोषीकरणादिकमेव व्याजस्तुतिरूपतयावतिष्ठते, तत्र लेशव्याजस्तुत्योस्सङ्करोऽस्तु । इत्थमेव हि व्याजस्तुत्यप्रस्तुतप्रशंसयोरपि प्राक्सङ्करो दर्शितः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे लेशप्रकरणम् ॥७१ ॥

अथ मुद्रा—

**सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।**
**नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ॥**

---

तेरन्यविषयतया नैतत्सङ्कर इत्यभिप्रेत्याह—**क्वचिदिति** । **सर्वदेति** । अत्र सर्वदातृत्वप्रथाया मिथ्यात्वं 'नारयो लेभिर' इत्युत्तरार्धगताभ्यां वाक्यार्थाभ्यां परिसंख्याविधया समर्थनात्काव्यलिङ्गं परिसंख्या च । ततश्च ताभ्यां निन्दाप्रतीतिस्तया निन्दया पृष्ठभागवक्षोव्यतिरिक्तं सर्वं ददासीति स्तुत्यन्तरप्रतीतिरिति भावः । अत्र सर्वदातृत्वस्य मिथ्यात्ववर्णनेन दोषत्वकल्पनाल्लेशसद्भावेऽपि न तावन्मात्रेण वाच्यकक्ष्यायां व्याजस्तुतेः पर्यवसानम् । किं तु व्यङ्ग्यकक्ष्यायां स्तुतिप्रतीतौ तत्र न लेशावकाश इति व्याजस्तुत्येकदेशे लेशसंस्पर्शेऽप्येकदेशान्तरे तदसंस्पर्शो व्यक्त इति भावः । एवं विविक्तविषययोरनयोः क्वचिदुदाहरणे समावेशे सङ्कर एव । नैकेनापरस्यान्यथासिद्धिरित्याह—**येष्विति** । 'कस्ते शौर्यमदो योद्धु'मित्यादिषु शौर्यमदलक्षणगुणस्य सप्तसतिपदश्लेषनिबन्धनदोषत्वकल्पनात्मकलेशस्य वाच्यनृपनिन्दया तत्स्तुतेश्च प्रतीतेरुभयोरेकवाचकानुप्रवेशसङ्कर इत्यर्थः । नन्वेवंविधः सङ्करः क्वापि न दृष्ट इत्यत आह—**इत्थमेवेति** । 'लावण्यद्रविणव्ययो न गणित' इत्यत्र व्याजस्तुत्यप्रस्तुतप्रशंसयोरेकवाचकानुप्रवेशसङ्करो दर्शितः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां लेशप्रकरणम् ॥ ७१ ॥

मुद्रालङ्कारं लक्षयति—**सूच्यार्थेति** । विवक्षितार्थप्रतिपादनपरैः पदैः सूचनीयस्या-

---

१. अयमलङ्कारश्चन्द्रालोके नास्ति ।

अत्र नायिकावर्णनपरेण युग्मविपुलापदेनास्या अनुष्टुभो युग्मविपुला-नामत्वरूपसूच्यार्थसूचनं मुद्रा । यद्यप्यत्र ग्रन्थे वृत्तनाम्नो नास्ति सूचनीयत्वम् । तथाप्यस्योत्तरार्धस्य लक्ष्यलक्षणयुक्तच्छन्दश्शास्त्रमध्यपातित्वेन तस्य सूचनीयत्वमस्तीति तदभिप्रायेण लक्षणं योज्यम् । एवं नवरत्नमालायां तत्तद्रत्ननामनिवेशनेन तत्तन्नामकजातिसूचनम् । नक्षत्रमालायामग्न्यादिदेवतानामभिः नक्षत्रसूचनमित्यादावयमेवालङ्कारः । एवं नाटकेषु वक्ष्यमाणार्थसूचनेष्वपि ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे मुद्राप्रकरणम् ॥ ७२ ॥

अथ रत्नावली—

**क्रमिकं[1] प्रकृतार्थानां न्यासं रत्नावलीं विदुः ।**
**चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते! ॥**

अत्र चतुरास्यादिपदैर्वर्णनीयस्य राज्ञः ब्रह्मविष्णुरुद्रात्मता प्रतीयत इति प्रसिद्धसहपाठानां ब्रह्मादीनां क्रमेण निवेशनं रत्नावली ।

---

र्थस्य सूचनं मुद्रेत्यर्थः । उत्तरार्धे लक्षणमुपपादयति—**अत्र नायिकेति** । नायिकावर्णनमिह विवक्षितम् । 'दृग्युग्मविपुले'ति नायिकाविशेषणेन तदीयनयनवैपुल्यप्रतिपादनपरेण युग्मविपुलापदेन युग्मविपुलानामिकेयमनुष्टुबित्यनुष्टुबवान्तरभेदनामसूचनान्मुद्रालङ्कार इत्यर्थः । युग्मविपुलारूपानुष्टुभो लक्षणमाहुर्वृत्तलक्षणविदः—'यस्यां लस्सप्तमो युग्मे सा युग्मविपुला मता ।' इति । यस्याः अनुष्टुभः युग्मे पादे द्वितीये चतुर्थे च पादे सप्तमो वर्णो लघुर्भवति सा युग्मविपुलेति तदर्थः । नन्वत्र तरुणीवर्णनप्रस्तावे वृत्तस्यालक्षणीयतया तन्नाम्नः सूचनीयत्वाभावान्नेह मुद्रालङ्कारो युज्यत इत्याक्षिपति—**यद्यपीति** । सत्यम् । नात्र वृत्तनाम सूचनीयम् । तथापि प्रागुक्तविपुलालक्षणश्लोकोत्तरार्द्धे 'यदि नितम्बगुर्वी'त्युत्तरार्धमुदाहरणं भवेत्तदा तत्र वृत्तस्य सूचनीयत्वमस्तीत्यभिप्रेत्यात्र मुद्रालङ्कारोदाहरणमिति परिहरति—**तथापीति** ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां मुद्राप्रकरणम् ॥ ७२ ॥

रत्नावलीं लक्षयति—**क्रमिकमिति** । प्रकृतार्थानां क्रमिको विन्यासो रत्नावलीत्यर्थः । उदाहरणे लक्षणं योजयति—**अत्रेति** । यद्यपि राजवर्णनप्रस्तावादत्र न ब्रह्मादीनां प्रकृतता । तथापि राज्ञोऽत्र त्रिमूर्त्यात्मकता वर्णनीयेति तेऽपि प्रकृताः । तेषां च यथाप्रसिद्धि क्रमेण विनिवेशवर्णनादिदमुदाहरणं युक्तमेवेति भावः । उदाहरणान्तरमाह—

---

१. अयमपि चन्द्रालोके नास्ति ।

यथा वा—

'रत्यासप्रियलाञ्छने कठिनतावासे रसालिङ्गिते
प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे ।
कोकस्पर्धिनि भोगभाजि जनितानङ्गे खलीनोन्मुखे
भाति श्रीरमणावतारदशकं बाले ! भवत्याः स्तने ॥'

यथा वा—

'लीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः
कुम्भावैभौ कुचपरिकरः पूर्वपक्षीचकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादी-
द्वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥'

अत्र पत्रदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानि बुधजनप्रसिद्धक्रमेण न्यस्तानि । प्रसिद्धसहपाठानां प्रसिद्धक्रमाननुसरणेऽप्ययमेवालङ्कारः।

यथा वा—

'यस्य वह्निमयो हृदयेषु जलमयो लोचनपुटेषु मारुतमयः श्वसितेषु क्षमामयोऽङ्गेष्वाकाशमयस्स्वान्तेषु पञ्चमहाभूतमयो मूर्त इवादृश्यत निहतपतिषु सामन्तान्तःपुरेषु प्रतापः ॥'

एवमष्टलोकपालनवग्रहादीनां प्रसिद्धसहपाठानां यथाकथञ्चित् प्रकृतो-

---

**रत्यासेति**। अत्र 'रत्यासप्रियलाञ्छना'दिपदश्लेषेण मत्स्यादिभगवदवताराणां क्रमविन्यासवर्णनाद्रत्नावलीति भावः । क्वचित्क्रमिकाणां प्रसिद्धक्रमाणां तत्क्रमोल्लङ्घनेन विनिवेशेऽपि अयमेवालङ्कार इत्याह—**प्रसिद्धेति**। 'यस्य वह्निमय' इत्युदाहरणे पृथिव्यप्तेजोवाय्वाकाशानां प्रसिद्धक्रमोल्लङ्घनेन वह्निजलादिक्रमेण विनिवेशादत्रापि रत्नावलीति भावः। **अष्टलोकपालेति**। 'यः पुरन्दर इवाधिपत्ये वह्निरिव शुचितायां दण्डधर इव दण्डे निर्ऋतिरिव भयोत्पादने वरुण इव परोपकृतौ अनिल इव जवे धनद इव धनसमृद्धौ ईशान इव मदनमथने धरणिमण्डले व्यराजत। भास्वतालङ्कारेण श्वेतरोचिषा स्मितेन लोहितेनाधरेण सौम्येन दर्शनेन गुरुणा नितम्बेन सितेन दशनेन शनैश्चरेण पादेन त्रिभुवनविजयकेतुना रूपेण तमसा कचेन' इत्यादौ वर्णनीयराजवनितादेर्ग्रहमयत्वोत्प्रेक्षानिमित्ततया प्रसिद्धसहपा-

---

१. 'वनितादेरुपमानतया ग्रहमयत्वोत्प्रेक्षानिमित्ततया च' इति ग. पाठः ।

पमानोपरञ्जकतादिप्रकारेण निवेशने रत्नावल्यलङ्कारः । प्रकृतान्वयं विना क्रमिकतत्तन्नाम्नां श्लेषभङ्ग्या निवेशने क्रमप्रसिद्धिरहितानां प्रसिद्धसहपाठानां नवरत्नादीनां निवेशनेऽप्ययमेवालङ्कारः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे रत्नावलीप्रकरणम् ॥७३॥

अथ तद्गुणः—

[1] तद्गुणस्स्वगुणत्यागादन्यदीयगुणग्रहः ।
पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥

यथा वा—

'वीर! त्वद्रिपुरमणी परिधातुं पल्लवानि संस्पृश्य ।
न हरति वनभुवि निजकररुहरुचिखचितानि पाण्डुपत्रधिया ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे तद्गुणप्रकरणम् ॥७४॥

अथ पूर्वरूपम्—

पुनस्स्वगुणसम्प्राप्तिः पूर्वरूपमुदाहृतम्[2] ।
हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥

---

ठानां दिक्पालनवग्रहाणां क्रमेण निवेशने आनिवेशने चायमेवालङ्कार इति भावः । सर्वमिदं प्रकृतार्थान्वयेनाप्रकृतार्थानां निवेशने उदाहरणम् । क्वचित्प्रकृतान्वयं विनापि क्रमिकाणां श्लेषभङ्ग्या तत्तन्नाम्ना निर्देशेऽप्येषा सम्भवतीत्याह—**प्रकृतान्वयं विनेति** ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां रत्नावलीप्रकरणम् ॥७३॥

तद्गुणालङ्कारं लक्षयति—**तद्गुण इति** । स्वगुणपरित्यागेनान्यदीयगुणस्वीकारस्तद्गुणः । तस्य गुणोऽत्रास्तीति अन्वर्थनामा तद्गुणालङ्कार इत्यर्थः । उदाहरणे नासामौक्तिकस्याधरसन्निधानेन पद्मरागायितत्ववर्णनात्स्वीयधावल्यपरित्यागेनारुण्यस्वीकारात् । उदाहरणान्तरे रिपुरमणीपाणिस्पर्शेन स्वीयारुणिमत्यागात्तदीयनखरुचेः श्वैत्यस्य स्वीकाराच्च उभयत्र तद्गुणालङ्कार इति भावः । पूर्वोदाहरणादत्र पाण्डुपत्रभ्रान्त्या पल्लवानि परिधातुं प्रवृत्तायाः रिपुरमण्यास्तत्परित्यागवर्णनेन विच्छित्तिविशेषः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां तद्गुणप्रकरणम् ॥ ७४॥

पूर्वरूपालङ्कारं लक्षयति—**पुनरिति** । प्रथमं स्वगुणत्यागेन स्वीकृतान्यगुणस्य पुन-

---

१. चन्द्रालोके तु '**तद्गुणस्स्वगुणग्लानावन्यतस्स्वगुणोदयः । पद्मरागारुणं नासामौक्तिकं तेऽधराश्रितम्**।' इति पाठः। २. '**विज्ञेया पूर्वरूपता**' इति चन्द्रालो-

यथा वा—

'विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥'

अयमेव तद्गुण इति केचिद्व्यवजह्रुः ।

**पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि ।**
**दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः ॥**

लक्षणे चकारात्पूर्वरूपमिति लक्ष्यवाचकपदानुवृत्तिः ।

यथा वा—

'द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कंचुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्! सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥'

इति श्रीमदप्पय्यदीक्षितकृतौ कुवलयानन्दे पूर्वरूपप्रकरणम् ॥७५॥

---

र्निजगुणप्राप्तिः पूर्वरूपमित्यर्थः । उदाहरणे शेषस्य स्वतश्शुभ्रस्य शिवकण्ठांशुसम्पर्कात्परित्यक्तनिजधवलिम्नः स्वीकृततद्वर्णस्य पुनर्यशसा निजरूपप्राप्तिवर्णनात् । द्वितीयोदाहरणे रविरथहयानामरुणवर्णस्वीकारस्य तदनु तत्परित्यागेन गारुत्मतरत्नप्रभास्वीकारेण स्वगुणसम्प्राप्तेः पूर्वरूपमिति भावः । **अयमेवेति** । एवकारेण नालङ्कारान्तरं स्वीकर्तव्यमिति व्यवच्छेदः प्रतीयते । केचिदित्यस्वरसोद्भावनम् । तद्बीजं तु नात्र तद्गुणस्यावकाशः । स्वगुणत्यागेनान्यदीयगुणपरिग्रहे हि तस्य प्रवृत्तिः । न चेह तत्सम्भवः । शेषस्य रविरथहयानां च प्रथमं स्वगुणत्यागेनान्यदीयगुणग्रहणसत्त्वेऽपि पश्चात्स्वगुणत्यागान्यदीयगुणग्रहणयोरभावात् । अत एव 'स्वगुणत्यागादि' ति तद्गुणलक्षणे 'स्वगुणे'त्यत्र समासान्तर्हितगुणगुणिसम्बन्धमात्रमागन्तुकानागन्तुकसाधारणं विवक्षितम् । ततश्च 'विभिन्नवर्णा'इत्यादावरुणवर्णसंक्रान्तेरपि स्वीयगुणसंक्रान्तितया तत्परित्यागेनान्यदीयगुणस्वीकारसत्त्वात्तद्गुण एवेति निरस्तम् । तथापि स्वीयस्यैव गुणस्य प्राप्त्या अन्यदीयगुणाभावेन तद्गुणस्य वक्तुमशक्यत्वादिति । **पूर्वावस्थेति** । स्पष्टम् । उदाहरणे दीपनिर्वापणेन तमोऽनुवृत्त्या विकृतस्य गृहादेः काञ्चीरत्नकान्तिभिः दीपसन्निधानकालिकानन्धकारितालक्षणपूर्वावस्थानुवृत्तेर्लक्षणानुगतिः स्पष्टेति । उदाहरणान्तरमाह—**द्वारमिति** । खड्गिभिः खड्गपाणिभिः पूर्वमावृतं सम्प्र-

---

कपाठः। १.'**यद्वस्तुनोऽन्यथारूपं तथा स्यात्पूर्वरूपता**।' इति चन्द्रालोकपाठः।

अथ अतद्गुणः—

**सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।**
**चिरं रागिणि मच्चित्ते निहितोऽपि न रज्जसि ॥**

यथा वा—

'गण्डाभोगे विहरति मदैः पिच्छिले दिग्गजानां
वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि ।
यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते
कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंहक्षितीन्द्र! ॥'

ननु, चान्यगुणेनान्यत्र गुणोदयानुदयरूपाभ्यामुल्लासावज्ञालङ्काराभ्यां तद्गुणातद्गुणयोः को भेदः । उच्यते । उल्लासावज्ञालक्षणयोः गुणशब्दो दोषप्रतिपक्षवाची । अन्यगुणेनान्यत्र गुणोदयानुदयौ च न तस्यैव गुणस्य संक्रमणासंक्रमणे । किं तु सद्गुरूपदेशेन सदसच्छिष्ययोर्ज्ञानो-

---

त्यपि खड्गिभिरेव खड्गमृगैरेव । गजैः वनगजैः । कंचुकिभिः दौवारिकैः भुजङ्गैश्च । महिषीभिः पट्टस्त्रीभिः वनमहिषीभिश्च । एवमत्र श्लेषमहिम्ना राज्यस्थितेः पूर्वावस्थावर्णनादिहापि पूर्वरूपमिति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां पूर्वरूपप्रकरणम् ॥७५॥

अतद्गुणं लक्षयति—**संगतेति** । गुणवत्सन्निधावपि तदीयगुणानङ्गीकारोऽतद्गुण इत्यर्थः । उदाहरणयोः रागिचित्तसन्निधानेऽपि तदीयरागास्वीकारात् श्यामरूपाश्रयदिग्गजमदाकीर्णगण्डाभोगवैरिस्त्रीनयनकमलाञ्जनसम्बन्धेऽपि यशसि तदीयगुणश्यामिकास्वीकारात्लक्षणसङ्गतिः । ननु, 'अपि मां पावयेत्साध्वी'त्युल्लासालङ्कारे पतिव्रतामाहात्म्यलक्षणगुणेन गङ्गायाः पावनत्वलक्षणगुणोदयवर्णनात् तद्गुणस्य न ततो भेदः । 'स्वल्पमेवाम्बु लभत'इत्यत्र पयोनिधिसलिलसमृद्धिलक्षणगुणेन प्रस्थे तत्समृद्ध्यभाववर्णनात्मनोऽवज्ञालङ्कारादतद्गुणस्य भेदो न सम्भवतीत्याक्षिपति—**नन्विति** । **उल्लासेति** । तल्लक्षणयोर्गुणशब्दस्य दोषविपरीतधर्मरूपगुणवाचकता । इह तु रूपादिलक्षणगुणवाचकता । किं च तयोर्नान्यगुणसंक्रमेणासंक्रमणे अन्यगुणस्यान्यत्र न संक्रमासंक्रमौ । किं तु तद्गुणाधीनगुणान्तरोत्पादानुत्पादौ । इह पुनरन्यगतरूपादिलक्षणगुणसंक्रमणे इति नानयोस्ताभ्यामभेदप्रसक्तिरिति भावः । ननु तथापि गुणवद्वस्तुसान्निधिलक्षणकारणसद्भावेऽपि गुणानुदयस्यावज्ञालङ्कारातद्गुणयोः स-

---

१. '**विशन्नपि रवेर्मध्यं शीत एव सदा शशी** ।' इति चन्द्रालोकपाठः ।

त्परयनुत्पत्तिवत्तद्गुणजन्यत्वेन सम्भावितयोर्गुणान्तरयोरुत्पत्त्यनुत्पत्ती। तद्गुणातद्गुणयोः पुनः गुणशब्दो रूपरसगन्धादिगुणवाची । तत्रान्यदीयगुणग्रहणाग्रहणे च रक्तस्फटिकवस्त्रमालिन्यादिन्यायेन अन्यदीयगुणेनैवानुरञ्जनाननुरञ्जने विवक्षिते । तथैव चोदाहरणानि दर्शितानि। यद्यप्यवज्ञालंकृतिरतद्गुणश्च विशेषोक्तिविशेषावेव । 'कार्याजनिर्विशेषोक्तिस्सति पुष्कलकारणे ।' इति तत्सामान्यलक्षणाक्रान्तत्वात् । तथाप्युल्लासतद्गुणप्रतिद्वन्द्विना विशेषाकारेणालङ्कारान्तरतया परिगणिताविति ध्येयम् ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अतद्गुणप्रकरणम् ॥७६॥

अथ अनुगुणः—

**प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः ।**
**नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥**

यथा वा—

'कपिरपि च कापिशायनमदमत्तो वृश्चिकेन सन्दष्टः ।
अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥'

अत्र कपित्वजात्या स्वतःसिद्धस्य वैकृतस्य मद्यसेवादिभिरुत्कर्षः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अनुगुणप्रकरणम् ॥७७॥

---

द्भावाद्विशेषोक्तितो भेदो न घटत इत्याक्षिपति—**यद्यपीति** । **तथापीति** । उल्लासतद्गुणप्रतिद्वन्द्विना रूपेणालङ्कारान्तरतया अनयोः परिगणनमिति भावः । एतत्तत्त्वमस्माभिः अवज्ञालङ्कारप्रस्तावे प्रपञ्चितं न विस्मर्तव्यम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अतद्गुणप्रकरणम् ॥ ७६ ॥

अनुगुणालङ्कारं लक्षयति—**प्रागिति** । सजातीयगुणवदन्यसन्निधानात् प्राग्विद्यमानस्वीयगुणोत्कर्षवर्णनमनुगुणालङ्कार इत्यर्थः । उदाहरणे नीलोत्पलानां स्वतो नीलानामतिनीलकटाक्षसन्निधानान्नैल्यातिशयवर्णनाल्लक्षणानुगमः स्फुटः । उदाहरणान्तरे लक्षणमुपपादयति—**अत्र कपित्वेति** ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अनुगुणप्रकरणम् ॥ ७७ ॥

---

१. केचित्तु चन्द्रालोके '**प्राक्सिद्धिस्स्वगुणोत्कर्षोऽनुगुणः परसन्निधेः** ।' इति पठन्तः 'परसन्निधानादनुगुणस्वगुणोत्कर्षवर्णनं प्राक्सिद्धिर्नामालङ्कारः' इति व्याचख्युः ।

अथ मीलितम्—

**[1]मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते ।**
**रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥**

यथा वा—

मल्लिकामाल्यभारिण्यस्सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥'

अत्राद्ये चरणालक्तकरसयोररुणिमगुणसाम्याद्भेदानध्यवसायः । द्वितीयोदाहरणे चन्द्रिकाभिसारिकाणां धवलिमगुणसाम्याद्भेदानध्यवसायः ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे मीलितप्रकरणम् ॥७८॥

अथ सामान्यम्—

**[2]सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते ।**
**पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥**

यथा वा—

'रत्नस्तम्भेषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः ।
लङ्केश्वरस्सभामध्ये न ज्ञातो वालिसूनुना ॥'

---

मीलितालङ्कारं लक्षयति—**मीलितमिति** । सदृशयोर्वस्तुनोस्सादृश्यात् भेदानभिव्यक्तौ मीलितमित्यर्थः। उदाहरणयोर्लक्षणमुपपादयति—**अत्राद्य इति** । चरणस्य स्वभावारुणतया अलक्तकरसानुरागेऽपि तयोररुणिमगुणस्योत्कर्षापकर्षयोरभावेन तत्साम्यात् भेदानभिव्यक्तिः । अत्र 'सहजारुण'इति चरणविशेषणं भेदानभिव्यक्तिहेतुत्वोपपादकम् । **द्वितीयेति** । तत्र ज्योत्स्नाभिसारिकाणां धवलप्रसाधनानामभिसरणसाधनानां भेदानभिव्यक्तिहेतुत्वाभिप्रायगर्भाणि 'मल्लिके'त्यादीनि त्रीणि विशेषणानि । ततश्च धवलिमगुणसाधारण्यादभिसारिकाणां चन्द्रिकायाश्च भेदानुपलम्भ इति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां मीलितप्रकरणम् ॥ ७८ ॥

सामान्यालङ्कारं लक्षयति—**सामान्यमिति** । यदनेकस्य वस्तुनः साम्येन व्यावर्तकधर्मानुपलम्भस्तत्सामान्यं नामालङ्कार इत्यर्थः । उदाहरणयोः सरःप्रविष्टाङ्गनामुखानां पद्मानां च साधारणधर्मवत्तया व्यावर्तकधर्मादर्शनात्, रत्नस्तम्भरावणप्रतिबिम्बानां बिम्बसादृश्यात्, परस्परबिम्बप्रतिबिम्बव्यावर्तकधर्मानुपलम्भाच, लक्षणानुगतिरिति भावः । न-

---

१.२ इमौ चन्द्रालोके अनुक्तौ ।

मीलितालङ्कारे एकेनापरस्य भिन्नस्वरूपानवभासरूपं मीलनं क्रियते। सामान्यालङ्कारे तु भिन्नस्वरूपावभासेऽपि व्यावर्तकविशेषो नोपलक्ष्यत इति भेदः। मीलितोदाहरणे हि सहजारुण्याच्चरणादेर्वस्त्वन्तरत्वेनागन्तुकं यावकारुण्यं न भासते। सामान्योदाहरणे तु पद्मानां मुखानां च व्यक्त्यन्तरतया भानमस्त्येव। यथा रावणदेहस्य तत्प्रतिबिम्बानां च। किं त्विदं पद्ममिदं मुखमयं बिम्बोऽयं प्रतिबिम्ब इति विशेषः परं नोपलक्ष्यते। अत एव भेदतिरोधानान्मीलितं तदतिरोधानेऽपि साम्येन व्यावर्तकानवभासे सामान्यमित्युभयोरप्यन्वर्थता। केचित्तु, वस्तुद्वयस्य लक्षणसाम्यात्तयोः केन चिद्बलीयसा तदन्यस्य स्वरूपतिरोधाने मीलितम्। स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधाने सामान्यम्। एवं च।

'अपाङ्गतरले दृशौ तरलवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥'

---

नु, भेदानध्यवसायस्य साम्या-मीलितादस्य को भेद इत्यत आह—**मीलितेति**। मीलितालङ्कारे सर्वात्मना भेदस्यैव सामान्यधर्मनिबन्धनस्य तत्तद्व्यक्तित्वादिविशेषनिबन्धनस्य चानुपलम्भः। अत एव मीलितमित्यन्वर्थं नाम। भेदस्वरूपस्य सर्वथैव तिरोधानात्। सामान्ये तु व्यक्तीनां परस्परभेदावगमेऽपि परस्परव्यावर्तकधर्मानुपलम्भमात्रं सादृश्याद्‌ुपनिबध्यते। मुखानां कमलानां च बिम्बप्रतिबिम्बानां च परस्परव्यावर्तकधर्मास्फुरणस्यैव प्रतीतेरिति भावः। **केचिदिति**। सर्वस्वकारादय इत्यर्थः। ते हि सहजस्य वा आगन्तुकस्य वा लक्षणस्य साम्यात्तद्द्वारेण केनचित् बलीयसा इतरस्य तिरोधाने मीलितम्। सहजलक्षणेन तिरोधाने 'अपाङ्गतरले दृशा'वित्युदाहृत्य दृक्तारल्यादेरङ्गचिह्नस्य स्वाभाविकत्वेऽपि साधारणतां, 'मदोदयेन तत्राप्येतस्य दर्शनात्। अतः स्वाभाविकेन सता अनेन बलीयसा मदोदयस्य वस्त्वन्तरस्य तिरोधाना'दित्युपपाद्यागन्तुकेन तिरोधानस्य 'ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते। अप्यङ्गमुत्पुलकमावहतां सकम्पं तेषामहो बत भिदां न बुधोऽप्यभिज्ञः ॥' इत्युदाहृत्य, शैत्यस्यागन्तुकतया कम्पपुलकयोस्तज्जन्ययोरप्यागन्तुकत्वम्। अतस्ताभ्यां भयकृतयोस्तयोः तिरोधान'मिति मीलितं लक्षयित्वा, यत्र प्रस्तुतस्य वस्तुनोऽप्रस्तुतेन साधारणगुणयोगाद्भेदानध्यवसायेनैक्य-

इत्यत्र मीलितालङ्कारः । अत्र हि ढक्कारल्यादीनां नारीवपुषस्सहज-धर्मत्वान्मदोदयकार्यत्वाच्च तदुभयसाधारण्यादुत्कृष्टतारल्यादियोगिना वपुषा मदोदयस्य स्वरूपमेव तिरोधीयते । लिङ्गसाधारण्येन तद्ज्ञानोपायाभावात् । 'मल्लिकामालभारिण्य' इत्यादिषु तु सामान्यालङ्कार इत्याहुः । तन्मते 'पद्माकरप्रविष्टाना'मित्यादौ भेदाध्यवसायेऽपि व्यावर्तकास्फुरणेनालङ्कारान्तरेण भाव्यम् । सामान्यालङ्कारावान्तरभेदेन वा । पूर्वस्मिन्मते स्वरूपतिरोधानेनालङ्कारान्तरेण भाव्यम् । मीलितावान्तरभेदेन वा ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे सामान्यप्रकरणम् ॥७९॥

उन्मीलितविशेषकौ—

**[1]भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ ।**
**हिमाद्रिं त्वद्यशोमग्नं सुराश्शीतेन जानते ॥**
**लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥**

---

मुपनिबध्यते तत्सामान्यमिति लक्षयित्वा 'मलयजरसलवलिप्ततनवो नवहारलताविभूषिताः सिततरदन्तपत्रकृतपत्ररुचो रुचिरा मलयांशुकाः । शशभृति विततधाम्नि धवलयति धराममिभाव्यतां गताः प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥' इत्युदाहृतम् । ननु, दृक्तारल्यादिना मदोदयस्याप्यवगतिसम्भवात् कथमत्र मीलितमित्यत आह—**लिंगेति** । ननु, 'मल्लिकामालभारिण्य' इत्यादिषु उक्तमीलितलक्षणाभावादव्याप्तिरित्यत आह—**मल्लिकेति** । नन्वेतन्मते 'पद्माकरप्रविष्टाना'मित्यत्र न मीलितालङ्कारः । स्वरूपतिरोधानाभावात् । नापि सामान्यं, भेदावभासाभावादित्यत आह—**तन्मत इति** । भेदाध्यवसायेऽपि व्यावर्तकवैलक्षण्याज्ञानादुक्तालङ्कारयोरप्रवृत्त्या अलङ्कारान्तरमेव परिकल्पनीयम् । भेदानध्यवसायेन तदध्यवसायेऽपि वैधर्म्यास्फुरणेन च सामान्यालङ्कारस्य लक्षणेन तदवान्तरभेदो वात्रेति द्रष्टव्यमिति भावः । **पूर्वस्मिन्निति** । 'अपाङ्गललिते दृशा'वित्यादाविति शेषः । **स्वरूपतिरोधानेनेति** । गुणसाम्यकृतभेदानध्यवसायविरहान्न मीलितम् । भेदानध्यवसायविरहाच्च न सामान्यम् । किं तु अलङ्कारान्तरं कल्प्यम् । अथ वा गुणसाम्येन बलीयसा तिरोधानेन वा भेदानध्यवसाये मीलितमिति मीलितं लक्षयित्वा तदवान्तरभेदो वाच्य इत्यर्थः ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां सामान्यप्रकरणम् ॥ ७९ ॥

एतयोः प्रतिद्वन्द्विनौ द्वावलङ्कारौ लक्षयति—**भेदेति** । अतुल्यगुणशालिनोर्द्वयोर्भेदस्फूर्तौ मीलितविपरीतमुन्मीलितमलङ्कारः । सदृशयोर्द्वयोर्वैधर्म्यस्फूर्तौ विशेषकनामा सा-

---

१. इमौ चन्द्रालोके अनुक्तौ ।

मीलितन्यायेन भेदानध्यवसाये प्राप्ते कुतोऽपि हेतोर्भेदस्फूर्तौ मीलितप्रतिद्वन्द्व्युन्मीलितम् । तथा सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणाद्विशेषस्फूर्तौ तत्प्रतिद्वन्द्वी विशेषकः । क्रमेणोदाहरणद्वयम् । तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते ।यथा—

'नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभि-
र्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंहक्षितीन्द्र! ।
नेदृग्यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्य-
द्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ॥'

'काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।
वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥'

इदं विशेषकस्योदाहरणान्तरम् । अत्र द्वितीयौ काकपिकशब्दौ काकत्वेन ज्ञातः पिकत्वेन ज्ञात इत्यर्थान्तरसंक्रमितवाच्यौ ।

यथा वा—

---

मान्यप्रतिद्वन्द्वी अलङ्कार इत्यर्थः । क्रमेणोदाहरणयोर्लक्षणसत्वमुपपादयति—**मीलितन्यायेनेति** । हिमाद्रियशसोर्गुणसाम्यादित्यर्थः । **सामान्यरीत्येति** । भेदतिरोधानाभावेऽपि सादृश्याद्विशेषास्फुरण इत्यर्थः । **कुतश्चित्कारणादिति** । पद्मसङ्कोचमुखासङ्कोचलक्षणकारणादित्यर्थः । मीलितन्यायेन भेदानध्यवसायप्राप्तौ तत्प्रतिद्वन्द्वि उन्मीलितमुदाहृतम् । तद्गुणरीत्या भेदानध्यवसायप्राप्तौ तदुदाहरति—**नृत्यद्भर्गाट्टहासेति**। अत्र वर्णनीयनृपयशसां नारायणस्य स्वीयरूपत्यागेन यशोगतधवलिमरूपस्वीकारेण तद्गुणालङ्काररीतिः । तद्रीत्या नारायणस्य तुल्यगुणयोगाद्भेदानध्यवसाये प्राप्ते भगवन्नाभिनलिनसौरभेण भेदाध्यवसायो देवानामासीदिति वर्णनादुन्मीलितमिति भावः । **काकः कृष्ण इति**। अत्र काकपिकयोः स्वरूपभेदे प्रतीयमानेऽपि व्यावर्तकधर्मास्फूर्तिरावसन्तागममेव । वसन्ते तु, समागते व्यावर्तकध्वनिवैलक्षण्यात् वैलक्षण्यस्फूर्तेर्विशेषोऽलङ्कार इत्याह—**इदमिति**। नन्वत्र श्लोके द्वितीयकाकपिकपदयोः पौनरुक्त्यमित्याशङ्क्याह—**अत्र द्वितीयाविति** । द्वितीयकाकपिकपदयोः काकत्वपिकत्वप्रकारकज्ञानविषयत्वरूपार्थान्तरेण निमित्तेन लक्षणया तदवच्छिन्नबोधकत्वान्न पौनरुक्त्यमिति भावः । **अर्थान्तरेति** । शक्यतावच्छेदकरूपभिन्नरूपेण संक्रमितौ बोधविषयीकृतौ वाच्यौ ययोस्तौ तथाभूतावित्यर्थः । अस्यां च लक्षणायां प्रयोजनं प्रियां विहाय प्रवासेच्छूनां ततो निवृ-

वाराणसीवासवतां जनानां साधारणे शङ्करलांछनेऽपि ।
पार्थप्रहारव्रणमुत्तमाङ्गे प्राचीनमीशं प्रकटीकरोति ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे उन्मीलितविशेषकप्रकरणम् ॥८०॥

अथ गूढोत्तरम्—

[1]किञ्चिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम् ।
यत्रासौ वेतसी पान्थ? तत्रेयं सुतरा सरित् ॥

सरित्तरणमार्गं पृच्छन्तं प्रति तं कामयमानाया उत्तरमिदम् । वेतसीकुञ्जे स्वाच्छन्द्यमित्याकूतगर्भम् ।

यथा वा—

'ग्रामेऽस्मिन् प्रस्तरप्राये न किञ्चित् पान्थ? विद्यते ।
पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥'

आस्तरणादिकं प्रार्थयमानं पान्थं प्रत्युक्तिरियम् । स्तनोन्नतिं दृष्ट्वा

---

त्यादिप्रतीतिरिति द्रष्टव्यम् । विशेषकस्यैवोदाहरणान्तरमाह—**वाराणसीति** । अत्र वाराणसीपरासुजनानां शङ्करलाञ्छनचन्द्रकलाडमरुकतृतीयलोचनादीनां साधारण्येन व्यावर्तकास्फूर्ति सामान्यरीत्या पूर्वार्धे प्रतिपाद्य उत्तरार्धे शङ्करशिरोगतपार्थप्रहारकृतव्रणकिणरूपवैधर्म्यस्फूर्तिवर्णनादिदमपि विशेषोदाहरणमिति भावः । प्राञ्चस्तु, भेदवैधर्म्ययोः स्फूर्तौ नालङ्कारद्वयं कल्प्यम् । किं तु उक्तालङ्कारभावमात्रम् । भेदवैशिष्ट्यस्फूर्त्योः स्वतः सिद्धत्वेन कविप्रतिभागोचरतया वैचित्र्याभावात् । न च मीलिततद्गुणरीतिभ्यां भेदविशेषस्फूर्तौ तदपवादवर्णनकृतवैचित्र्यसद्भावादलङ्कारान्तरकल्पनं युक्तमिति वाच्यम् । तावता मीलितसामान्यापवादमात्रत्वेन वैचित्र्याभावतादवस्थ्यादित्याहुः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां उन्मीलितविशेषकप्रकरणम् ॥ ८०॥८१॥

गूढोत्तरालङ्कारं लक्षयति—**किञ्चिदिति** । किञ्चिम् गूढाभिप्रायगर्भमुत्तरं गूढस्य प्रश्नस्योन्नायकं तद्गूढोत्तरं नामालङ्कारान्तरमित्यर्थः । इदमुपलक्षणम् । द्वयोरपि प्रश्नोत्तरयोर्निबन्धेऽपि उत्तरस्य गूढाभिप्रायस्य सम्भावितगोचरतया लक्षणसाम्यान्नामसाम्याच्च गूढोत्तरस्यैव प्रवृत्तेरिति भावः । उदाहरणे पान्थं प्रति कस्याश्चित्स्वैरिण्याः गमनमार्गोक्तौ वेतसीगाढप्रदेशे नदीतरणकथनेन तत्प्रश्नस्योन्नयनाद्वेतसीगाढकुञ्जे तन्मार्गेण गमने स्वाच्छन्द्यनियन्त्रणं सम्पत्स्यत इत्यभिप्रायगर्भतया च लक्षणानुगतिरित्यभिप्रेत्याह—**सरित्तरणेति** । उदाहरणान्तरमाह—**ग्रामेऽस्मिन्निति** । अत्रापि लक्षणं योजयति—**आ-**

---

१. '**प्रश्नोत्तरक्रमोक्तौ तु स्यूतमुत्तरमुत्तरम्** ।' इति चन्द्रालोकपाठः ।

रन्तुमिच्छसि चेद्वस । अविदग्धजनप्रायेऽस्मिन् ग्रामे कश्चिदवगमिष्यतीत्येतादृशं प्रतिबन्धकं किञ्चिदपि नास्तीति हृदयम् । इदमुन्नेयप्रश्नस्योत्तरस्योदाहरणम् ।

निबद्धप्रश्नोत्तरं यथा —

'कुशलं तस्या जीवति, कुशलं पृच्छामि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतां नु कथं कथयामि या श्वसिति ॥'

ईर्ष्यामानानन्तरमनुतप्तायां नायिकायास्सखीमागतां प्रति 'कुशलं तस्या' इति नायकस्य प्रश्नः । 'जीवती'ति सख्या उत्तरम् । जीवन्त्याः कुतः कुशलमिति तदभिप्रायः । अन्यत्पृष्टमन्यदुत्तरमिति नायकस्य पुनः'कुशलं पृच्छामी'ति प्रश्नः । पृष्टस्यैवोत्तरमुक्तमित्यभिप्रायेण 'जीवतीत्युक्त'मिति सख्या वचनम् । सखीवचनाभिप्रायोद्घाटनार्थः 'पुनरपि तदेव कथयसी'ति नायकस्याक्षेपः ।'मृतां नु कथं कथयामि या श्वसिती'ति सख्याः स्वाभिप्रायोद्घाटनम् । सति मरणे खलु तस्याः कुशलं भवति । मदागमनसमयेऽपि श्वासेषु सञ्चरत्सु कथं तां मृतां कथयेयमित्यभिप्रायः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे गूढोत्तरप्रकरणम् ॥८२॥

अथ चित्रोत्तरम्—

**[1]प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुच्यते ।**
**केदारपोषणरताः के खेटाः किं चलं वयः ॥**

---

**स्तरणादिकमिति** । प्रस्तरप्राय इत्येतद्विशेषणव्यङ्ग्यमाह—**अविदग्धेति** । द्वितीयं भेदमुदाहरति—**कुशलमिति** । अयं च निबद्धप्रश्नोत्तरयोः सकृत्त्वे चारुताभावादसकृत्प्रश्नोत्तरनिबन्धन एव प्रवर्तत इत्यभिप्रेत्य लक्षणानुगमं दर्शयति—**ईर्ष्यामानेति** । अत्र 'जीवती'त्याद्युत्तराणामसम्भाव्यविषयता । प्रश्नाननुगुणत्वात् । कुशलप्रश्ने प्रश्नविषयतदभावान्यतरस्यैव वक्तव्यत्वादिति भावः । अन्यदतिरोहितार्थम् । केचित्तु, यत्र प्रश्नपुरस्सरमुत्तरं परस्परं द्वयोरसकृत्प्रवर्तते निराकूतं तत्र प्रश्नोत्तरिकानामकमलङ्कारान्तरमाहुः। यथा—'कालिन्दि! ब्रूहि कुम्भोद्भवे'त्यादौ। अत्र न गूढोत्तरसम्भावना । साकूतत्वाभावादित्याहुः । कस्मिंश्चित् गूढोत्तरविषये नानुमानालङ्कारस्य प्रसक्तिः । व्याप्तिपक्षधर्मतादेरनिर्देशादिति द्रष्टव्यम् ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां गूढोत्तरप्रकरणम्॥ ८२॥

चित्रोत्तरालङ्कारं लक्षयति—**प्रश्नेति** । प्रश्नश्चोत्तरं च ताभ्यामभिन्नमिति द्वन्द्वग-

---

[1] अयमपि चन्द्रालोके नास्ति ।

अत्र केदारपोषणरता इति प्रश्नाभिन्नमुत्तरम् । के खेटाः किं चलमिति प्रश्नद्वयस्य वय इत्येकमुत्तरम् । उदाहरणान्तराणि विदग्धमुखमण्डने द्रष्टव्यानि ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे चित्रोत्तरप्रकरणम् ॥८३॥

अथ सूक्ष्मम्—

**सूक्ष्मं पराशयाभिज्ञे तरसाकूतचेष्टितम् ।**
**मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् ॥**

कामुकस्यावलोकनेन सङ्केतकालप्रश्नभावं ज्ञातवत्याश्चेष्टेयम् । अस्तं गते सूर्ये सङ्केतकाल इत्याकूतम् ।

यथा वा—

'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे सूक्ष्मप्रकरणम् ॥८४॥

---

भेकर्मधारयः । तथा च प्रश्नाभिन्नं वा द्वयोः प्रश्नयोरेकं वा यदुत्तरं तच्चित्रोत्तरमिति भावः । स्पष्टमुत्तरम् ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां चित्रोत्तरप्रकरणम् ॥ ८३ ॥

सूक्ष्मालङ्कारं लक्षयति—**सूक्ष्ममिति** । पराशयमिङ्गितादिना ज्ञातवतोऽन्यस्य साकूतव्यापारः सूक्ष्मालङ्कार इत्यर्थः । उदाहरणे लक्षणमुपपादयति—**अत्रेति** । कामुकदर्शनलक्षणेनेङ्गितेन तदीयसङ्केतकालप्रश्नाशयं ज्ञात्वा नायिकया तदानुकूल्येन सायं सङ्केतकाल इति तदुत्तरं स्वहृदयगतं व्यङ्क्तुं सीमन्तमणेः केशैराच्छादनरूपव्यापारः कृत इति अत्र सूक्ष्मालङ्कारो युक्त इति भावः । उदाहरणान्तरमाह—**संकेतेति** । अत्र सङ्केतकालाभिप्रायं विटसम्बन्धिभ्रूविक्षेपादिना इङ्गितेन लक्षयित्वा रजनिकालभाविलीलापद्मनिमीलनं नायिकया कृतं सायं सङ्केतकाल इत्यभिप्रायेण । क्वचिदाकारेण पराशयज्ञानाच्च । इष्टोदयो यथा—'वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुंकुमं कापि कण्ठे । पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गरेखां लिलेख ॥' अत्र नायिकागतं पुरुषायितं स्वेदबिन्दुप्रचयकृतकुंकुमभेदलक्षणेनाकारेण ज्ञातवत्या सख्या पाणौ पुरुषोचितखड्गलेखनेन गाढप्रियानुरागादिकृतं त्वदीयं सौभाग्यमित्याकूतगर्भं चेष्टितमिति । इङ्गितं बुद्धिपूर्वकश्चेष्टाविशेषः । अबुद्धिपूर्वकश्चेष्टाविशेष आकार इति तयोर्भेदः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां सूक्ष्मप्रकरणम् ॥८४॥

---

१. अयं चन्द्रालोके अनुक्तः ।

अथ पिहितम्—

**पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम्[1] ।**
**प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥**

रात्रौ सपत्नीगृहे कृतजागरणेन श्रान्तोऽसीति तल्पकल्पनाकूतम् । यथा वा

'वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुंकुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गरेखां लिलेख ॥'

अत्र स्वेदानुमितपुरुषायितं पुरुषोचितखड्गरेखालेखनेन प्रकाशितम् ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे पिहितप्रकरणम् ॥ ८५ ॥

अथ व्याजोक्तिः—

**[2]व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ।**
**सखि! पश्य गृहारामपरागैरस्मि धूसरा ॥**

अत्र चौर्यरतिकृतसङ्केतभूपृष्ठलुण्ठनलग्नधूलिजालस्य गोपनम् ।

---

पिहितालङ्कारं लक्षयति—**पिहितमिति** । परकीयस्य व्यापारं बुध्वा साकूतचेष्टितं पिहितमित्यर्थः । उत्तरार्धे लक्षणं योजयति—**रात्राविति** । उदाहरणान्तरं सलक्षणोपपादनं स्पष्टम् । न च सूक्ष्मपिहितयोस्साकूतचेष्टितसाम्यान्न भेदसम्भव इति वाच्यम् । पराशयवृत्तान्तज्ञानगर्भतया द्वयोर्भेदोपपत्तेरिति भावः । सर्वस्वकारादयस्तु, संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्ममिति स्थूलमतिभिरसंलक्षणीयः कुशाग्रबुद्धिभिः संलक्ष्यते यः सूक्ष्मार्थः तस्य विदग्धं प्रति प्रकाशनमिति सूक्ष्मार्थत्वेन पराशयवृत्तान्तयोः क्रोडीकारेण लक्षयित्वा 'वक्त्रस्यन्दि' सङ्केतकाले'त्याद्युदाहरणे लक्षणसत्त्वमुपपादयन्तः पिहितनामकमलङ्कारान्तरं नानुमेनिरे । युक्तं चैतदेव । अलङ्कारान्तरकल्पनाता वैचित्र्यहेतोः साकूतचेष्टितविन्यसनस्य भेदाभावे आशयवृत्तान्तरूपप्रकाश्यभेदमात्रेण भेदानुपपत्तेरिति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां पिहितप्रकरणम् ॥ ८५ ॥

व्याजोक्तिं लक्षयति—**व्याजोक्तिरिति** । निगूढस्य वस्तुनः केन चित्प्रकटतां गतस्य हेत्वन्तरोक्त्या यद्गोपनं तद्व्याजोक्तिः । व्याजस्य हेत्वन्तरलक्षणस्य वचनाद्व्याजोक्तिरित्यन्वर्थं नामेत्यर्थः । उदाहरणे लक्षणमुपपदयाते—**अत्रेति** । चौर्यरतस्य केनाप्यविदितस्य कृतसङ्केतभूतलपरिवर्तनलगत्परागेण नायिकाङ्गधूसरत्वेन प्रकटीभूतस्य तथाविधधूसर-

---

१. '**ज्ञातुरन्यस्य चेष्टितम्** ।' इति चन्द्रालोकपाठः । २. '**व्याजोक्तिः शंकमानस्य छद्मना वस्तुगोपनम्** ।' इति चन्द्रालोकपाठः ।

यथा वा--

'कस्य वा न भवेद्रोषः प्रियायास्सव्रणेऽधरे ।
सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाऽधुना ॥'

उपपतिना खण्डिताधराया नायिकायास्सकाशमागच्छन्तं प्रियमपश्यन्त्येव सख्या नायिकां प्रति हितोपदेशव्याजेन तं प्रति नायिकापराधगोपनम् । छेकापह्नुतेरस्याश्चायं विशेषः । तस्यां वचनस्यान्यथानयनेनापह्नवः । अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति लक्षणे लक्ष्यनाम्निचोक्तिग्रहणमाकारस्य गोपनार्थं हेत्वन्तरप्रत्यायकव्यापारमात्रोपलक्षणम् । ततश्च--

'आयान्तमालोक्य हरिं प्रतोल्यामाल्याः पुरस्तादनुरागमेका ।
रोमाञ्चकम्पादिभिरुच्यमानं भामा जुगूह प्रणमन्त्यथैनम् ॥'

इत्यत्रापि व्याजोक्तिरेव । अत्र ह्यनुरागकृतस्य रोमाञ्चाद्याकारस्य भक्तिरूपहेत्वन्तरप्रत्यायकेन प्रणामेन गोपनं कृतम् । सूक्ष्मपिहितालङ्का-

---

ताया हेत्वन्तरोक्त्या गोपनाल्लक्षणसङ्गतिरिति भावः । उदाहरणान्तरमाह—**कस्य वेति** । अत्रापि लक्षणं योजयति—**उपपतिनेति** । इयं हि कां चिदविनीतामुपपतिखण्डिताधरां लक्ष्यीकृत्य तद्भर्तारं समीपवर्तिनमप्यनवलोकमानाया इव कस्याश्चिद्विदग्धसख्या व्यलीकपरिहारायोक्तिः । अत्र प्रियाधरव्रणस्य उपपतिकृतस्य दर्शनेन नायिकाचौर्यरतलक्षणापराधस्य प्रियाधरव्रणहेत्वन्तरस्य सभृङ्गकमलाघ्राणस्योक्त्या गोपनाल्लक्षणं ध्रुवमिति भावः। ननु, 'प्रजल्पन्मत्पदे लग्न' इति प्राक्प्रदर्शितच्छेकापह्नुतावपि उद्भिन्नवस्तुनो हेत्वन्तरेण गोपनस्य सत्त्वान्नास्यास्ततो भेद इत्यत आह—**छेकापह्नुतेरिति** । तत्र 'प्रजल्पन्मत्पदे लग्न' इति वचनस्यान्यथा नयनेनापह्नवः । अत्राकारस्य हेत्वन्तरोक्त्या गोपनमिति ततोऽस्या भेद इत्यर्थः । सर्वस्वकारादयस्तु, 'उद्भिन्नवस्तुनिगूहनं व्याजोक्ति'रिति लक्षयन्तो वस्तुशब्दस्य वचनाकारसाधारणतया अन्यथानयनेन वचनविवक्षितार्थगोपनस्याविशेषाद्व्याजोक्तिमेव छेकापह्नुतिविषयेऽपि मन्यमानाः छेकापह्नुतिं न लक्षयाम्बभूवुः । ननु, 'आयान्तमालोक्ये'त्यत्रानुरागकृतरोमाञ्चाद्याकारस्य भक्तिरूपहेत्वन्तरकृतत्वप्रत्यायकप्रमाणलक्षणव्यापारेण निगूहनसत्त्वेऽपि हेत्वन्तरोक्तिकृतगोपनाभावादव्याप्तिरित्यत आह—**लक्षण इति** । ततश्चात्रापि लक्षणसद्भावान्नोक्तदोष इत्याह—**अत्र हीति** । एवमेव सूक्ष्मपिहितालङ्कारलक्षणयोरपि चेष्टितपदमुक्तिसाधारणव्यापारपरमित्याह—**सूक्ष्मेति** । वस्तुतस्तु, नेदं वक्तव्यम् । चेष्टितशब्दस्य व्यापारसामान्यपरतया वचनस्यापि चेष्टितत्वाविशे-

रयोरपि चेष्टितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणम् । ततश्च—

'नलिनीदले बलाका मरकतपात्र इव दृश्यते शुक्तिः ।
इति मम सङ्केतभुवि ज्ञात्वा भावं तदाब्रवीदालीम् ॥'

इत्यादिष्वपि सूक्ष्मालङ्कारः प्रसरति । अत्र श्लोके तावत् किमावयोः सङ्केतस्थानं भविष्यतीति प्रश्नाशयं सूचयति कामुके तदभिज्ञया विदग्धया तदा सखीं प्रति साकूतमुक्तमिति सूक्ष्मालङ्कारो भवति । यतोऽत्र बलाकायाः मरकतपात्रप्रतिष्ठितशुक्त्युपमया तस्या निश्चलत्वेनाश्वस्तत्वं तेन तस्य प्रदेशस्य निर्जनत्वं तेन तदेवावयोः सङ्केतस्थानमिति कामुकं प्रति सूचनं लक्ष्यते । न चात्र ध्वनिराशङ्कनीयः । दूरे व्यज्यमानस्यापि सङ्केतस्थानप्रश्नोत्तरस्य स्वोक्त्यैवाविष्कृतत्वात् । एवं पिहितालङ्कारेऽप्युदाहार्यम् । इदं चान्यदत्रावधेयम् । 'यत्रासौ वेतसी पान्थे'त्यादिषु गूढोत्तरसूक्ष्मपिहितव्याजोक्त्युदाहरणेषु भावो न स्वोक्त्याविष्कृतः । किं तु वस्तुसौन्दर्यबलात् वक्तृबोद्धव्यविशेषविशेषिताद्गम्यः । तत्रैव वस्तुतो ना-

---

षेण यथाश्रुतस्यैव युक्तत्वादिति द्रष्टव्यम् । उपलक्षणफलमाह—**ततश्चेति** । अत्र लक्षणसत्त्वमुपपादयति—**अत्रेति** । सङ्केतस्थानप्रश्नाशयसूचनप्रवृत्तकामुकाशयाभिज्ञया नायिकया दासीं प्रति साकूतमुक्तमिति उक्तिरूपव्यापारसत्त्वात् सूक्ष्मालङ्कार एवेति भावः । आकूतमेव स्फोरयति—**यतोऽत्रेति** । नन्वत्र निश्चलत्वनाश्वस्तत्वस्य तेन तत्प्रदेशस्य निर्जनतायास्तत इदमेवावयोः सङ्केतस्थानमित्यादिव्यङ्ग्यपरम्परया आविष्कृतचमत्कारसत्त्वादुपमया वस्तुध्वनिरिति संलक्ष्यक्रमव्यङ्ग्योऽलङ्कारेण वस्तुध्वनिरेवात्र युक्त इत्याशङ्क्य निराकरोति—**न चेति** । दूरे व्यङ्ग्यपरम्परया प्रतीयमानस्यापि 'इति मम सङ्केतभुवी'त्यादि स्वोक्त्याऽऽविष्कृतत्वान्न ध्वनिः सम्भवतीत्यर्थः । **एवमिति** । 'प्रिये गृहागते प्रातः कान्ता रोषसमाकुला । रात्रिजागरखिन्नस्त्वमिति तल्पमकल्पयत् ॥' इत्याद्युदाहरणे नायिकया स्वाकूतस्याविष्कृतत्वान्नात्र ध्वनिबुद्धिः कार्येत्यर्थः । ननु, प्रतीयमानस्य स्वोक्त्या आविष्करणाभावेऽपि गूढोत्तरसूक्ष्मालङ्काराद्युदाहरणेषु प्राचीनैर्न ध्वनिरुक्तः । किंतु तत्तदलङ्कार एवेति तद्विरोध इत्यभिप्रेत्याह—**इदं चेति** । प्रागुदाहृतेषु तत्तदुदाहरणेषु भावस्य न स्वोक्त्याऽऽविष्करणम् । किं तु 'यत्रासौ वेतसी पान्थे'त्यादौ वक्त्र्याः स्वैरिणीत्वात्तद्वैशिष्ट्यरूपसहकारिमहिम्ना वेतसीकुञ्जे स्वाच्छन्द्यमित्याकूतस्य 'मयि पश्यति सा केशै'रित्यादौ बोद्धव्यस्य कामुकस्य वक्त्र्याश्च जारिण्या वैशिष्ट्येनास्तं गते भानौ सङ्केतकाल इत्याकूतस्य वस्तुसौन्दर्यादभिव्यक्तेर्नालङ्कारत्वम् । तेषां ध्वनित्वास्पदत्वादिति भावः ।

लङ्कारत्वम्। ध्वनिभावास्पदत्वात्। प्राचीनैः स्वोक्त्याविष्करणे सत्यलङ्कारास्पदतास्तीत्युदाहृतत्वादस्माभिरप्युदाहृतानि । शक्यं हि—

'यत्रासौ वेतसी पान्थ! तत्रेयं सुतरा सरित्।
इति पृच्छन्तमध्वानं कामिन्याह ससूचनम् ॥'

इत्याद्यर्थान्तरकल्पनया भावाविष्करणमिति। अतः प्राग्लिखितेषु येषूदाहरणेषु सङ्केतकालमनसं पुंस्त्वं तन्व्या व्यञ्जयन्ती भामा जुगूहेति भावाविष्करणमस्ति तेष्वेव तत्तदलङ्कार इति ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे व्याजोक्तिप्रकरणम् ॥८६॥

अथ गूढोक्तिः—

**गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते[1] ।**
**वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥**

यं प्रति किञ्चिद्वक्तव्यं तत्तटस्थैर्माज्ञायीति तदेव तदन्यं कंचित् प्रति श्लेषेणोच्यते चेत्सा गूढोक्तिः। 'वृषे'त्याद्युदाहरणम् । इह परकलत्रमुपभुञ्जानं कामुकं प्रति वक्तव्यं परक्षेत्रे सस्यानि भक्षयन्तं कञ्चि-

---

ननु, कथं तर्हि स्वोक्त्याविष्करणरहितानि प्राग्दर्शितान्युदाहरणानीत्यत आह—**प्राचीनैरिति**। स्वोक्त्याविष्करणे तेषामलङ्कारोदाहरणार्हतासम्भवाम् तदभिप्रायेण तैस्तथाभूतान्युदाहृतानीति तदनुसारिभिरस्माभिरपि तान्युदाहृतानीत्यर्थः । तेष्वेवोदाहरणेष्वर्थान्तरादियोजनया स्वोक्त्याविष्करणं सम्भवतीत्याह—**शक्यं हीति**। अत एव 'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः । यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः॥' इति वदन् ध्वनिकारः 'सङ्केतकालमनस'मित्यत्र लीलाकमलनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितमित्यभिदधानो भावाविष्करणरहितेष्वलङ्कारमब्रुवतामुपादेयं वचनं कथं स्यादित्यभिप्रेत्याह—**अतः प्रागिति** ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां व्याजोक्तिप्रकरणम् ॥ ८६ ॥

गूढोक्तिं लक्षयति—**गूढोक्तिरिति**। किञ्चित्प्रति विवक्षितस्यार्थस्य अन्यं प्रति यत् श्लेषेण कथनं तद्गूढोक्तिरित्यर्थः । उदाहरणे लक्षणं स्फुटयति—**इहेति**। कामुकं प्रति सम्बोध्य वक्तव्यस्यार्थस्य अन्योद्देशेन श्लेषेण कथनाल्लक्षणसङ्गतिरिति भावः । नन्वत्र कामुकं प्रति वक्तव्ये प्रस्तुते अप्रस्तुतोक्षवृत्तान्तवर्णनादप्रस्तुतप्रशंसैव किं न स्यादित्यत आ-

---

१. अयं चन्द्रालोके अनुक्तः ।

दुक्षाणं समीपे चरन्तं निर्दिश्य कथ्यते । नेयमप्रस्तुतप्रशंसा । कार्यकारणादिव्यङ्ग्यत्वाभावात् । नापि श्लेषमात्रम् । अप्रकृतार्थस्य प्रकृतार्थान्वयित्वेनाविवक्षितत्वात् । तस्य केवलमितरवञ्चनार्थं निर्दिष्टतया विच्छित्तिविशेषसद्भावात् । यथा वा—

'नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां
त्यक्त्वा मामिह पुष्पिणीति गुरवः प्राप्ता गृहाभ्यन्तरम् ।
शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते
स्वामिन्नागमलालनीय! रजनीं लक्ष्मीपते! रक्ष माम् ॥'

**अत्र** लक्ष्मीपतिनाम्नो जारस्यागमनं प्रार्थयमानायाः तटस्थवञ्चनाय भगवन्तं प्रत्याक्रोशस्य प्रत्यायनम् ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे गूढोक्तिप्रकरणम् ॥ ८७ ॥

---

ह—**नेयमिति** । कार्यकारणादीत्यादिपदेन सामान्यविशेषसारूप्याणि ग्राह्याणि । ननु, तर्हि श्लेषमात्रमिहालङ्कारोऽस्त्वित्यत आह—**नापीति** । प्रकृताप्रकृतश्लेषे हि अप्रस्तुतार्थस्य प्रस्तुतार्थोपमानभावेन विवक्षास्ति । न चात्राप्रस्तुतार्थस्य तथा विवक्षास्ति । अतो न श्लेषोऽपीति भावः । ननु, तर्हि विच्छित्तिविशेषाभावान्न कश्चिदलङ्कार इत्यत आह—**तस्येति** । अप्रस्तुतस्येत्यर्थः । तटस्थाः प्रकृतमर्थं मा बुध्यन्तामिति तदतिसन्धानायाप्रस्तुतार्थस्य निर्दिष्टतया विच्छित्तिविशेषसद्भावेन परिशेषाद्गूढोक्तिरेवात्रालङ्कार इति युक्तमिति भावः । उदाहरणान्तरमाह—**नाथो म इति** । **विपणिं गत इति** । नेदानीं तदागमनशङ्केति । **न गणयत्येषेति** । सहजविरोधेन समीपे सहावस्थानाभावः । **त्यक्त्वा मामिहेति** । गुरुजनानां समीपे अवस्थानाभावः । **शय्यामात्रेति** । अनुपनीतपुत्रादिसन्निधानाभावः । **परिजनः श्रान्त इति** । गृहकर्मव्यापारपारवश्येन परिजनस्य परिसरे अभाव इति व्यञ्जनात् भवदागमनेन यथाभिलषितमावयोः निर्यन्त्रणरतोत्सवः सम्पत्स्यते । यावन्न प्रभाता रजनी तावदागच्छेत्यभिप्रायः प्रकृतः । तदनुकूलतया लक्ष्मीपतिनामजाराह्वानं करोतीति तटस्था न जानीयुरिति तद्वञ्चनाय भगवन्तं प्रत्याक्रोशस्याप्रकृतस्य सम्बोधनमिति लक्षणानुगतिरूह्येत्याह—**अत्रेति** । न च गूढोक्तौ तटस्थातिसन्धानादिरूपव्यङ्ग्यस्य स्वोक्त्याऽऽविष्करणाभावात् ध्वनिरेव वाच्यो नालङ्कार इति वाच्यम् । श्लेषेण तस्यार्थस्याविष्करणेन ध्वनेरसम्भवादिति भावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां गूढोक्तिप्रकरणम् ॥ ८७ ॥

अथ विवृतोक्तिः—

**विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि ।**
**वृषापेहि परक्षेत्रादिति वक्ति ससूचनम् ॥**

श्लिष्टगुप्तं वस्तु यथा कथञ्चित्कविना ऽऽविष्कृतं चेद्विवृतोक्तिः । 'वृषापेही'त्युदाहरणे पूर्ववद्गुप्तं वस्तु ससूचनमिति कविना ऽऽविष्कृतम् ।

यथा वा—

'वत्से ! मागा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं
कंपः को वा गुरुस्ते किमिह बलभिदा जृंभितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वस्स दहतु दुरितं मन्थमूढां पयोधिः ॥'

इदं परवञ्चनाय गुप्ताविष्करणम् ।

त्रपागुप्ताविष्करणं यथा—

'दृष्ट्या केशवगोपरागहतया किञ्चिन्न दृष्टं मया
तेनेह स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे ।

---

गूढोक्तिप्रतिद्वन्द्विनीं विवृतोक्तिं लक्षयति—**विवृतोक्तिरिति** । श्लेषेण गुप्तोऽर्थः कविना स्वोक्त्या स्फुटीक्रियेत चेत् सा विवृतोक्तिरित्यर्थः । उदाहरणे लक्षणं योजयति—**वृषेति** । **पूर्ववदिति** । गूढोक्तिन्यायेनेत्यर्थः । उदाहरणान्तरमाह—**वत्से! मा गा इति** । अत्र पयोधेर्मथनादुद्गतामिन्दिरां निखिलदेवासुरसन्निधौ स्वतो वरणीयदेवताविशेषनिर्धारणायापारयन्तीं प्रति स्पष्टं देवतान्तरनामग्रहणपूर्वकं तन्निरासकथने तद्दोषशङ्काव्याकुलचेतसः सागरस्य लक्ष्मीशोकापनोदनव्याजेन देवतान्तरवञ्चनाय श्लेषेणोक्तौ विषादं शोकं मा गा इति । उरुजवमधिकवेगं श्वसनं श्वासं सन्त्यज ऊर्ध्वप्रवृत्तम् । को वा महान् ते तव कंपः । किमिह बलहानिकरया जृंभिकया । इत्येवं रूपेण वाक्यार्थेन देवतान्तरप्रत्याख्यानं गुप्तं 'भयशमनच्छद्मने'ति विशेषणेनाविष्कृतम् । ततश्च वत्से ! विषादं महादेवं मागाः । अधिकवेगं वायुं त्यज । ऊर्ध्वप्रवृत्तमग्निं त्यज । कं पातीति कम्पो वरुणः । को ब्रह्मा । गुरुर्बृहस्पतिः । जृंभितेन ऐश्वर्यमत्तेन इन्द्रेण । इत्यादेरर्थान्तरस्य श्लेषमहिम्ना स्फुटं प्रतीतेः कविना श्लिष्टगुप्तमाविष्कृतमिति इयं विवृतोक्तिः । इदं परवञ्चनाय स्वेन गुप्तस्याविष्करणम् । परगुप्ताविष्करणमुदाहरति—**दृष्ट्येति** । इदं च पद्यं श्लेषालङ्कारप्रक-

१. अयमपि चन्द्रालोके नास्ति ।

एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितस्सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥'

अत्र कृष्णस्य पुरतो विषमे पथि स्खलनमभिनीय हस्तालम्बं कामयमानाया गोपिकाया वचने विषमपथस्खलनपतनत्राणसंप्रार्थनारूपेण झडिति प्रतीयमानेनार्थेन गुप्तं विवक्षितमर्थान्तरं सलेशं ससूचनमित्यनेनाविष्कृतम् । एवं नैषधादिषु 'चेतोनलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ।' इति दमयन्तीवाक्यादिकमप्युदाहरणम् । इदं शब्दशक्तिक्रोडीकृतगुप्ताविष्करणम् ॥

अर्थशक्तिमूलगुप्तार्थाविष्करणं यथा—

'गच्छाम्यच्युतदर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं चैवं विजनस्थयोर्हतजनस्संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥'

अत्र 'गच्छाम्यच्युते'त्यामन्त्रणेन त्वया रन्तुमेतावत्कालं स्थितं न तल्लब्धमित्यर्थशक्तिलभ्यं वस्तु तृतीयपादेनाविष्कृतम् । सर्वमेतत्कविनिबद्धवक्तृगुप्ताविष्करणोदाहरणम् ॥

कविगुप्ताविष्करणं यथा—

---

रणे अस्माभिर्व्याख्यातम् । अत्र लक्षणानुगतिं योजयति—**अत्र विषम इति** । स्फुटप्रतीयमानार्थान्तरेण भगवन्तं प्रत्याक्रोशरूपेण गुप्तस्य विवक्षितस्य तदनुरागरूपार्थान्तरस्य 'सलेश'मित्यनेनाविष्करणात् परगुप्ताविष्करणम् । 'चेतोनलंकामयत' इत्यादिषु नैषधीयश्लोकादिष्वप्ययमेवालङ्कारः । तत्र चेतो लङ्कां नेच्छति अन्यत्र क्वापि साभिलाषं न भवतीत्यर्थेन तिरोहितो नलानुरागः । 'अन्यत्र कुत्रापी'त्यनेन व्यर्थेन सता 'चेतो नलं कामयत' इति योजनान्तरापादनसूचनेनाविष्कृत इति तत्रापि विवृतोक्तिरेवालङ्कार इत्याह—**एवमिति** । इदं च श्लेषोत्थापितगुप्तार्थाविष्करणम् । अर्थशक्त्याक्षिप्तगूढार्थप्रकाशनमप्यस्यालङ्कारस्य विषय इत्याह—**सर्वमिदमिति** । अत्र लक्षणं योजयति—**अत्र गच्छामीति** । प्रागुक्तस्सर्वोऽपि वक्रोक्तिभेदः कविनिबद्धवक्तृगुप्ताविष्कारकविगुप्ताविष्काराभ्यां द्विविध इत्यभिप्रेत्य प्रथमं भेदं प्रदर्श्य द्वितीयं भेदमुदाहर-

'सुभ्रूस्त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव विवर्जितास्सुरभयस्स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद्भवन्ति दयिते! सर्वा ममान्धा दिशः ॥'

अत्र तावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिः प्रतीयते । दृष्टिरोगार्तस्य दृष्टिं प्रत्याक्रोशो विवक्षितार्थः । स च 'दृष्टे' इत्यस्य पदस्य उच्चारणेन सम्बुद्धिरूपतामवगमय्याविष्कृतः । कविनिबद्धवक्तृगुप्तं परवञ्चनार्थं कविगुप्तं सप्रौढिकथनार्थमिति भेदः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विवृतोक्तिप्रकरणम् ॥ ८८ ॥

अथ युक्तिः—

**युक्तिः परातिसन्धानं क्रियया मर्मगुप्तये ।**
**त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करेऽलिखत् ॥**

अत्र पुष्पचापलेखनक्रियया मन्मथो मया लिखित इति भ्रान्त्युत्पादनेन स्वानुरागरूपमर्मगोपनाय परवञ्चनं विवक्षितम् ।

---

ति—**सुभ्रूस्त्वमिति** । अत्र दृष्टिरोगार्तस्य दृष्टिं प्रत्याक्रोशस्य विवक्षितस्यार्थस्य 'सुभ्रूस्त्व'मित्यादिश्लिष्टशब्दविन्यासप्रतीतमानवतीप्रसादनव्यापारेण तिरोहितस्य 'दृष्टे' इत्येतस्य पदस्य सम्बुद्धिरूपतावगमनेनाविष्करणाल्लक्षणानुगमः स्फुट इत्याह—**अत्र तावदिति** । नन्वनयोर्भेदयोः किं वैलक्षण्यमित्यत आह—**कविनिबद्धेति** । 'वत्से! मा गा' इत्यादिप्रागुदाहृततदुदाहरणेषु परवञ्चनादि स्पष्टं प्रतीयते । इह तु कविनैव स्वप्रौढिप्रकटनाय गुप्तस्याविष्करणमित्यनयोर्भेद इत्यर्थः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विवृतोक्तिप्रकरणम् ॥ ८८ ॥

युक्त्यलङ्कारं लक्षयति—**युक्तिरिति** । केनचिद्व्यापारेण स्वाभिप्रायरूपमर्मनिगूहनाय परस्य वञ्चनं यत् सः युक्तिनामालङ्कार इत्यर्थः [1] । उदाहरणे पौष्पधनुर्लेखनव्यापारेण मन्मथलेखनभ्रान्त्युपजननेन स्वानुरागाप्रकाशनार्थपरवञ्चनकरणाल्लक्षणानुगमः स्फुट इत्याह

---

1. यद्यप्ययं चन्द्रालोकेऽर्थालङ्कारप्रकरणेऽनुक्तः । तथापि काव्यलक्षणनिरूपके तृतीयमयूखे काव्यलक्षणेष्वेकतमत्वेन युक्तिर्न्यरूपि । तथा हि—**युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्तरान्वयात् । नवस्त्वं नीरदः कोऽपि स्वर्णं वर्षसि यन्मुहुः** ॥' इति ।

यथा वा—

'दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसन्निधौ निगदतस्तस्यातिमात्रं वधूः ।
कर्णालम्बितपद्मरागशकलं विन्यस्य चंचूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥'

अत्र शुकवाङ्मुद्रणया तन्मुखेन स्वकीयरहस्यवचनशुश्रूषुश्वशुरजनवञ्चनं कृतम् । व्याजोक्तावाकारगोपनं युक्तौ तदन्यगोपनमिति भेदः । यद्वा । व्याजोक्तावप्युक्त्या गोपनं इह तु क्रियया गोपनमिति भेदः । एवं च 'आयान्तमालोक्य हरिं प्रतोल्या 'मिति श्लोकेऽपि युक्तिरेव ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे युक्तिप्रकरणम् ॥ ८९ ॥

अथ लोकोक्तिः—

**लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते[1] ।**
**सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥**

---

**अत्रेति** । उदाहरणान्तरमाह—**दम्पत्योरिति** । ननु, व्याजोक्तावपि गोपनस्य सत्वान्न ततोऽस्या भेदो युक्त इत्यत आह—**व्याजोक्ताविति** । आकाराशयगोपनाभ्यामुभयोर्भेद इत्यर्थः । ननु, नैवं भेदो युक्तः । उभयत्र गोपनसाम्ये विषयभेदमात्रेण वैचित्र्याभावादित्यस्वरसादाह—**यद्वेति** । उक्तिव्यापाराभ्यां कारणाभ्यां गोपनमिति कारणवैलक्षण्याद्वैलक्षण्यमनयोरित्यर्थः । अत्रेदं चिन्त्यम् । उक्तिक्रियाकृतगोपनभेदादनयोर्भेद इति न युक्तम् । व्याजोक्तिप्रकरणे उक्तिशब्दस्य गोपनसाधनान्तरप्रत्यायकव्यापारमात्रोपलक्षणतायाः स्पष्टमभिहितत्वात्तथैव तत्रैव 'आयान्तमालोक्ये'त्युदाहरणे स्पष्टं लक्षणानुगमस्य प्रतिपादितत्वाच्च । अतो विवक्षितस्य वस्तुनः केनचिद्व्यापारेण गोपनं परवञ्चनार्थं तद्व्याजोक्तिरित्येव व्याजोक्तिलक्षणं प्राचां युक्त्यलङ्कारं पृथगलक्षयतामभिमतम् । स च व्यापारः क्वचिदुक्तिरूपस्तदन्यरूपः गोपनीयश्च क्वचिदाकारः क्वचित्तदन्याशयादिकमिति विभागो युक्त इति न व्याजोक्तितो युक्तिरतिरिच्यत इति । अतः 'आलोक्ये'त्यत्र युक्तिरेवेति ग्रन्थकारोक्तिश्चिन्त्या । लाघवेन व्याजोक्तेरेव उक्तरीत्या सम्भवात् । इति ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां युक्तिप्रकरणम् ॥ ८९ ॥

लोकोक्त्यलङ्कारं लक्षयति—**लोकेति** । लोकानां जनानां यः प्रकृष्टो वादः प्रकृष्टा उक्तिः । प्रकर्षश्च तत्तद्भाषानुसारेण तत्तद्देशीयजनपरम्परागतत्वम् । तादृशवादस्या-

---

१. अयं चन्द्रालोके अनुक्तः ।

अत्र 'लोचने मीलयित्वे'ति लोकप्रवादानुकृतिः ।

यथा वा— मदीये वरदराजस्तवे,

'नामैव ते वरद! वाञ्छितदातृभावं व्याख्यात्यतो न वहसे वरदानमुद्राम् ।
विश्वप्रसिद्धतरविप्रकुलप्रसूतेर्यज्ञोपवीतवहनं हि न खल्वपेक्ष्यम् ॥'

अत्रोत्तरार्धे लोकवादानुकारः ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे लोकोक्तिप्रकरणम् ॥९०॥

अथ छेकोक्तिः—

**छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भिता ।**
**भुजङ्ग एव जानीते भुजङ्गचरणं सखे ! ॥**

केनचित्कस्यचिद्वृत्तान्तं पृष्टस्य समीपस्थमन्यं निर्दिश्यायमेव तस्य वृत्तान्तं जानातीत्युक्तवतोऽयं 'महेः पादानहिरेव वेत्तीति' लोकवादानुकारः । अत्र स चायं च लोकविदिते धनार्जनादिव्यापारे सहचारिणाविति विदित-विषयतया लोकोक्त्यनुवादस्य प्रयोजने स्थिते रहसि षिद्गव्यापारेऽपि त-स्यायं सहचर इति मर्मोद्घाटनमपि तेन गर्भीकृतम् ।

यथा वा—

---

नुकृतिरुल्लेखो यस्स लोकोक्तिरित्यर्थः । उत्तरार्धे तामेवानुकृतिं स्पष्टयति—**अत्रेति** । उदाहरणान्तरमाह—**नामैवेति** । अत्र पूर्वार्धे भगवतो वरमुद्रात्यागस्य 'नामैव त' इ-ति वाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । उत्तरार्धगतलोकवादानुवादेनापि तस्य समर्थनं कृतमिति तयोरङ्गाङ्गिभावः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां लोकोक्तिप्रकरणम् ॥९०॥

छेकोक्तिं लक्षयति—**छेकोक्तिरिति** । यत्र लोकप्रवादानुवादस्यान्यविषयतया योजनीयस्यान्याविदितार्थान्तरविषयकत्वं तत्र तदेव छेकोक्तिः । छेकाः विदग्धाः तत्प्रि-या उक्तिरित्यन्वर्थनामायमलङ्कार इत्यर्थः । उदाहरणे लक्षणं स्फुटयति—**केनचिदि-ति** । स चायं चेति तच्छब्देदंशब्दाभ्यां तयोस्सहचरयोः परामर्शः । ततश्च प्रसि-द्धधनार्जनादिव्यापारे नानयोः परस्परमविदितमस्ति किञ्चिदिति लोकवादानुवादेन प्रति-पादने रहस्यतदीयधूर्तव्यापारमप्ययमेव जानातीति मर्मप्रकाशनादत्र छेकोक्तिरितिभावः ।

---

१. अयं चन्द्रालोके नास्ति । अस्याश्छेकोक्तेः व्याजोक्तावन्तर्भाव इति प्राचामाशयः ।

'मलयमरुतां व्राता याता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन! घटय तं त्वं निःस्नेहं य एव निवर्तने
प्रभवति गवां किन्नश्छिन्नं स एव धनञ्जयः ॥'

अत्र धनलिप्सया प्रोषिताङ्गनासखीवचने य एव गवां निवर्तने प्रभवति स एव धनंजय इत्यान्ध्रजातिप्रसिद्धलोकवादानुकारः । अत्रातिसौन्दर्यशालिनीमिमामपहाय धनार्लिप्सया प्रस्थितो रसानभिज्ञत्वाद्गोप्राय एव । तस्य निवर्तकस्तु धनस्य जेता धनेनाकृष्टस्य तद्विमुखीकरणेन प्रत्याक्षेपकत्वादित्यर्थान्तरमपि गर्भीकृतम् ।

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे छेकोक्तिप्रकरणम् ॥ ९१ ॥

अथ वक्रोक्तिः—

**वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम्[1] ।**
**मुञ्च मानं दिनं प्राप्तं नेह नन्दी[2] हरान्तिके ॥**

अत्र मानं मुञ्च प्रयाता रात्रिरित्याशयेनोक्तायां वाचि नान्दिनं प्राप्तं मामुञ्चेत्यर्थान्तरं श्लेषेण परिकल्पितम् । यथा वा—

'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥'

इदमविकृतश्लेषवक्रोक्तेरुदाहरणम् ।

उदाहरणान्तरमाह—**मलयमरुतामिति** । अत्रापि लक्षणं योजयति—**अत्रेति** । **प्रोषितांगनेति** । प्रोषितभर्तृकाङ्गनेत्यर्थः । गर्भीकृतमर्थान्तरं विवृणोति—**अत्रेति** ।

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां छेकोक्तिप्रकरणम् ॥ ९१ ॥

वक्रोक्तिं लक्षयति—**वक्रोक्तिरिति** । यत्रान्याभिप्रायकपुरुषान्तरोक्तस्यान्येनान्यथा यद्योजनं तदनुकूलोक्तिः वक्रोक्तिरित्यर्थः । सा च द्विविधा । श्लेषेण काक्वा चान्यथा योजनात् । आद्यस्योदाहरणमुत्तरार्धम् । मानिनीं प्रति, मानं परित्यज दिनं प्राप्तमित्यभिप्रायेण उक्तस्य तृतीयपादस्य प्राप्तं नन्दिनं मा मुञ्चेति श्लेषेण अर्थान्तरपरतया योजनं नायिकया कृतमिति लक्षणानुगमः स्पष्ट इत्याह—**अत्रेति** । अभङ्गश्लेषेण वक्रोक्तिमुदाहरति—**अहो केनेति** । स्पष्टम् । **अविकृतेति** । समभिव्याहृताक्षरपरित्यागशू-

१. **'वाच्यार्थान्तरकल्पनम्** ।' २. **'मन्द ! नन्दी'** इति च चन्द्रालोकपाठः ।

विकृतश्लेषवक्रोक्तिर्यथा—

'भवित्री रंभोरु ! त्रिदशवदनग्लानिरधुना
स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः ।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात् पठ पुनः ॥'

सर्वमिदं शब्दश्लेषमूलाया वक्रोक्तेरुदाहरणम् ।

अर्थश्लेषमूलाया वक्रोक्तेर्यथा—

'भिक्षार्थी स क यातस्सुतनु? बलिमखे ताण्डवं काद्य भद्रे?
मन्ये बृन्दावनान्ते क नु स मृगशिशुर्नैव जाने वराहम् ।
बाले! कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता
लीलासल्लाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥'

काक्वा यथा—

'असमालोच्य कोपस्ते नोचितोऽयमितीरिता ।
नैवोचितोऽयमिति तं ताडयामास मालया ॥'

अत्र नैवोचितोऽयमिति काकुस्वरविकारेणोचित एवेत्यर्थान्तरकल्पनम् ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे वक्रोक्तिप्रकरणम् ॥९२॥

अथ स्वभावोक्तिः—

**स्वभावोक्तिस्स्वभावस्य जात्यादिस्थस्य[1] वर्णनम् ।**

न्यश्लेषवक्रोक्तेरित्यर्थः । समभिव्याहृताक्षरपरित्यागशालिश्लेषवक्रोक्तिमुदाहरति—**भवित्रीति** । अत्र पादत्रयं सतीं प्रति रावणदूतस्योक्तिः । रामापजयेन देवतामुखवैवर्ण्यवानरसेनाबिनाशप्राप्त्यभिप्रायगर्भा । ततश्चतुर्थपादे तं प्रति सीतादेव्या उक्तौ प्रागन्याभिप्रायेणोक्तस्य वाक्यत्रयस्य सप्तमाक्षरविलोपपूर्वकपुनःपाठविधानेन स्वाभिमतदशवदनपराभवाद्यभिप्रायपरतया तया योजनं कृतम् । शब्दश्लेषमूलां वक्रोक्तिमुदाहृत्यार्थश्लेषमूलां तामुदाहरति—**भिक्षार्थी क प्रयात इति** । अत्र लक्ष्मीपार्वत्योः संवादः । भिक्षार्थीत्यादिलक्ष्मीवाक्यानां शिववृत्तान्ताभिप्रायगर्भाणां 'सुतनु! बलिमख' इत्यादिवाक्यैर्लक्ष्मीवल्लभवृत्तान्ताविष्करणाभिप्रायपरतया पार्वत्या योजनं कृतमिति लक्षणसङ्गतिः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां वक्रोक्तिप्रकरणम् ॥९२॥

स्वभावोक्तिं लक्षयति—**स्वभावोक्तिरिति** । तत्तज्जात्युचितस्वभाववर्णनं स्वभा-

1, **'जात्यादिषु च वर्णनम्'** । इति चन्द्रालोकपाठः ।

**कुरङ्गैरुत्तरङ्गाक्षैस्तब्धकर्णैरुदीक्ष्यते ॥**

यथा वा—

'तौ सम्मुखं प्रचलितौ सविधे गुरूणां मार्गप्रदानरभसस्खलितावधानौ ।
पार्श्वोपसर्पणमुखावपि भिन्नदिक्कं कृत्वा मुहुर्मुहुरुपासरतां सलज्जम् ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे स्वभावोक्तिप्रकरणम् ॥९३॥

अथ भाविकम्—

**भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् ।**
**अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः ॥**

स्थानभीषणत्वोद्भावनमिदम् । यथा वा—

'अद्यापि तिष्ठति दृशोरिदमुत्तरीयं धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ते ।
वाचं निशम्य नयनं नयनं ममेति किञ्चित्तदा यदकरोत् स्मितमायताक्षी ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे भाविकप्रकरणम् ॥९४॥

अथ उदात्तः—

**उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् ।**
**सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥**

---

वोक्तिरित्यर्थः । 'कुरङ्गै'रित्यत्र गीतादिध्वनिश्रवणे कुरङ्गजातिस्वभाववर्णनात् स्पष्टं लक्षणम् । द्वितीयोदाहरणेऽपि बाहुयुद्धप्रवृत्तयोर्मल्लयोः स्वभाववर्णनात् स्वभावोक्तिः स्पष्टा ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां स्वभावोक्तिप्रकरणम् ॥९३॥

भाविकालङ्कारं लक्षयति—**भाविकमिति** । भूतस्य भाविनो वा अर्थस्य साक्षात्कारवर्णनं भाविकमित्यर्थः । तथाविधस्य साक्षात्कारवर्णने निमित्तं वस्तुगतमद्भुतत्वम् । उत्तरार्धे चिरकालातीतस्य सुरासुरसङ्ग्रामस्य 'अद्य विलोकय' इति तत्स्थानस्यातिभयङ्करत्वं निमित्तीकृत्य तद्भावनाय प्रत्यक्षायमानत्ववर्णनाल्लक्षणसङ्गतिः स्पष्टेत्यभिप्रायः । द्वितीयोदाहरणे नायिकायाः स्तनतटच्युतोत्तरीयग्रहणप्रवृत्तायां मदीयं वस्त्रमित्यतर्कितागतप्रियतमवचनाकर्णनजनितस्मितस्य नायकेना'द्यापि तिष्ठति दृशो'रिति प्रत्यक्षायमानत्वोक्तेरत्रापि भाविकमित्यभिसन्धिः । तथा वर्णने च 'किञ्चिदि'ति पदसूचितमशक्यवचनीयत्वं निमित्तम् ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां भाविकप्रकरणम् ॥ ९४ ॥

उदात्तालङ्कारं लक्षयति—**उदात्तमिति** । सम्पत्समृद्धेर्महापुरुषसम्बन्धितया श्ला-

---

१. '**साक्षाद्दर्शनवर्णनम्** । **अलं विलोकयाऽद्यापि**' इति चन्द्रालोकपाठः। किं च चन्द्रालोके भाविकानन्तरं भाविकच्छविनामालङ्कारः लक्षितः । यथा—**देशा-**

इदं श्लाघ्यचरितस्यान्याङ्गत्वे उदाहरणम् ॥

ऋद्ध्युदाहरणं यथा—

( 'विधुकरपरिरंभादात्तनिष्यन्दपूर्णै-
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृताचित्तस्तत्र भैमीवनेन ॥' )

'रत्नस्तंभेषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः ।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्वतः ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे उदात्तप्रकरणम् ॥९५॥

अथ अत्युक्तिः—

**अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ।**
**त्वयि दातरि राजेन्द्र ! याचकाः कल्पशाखिनः ॥**

इयमौदार्यात्युक्तिः । शौर्यात्युक्तिर्यथा—

'राजन्[१] सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ।
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥ '

सम्पदत्युक्तावुदात्तालङ्कारः, शौर्यात्युक्तावत्युक्त्यलाङ्कार इति भेदमाहुः।

---

घ्यस्य चारित्रस्य वा किञ्चिद्ज्ञापकत्वेन यद्वर्णनं तदुदात्तमित्यर्थः । अनयोर्भेदयोर्व्यत्ययेनोदाहरणमुत्तरः सार्धश्लोकः । तत्राद्ये महापुरुषधूर्जटिसम्बन्धित्वेन श्लाघनीयस्य युद्धलक्षणतदीयचरितस्य तत्प्रदेशविशेषज्ञापकतया वर्णनादाद्यो भेदः । 'रत्नस्तम्भे'ष्विति द्वितीये सम्पत्समृद्धिः स्पष्टेति द्वितीयो भेदः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां उदात्तप्रकरणम् ॥ ९५ ॥

अत्युक्तिं लक्षयति—**अत्युक्तिरिति** । अद्भुतस्य अतथ्यस्यासम्भावितस्य शौर्यौदार्यादेर्वर्णनमत्युक्तिरित्यर्थः । द्वयोरपि व्यत्यासेनोदाहरणे दर्शयति—**त्वयीत्यादि** । स्पष्टम् । ननूदात्तालङ्कारान्नात्युक्तेर्भेदः । 'रत्नस्तम्भे'ष्वित्यादौ तदुदाहरणे कविप्रतिभामात्रगोचरतया असम्भावितायाः समृद्धेर्वर्णनेन वैलक्षण्याभावादित्याशङ्क्याह—**सम्पदिति**।

---

**त्मविप्रकृष्टस्य दर्शनं भाविकच्छविः । त्वं वसन् हृदये तस्यास्साक्षात्पञ्चेषुरीक्ष्यते ॥** ' इति । १. इदं पद्यं केषुचित्पुस्तकेषु न दृश्यते ।

'अनयोरनवद्याङ्गि! स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥'
'अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवं विधं भावि भवत्याः स्तनजृम्भणम् ॥'

इति सदसदुक्तितारतम्येनातिशयोक्त्यत्युक्त्योर्भेदः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे अत्युक्तिप्रकरणम् ॥९६॥

अथ निरुक्तिः—

[1]**निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् ।**
**ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ॥**

यथा वा—

'पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावादनामिका चार्थवती बभूव ॥'

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे निरुक्तिप्रकरणम् ॥९७॥

अथ प्रतिषेधः—

[2]**प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम् ।**
**न द्यूतमेतत्कितव! क्रीडनं निशितैश्शरैः ॥**

आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु अद्भुतकविप्रतिभामात्रगोचरासम्भावितार्थवर्णनमुदात्तमिति लक्षयित्वा तस्यार्थस्य शौर्यौदार्यादिनानाप्रकारतया तथाविधशौर्यौदार्यात्युक्त्योर्न भेदे प्रमाणमस्तीति । ननु, तथाप्यसम्बन्धे सम्बन्धवर्णनरूपातिशयोक्तिविषयाक्रमणान्न ततोऽस्या भेदो युक्त इत्यत आह—**अनयोरिति** । अनयोरतिशयोक्त्यत्युक्त्योरुदाहरणयोरसम्बन्धे सम्बन्धवर्णनस्याविशेषेऽपि असदुक्तितारतम्यवादिहाप्यतिशयोक्त्यपेक्षया अत्यन्तासतः शौर्यौदार्यादेरुक्त्या भेदोऽत्र द्रष्टव्य इत्यर्थः। तावता तदवान्तरभेदत्वोपपत्त्या न पार्थक्यमस्या इति चिन्त्यमेतत् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां अत्युक्तिप्रकरणम् ॥ ९६ ॥

निरुक्तिं लक्षयति—**निरुक्तिरिति** । सोदाहरणग्रन्थः स्पष्टः ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां निरुक्तिप्रकरणम् ॥ ९७ ॥

प्रतिषेधालङ्कारं लक्षयति—**प्रतिषेध इति** । यः प्रसिद्धनिषेधानुवादः ज्ञातत्वात्स्व-

---

१. चन्द्रालोके तृतीयमयूखे '**निरुक्तं स्यान्निर्वचनं नाम्नः सत्यं तथानृतम् । ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्** ॥ इति पाठः ।

२. चन्द्रालोके तृतीयमयूखे '**प्रतिषेधः प्रसिद्धानां कारणानामनादरः ।**

निर्ज्ञातो निषेधः स्वतोऽनुपयुक्तत्वादर्थान्तरं गर्भीकरोति । तेन चारुत्वान्वितोऽयं प्रतिषेधनामालङ्कारः । उदाहरणम्—युद्धरङ्गे प्रत्यवतिष्ठमानं शाकुनिकं प्रति विदग्धवचनम् । तत्र युद्धस्याक्षद्यूतत्वाभावो निर्ज्ञात एव कीर्त्यमानस्तत्रैव तव प्रागल्भ्यं न युद्धे व्युत्पत्तिग्रहोऽस्तीत्युपहासं गर्भीकरोति । तच्च कितवेत्यनेनाविष्कृतम् ।
यथा वा—

'न विषेण न शस्त्रेण नाग्निना न च मृत्युना ।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः ॥'

अत्र स्त्रीणां विषादिनिर्मितत्वाभावः प्रसिद्ध एव कीर्त्यमानः तासां विषाद्यतिशायिक्रौर्यमित्यमुमर्थं व्यक्तीकरोतीति स चा'प्रतीकारपारुष्या' इति प्रतीकारवद्भ्यो विषादिभ्यस्तासां विशेषं दर्शयता विशेषणेनाविष्कृतः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे प्रतिषेधप्रकरणम् ॥९८॥

अथ विधिः—

**[1]सिद्धस्यैव विधानं यत्तामाहुर्विध्यलंकृतिम् ।**
**पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत् ॥**

निर्ज्ञातविधानमनुपयुक्तिबाधितं सदर्थान्तरगर्भीकरणेन चारुतरमिति तं विधिनामानमलङ्कारमाहुः । उदाहरणे कोकिलस्य कोकिलत्वविधानमनुपयु-

---

तोऽनुपयुक्तोऽर्थान्तरगर्भीकारेण चारुतावहः स प्रतिषेधालङ्कार इत्यर्थः । उदाहरणे युद्धोद्यतशकुनिं प्रति उक्तौ लक्षणं योजयति—**तत्र युद्धस्येति** । उदाहरणान्तरमाह—**न विशेषणेति** । स्पष्टम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां प्रतिषेधप्रकरणम् ॥ ९८ ॥

विध्यलङ्कारं लक्षयति—**सिद्धस्यैवेति** । ज्ञातस्येत्यर्थः । ज्ञातार्थस्य विधानं यदुपयोगपरिच्युतम् । अभिप्रायान्तरं गर्भीकुर्वद्विच्छित्तिकारि चेत् । विध्यलङ्कारमाहुस्तं साहित्यपरिशीलिनः । उदाहृतावुत्तरार्धे लक्षणानुगमः स्फुट इत्यभिप्रेत्याह—**निर्ज्ञातेति** । नन्वनयोर्विधिप्रतिषेधयोरर्थान्तरसंक्रमितवाच्यध्वनिभेदतया नालङ्कारत्वं युक्तमित्याशङ्क्य

---

**न युद्धेन भ्रुवोः स्पन्देनैव धीरा निवारिताः ॥** ' इति पाठः ।

१. अयं विध्यलङ्कारश्चन्द्रालोकेऽनुक्तः ।

क्तं सदतिमधुरपञ्चमध्वनिशालितया सकलजनहृद्यत्वं गर्भीकरोति । तच्च 'पञ्चमोदञ्चने' इति कालविशेषणेनाविष्कृतम् ।

यथा वा--

'हे हस्त! दक्षिण! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि निर्भरगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥'

अत्र रामस्य स्वहस्तं प्रति 'रामस्य गात्रमसी'ति वचनमनुपयुक्तं सद्रामस्येत्यनेन स्वस्यात्यन्तानिष्करुणत्वं गर्भीकरोति । तच्च निर्भरेत्यादिविशेषणेनाविष्कृतम् । यद्यप्यनयोर्विधिनिषेधयोरुदाहरणेषु व्यङ्ग्यान्यार्थान्तरसंक्रमितवाच्यरूपाणि । तथापि न ध्वनिभावास्पदानि । स्वोक्त्यैव व्यङ्ग्यविशेषाविष्करणात् । व्यङ्ग्याविष्करणे चालङ्कारत्वमेवेति प्राक् प्रस्तुताङ्कुरप्रकरणे व्यवस्थितत्वात् । पूर्वं बाधितौ विधिप्रतिषेधौ आक्षेपभेदत्वेनोक्तौ । इह तु प्रसिद्धौ विधिप्रतिषेधौ तत्प्रतिद्वन्द्विनावलङ्कारत्वेन वर्णिताविति भेदः ॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे विधिप्रकरणम् ॥९९॥

अथ हेतुः—

**[1]हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ।**
**असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥**

---

निषेधति—**यद्यपीति** । अर्थान्तरसंक्रमितवाच्यरूपव्यङ्ग्यार्थसद्भावेऽपि तेषां व्यङ्ग्यानां 'कितवे'त्यादिभिः स्वोक्तिभिरुक्तरीत्या कविनाऽऽविष्करणान्न ध्वनित्वमित्यर्थः । नन्वाक्षेपावान्तरभेदत्वेन विधिप्रतिषेधयोरुक्तेर्न पार्थक्येन परिगणनं युक्तमित्यत आह—**पूर्वमिति** । बाधितयोराक्षेपभेदत्वं प्रागुक्तम् । इह तु सिद्धयोस्तयोरलङ्कारत्वमिति युक्तो भेद इत्यर्थः ॥ इति कुवलयानन्दटीकायां रसिकरञ्जन्यां विधिप्रकरणम् ॥ ९९ ॥

हेत्वलङ्कारं लक्षयति—**अहेतोरिति** । कार्यस्येत्यर्थः । तथा च कार्यस्य कार-

---

१. चन्द्रालोके तृतीयमयूखे अयं हेत्वलङ्कारः कार्यनाम्ना व्यवह्रियते । यथा—**कार्यं फलोपलम्भश्चेद्व्यापाराद्वस्तुतोऽथवा । असावुदेति शीतांशु-**

यथा वा—

'एष ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
कस्य नो तनुते तन्वि! पिपासाकुलितं मनः ॥'

'माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।
तृष्णे! त्वामनुबध्नता फलमियत् प्राप्तं जनेनामुना
यत्स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न सम्मन्यते ॥'

इत्याद्युदाहरणम् ।

**हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते ।**
**लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ॥**

अत्र च कार्यावश्यम्भावतच्छैघ्र्यादिप्रत्यायनार्थः कार्यकारणाभेदव्यपदेशः । रूपके सादृश्यादभेदव्यपदेशः । इह कार्यकारणभावादिति भेदः ।

यथा वा—

'आयुर्दानमहोत्सवस्य विनतक्षोणिभृतां मूर्तिमान्
विश्वासो नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः परः ।
आनन्दः कलिताकृतिस्सुमनसां वीरश्रियो जीवितं
धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः ॥'

---

णेन सह वर्णनं हेत्वलङ्कार इत्यर्थः । उदाहरणेषु मानच्छेदशीतांशूदययोरधरपिपासयोस्तृष्णानुबन्धातिनीचोपसर्पणयोः कार्यकारणभूतयोः सहनिबन्धनाद्धेत्वलङ्कार इति भावः । यद्यप्यधरपिपासयोर्हेतुहेतुमद्भावो न लोकसिद्धस्तथापि 'विद्रुमच्छाय' इति श्लेषेण द्रुमच्छायाराहित्येन प्रतीतस्य तस्य तत्र सञ्चरन्मानसपिपासाहेतुत्वं काल्पनिकमस्तीति विच्छित्तिविशेषः । मतान्तरेण हेत्वलङ्कारं लक्षयति—**हेतुहेतुमतोरिति** । कार्यकारणयोरभेदवर्णनं हेत्वलङ्कार इति केचित् प्राचीना वदन्तीत्यर्थः । उदाहरणे कार्यकारणभूतानां वेङ्कटप्रभुकटाक्षविद्वत्सम्पद्विलासानां कार्यकारणानामभेदवर्णनात् स्पष्टा लक्षणसङ्गतिरिति भावः । नन्वभेदव्यपदेशस्य न चमत्कारकारितेति नालङ्कारतेत्यत आह—**अत्रेति** । अव्यभिचारविलम्बाभ्यां सह कार्यान्तरनैरपेक्ष्येण कार्योत्पादनप्रत्ययनेन तस्य चमत्कारकारितया अलङ्कारत्वं युक्तमिति भावः । उदाहरणान्तरमाह—**आयुरिति** । अत्र लक्षणं योजयति—

---

**मानच्छेदाय सुभ्रुवाम्** । ' इति पठ्यते । किं च तत्रैव हेतुरिति कश्चिन्निरूपितः । तथा हि—**हेतुस्त्यक्त्वा बहून्पक्षान् युक्त्यैकस्यावधारणम्** । **नेन्दुर्नार्कोऽयमौर्वाग्निः सागरस्थितो दहन्** ॥'इति पाठः ॥ १. अयं हेत्वलङ्कार-

अत्र दानमहोत्सवायुष्करत्वादिनाध्यवसिते राज्ञि तदायुरादिव्यपदेशः ॥

**इत्थं शतमलङ्कारा लक्षयित्वा निदर्शिताः ।**
**प्राचामाधुनिकानां च मतान्यालोच्य सर्वतः ॥**

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे हेतुप्रकरणम् ॥१००॥

अथ रसवदादयः—

**रसभावतदाभासभावशान्तिनिबन्धनाः ।**
**चत्वारो रसवत्प्रेय ऊर्जस्वि च समाहितम् ॥**
**भावस्य चोदयस्सन्धिः शबलत्वमिति त्रयः ।**
**अष्टौ प्रमाणालङ्काराः प्रत्यक्षप्रमुखाः क्रमात् ।**
**एवं पञ्चदशाप्यन्यानलङ्कारान्विदुर्बुधाः ॥**

---

**अत्रेति** । 'आयुष्करादी'त्यादिशब्देन प्रणतभूपतिविश्वासत्वनिखिलवनितानयनोत्सवत्वादि गृह्यते । एवमियता प्रबन्धेन प्रदर्शितानलङ्कारानियत्तया सङ्कलय्योपसंहरति—**इत्थमिति** । प्राचां उद्भटभामहादीनाम् । आधुनिकानां रुचकमंखुकादीनाम् ॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां हेतुप्रकरणम् ॥ १०० ॥

अर्थादन्येऽपि पञ्चदशालङ्कारा लक्ष्येषु प्रचुरप्रयोगा मूलकारेणानुक्तास्ते प्रदर्श्यन्त इत्यभिप्रेत्य तान्विभजते—**चत्वार इति** । यद्यप्येते रसवदादयः सप्त सर्वस्वकारादिभिरभिहिताः । अतस्ते प्रागेव गणनीयाः । न पुनरिदम्प्रथमतयोन्मीलितप्रमाणालङ्कारैस्सह पठितुं युक्ताः । तथापि काव्यप्रकाशकारादिभिरेते रसवदादयो गुणीभूतव्यङ्ग्यभेदत्वेनोदाहृतास्तन्मतनिरासमभिप्रेत्य प्रमाणालङ्कारैस्सह परिगणनं तेषामिति भावः । रसो विद्यते यस्मिन्निबन्धने तद्रसवत् । प्रेयः प्रियतमम् । ऊर्जो बलं विद्यते यस्मिन् तदूर्जस्वि । समाहितं प्रशमः यस्मिन् तत्समाहितमिति मत्वर्थीयाच्प्रत्ययेनेत्येवं निबन्धनविशेषणत्वेन रसवदादिशब्दानां व्युत्पत्तिर्द्रष्टव्या । तत्र रसस्वरूपं प्रतिपादयन् रसवदलङ्कारं लक्षयति—

---

भेदश्चन्द्रालोके नास्ति। १.चन्द्रालोके पञ्चममयूखसमाप्तावयं पाठक्रमः।यथा—'**रसभावतदाभासभावशान्तिनिबन्धनाः। रसवत्प्रेय ऊर्जस्वि समाहितमयाभिधाः ॥' भावानामुदयः सन्धिः शबलत्वमिति त्रयः । अलंकारानिमान्सप्त केचिदाहुर्मनीषणः॥ शुद्धिरेकप्रधानत्वं तथा संसृष्टिसंकरौ । एतेषामेव विन्यासान्नालंकारान्तराण्यमी ॥ सर्वेषां च प्रतिच्छन्दप्रतिच्छन्दभिदाभृताम् । उपाधिः क्वचिदुद्भिन्नः स्यादन्यत्रापि सम्भवात् ॥ माला परम्परा चैषां भूयसामनुकूलके । मनुष्ये भावतः क्वा-**

तत्र विभावानुभावव्यभिचारिभिरभिव्यञ्जितो रतिहासशोकादिश्चित्तवृत्तिविशेषो रसः । स यत्रापरस्याङ्गं भवति तत्र रसवदलङ्कारः । वि-

---

**तत्रेति ।** अत्रेयं सिद्धान्तस्थितिः । रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयनिर्वेदाख्याः नव चेतोवृत्तिविशेषाः वासनात्मतया सदावस्थायिनः आनन्दांकुरपूर्वावस्थारूपाः । भरतमुनिना 'विरुद्धा अविरुद्धा वा यं तिरोहितुमक्षमाः । आनन्दांकुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥' इति लक्षणोक्तेः विरुद्धाविरुद्धसजातीयविजातीयभावान्तरातिरस्कृतानन्दसूक्ष्मावस्थात्वेन लक्षितास्तेषां चेतोवृत्तिविशेषाणां कारणकार्यसहकारिणः क्रमेण विभावानुभावव्यभिचारिशब्दैः काव्ये नाट्ये प्रतिपादिताः कथ्यन्ते । तद्यथा—शृङ्गारे रतिः स्थायिभावः तस्या रतेः कारणानि लोकसिद्धानि नायिकानायकरहोवस्थानोद्यानमलयमारुतचन्द्रोदयादयः । तत्कार्याणि आलिङ्गनावलोकनचुम्बनभुजाक्षेपनीवीविस्रंसनादीनि । सहकारिणो निर्वेदादिभेदेन त्रयस्त्रिंशद्भेदाः । यथा—'निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः । आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ व्रीडा चपलता हर्ष आवेगो जडता तथा । गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ सुप्तिर्विबोधो हर्षश्चाप्यवहित्थमथोग्रता । मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः । त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥' इति मुनिना लक्षिताः । एते च यथासम्भवं नवानामपि स्थायिभावानां सहकारिणः । प्रकृते च औत्सुक्यचिन्ताहर्षचपलतादयः सहकारिणः । हासरूपस्थायिभावस्य वेश्याविटविकृतवस्तुदर्शनादयो विभावाः । उल्लासवक्त्रव्याकोशरदनविवृतिप्रभृतयोऽनुभावाः । चापलत्रासादयो व्यभिचारिण इत्यनया रीत्या रसान्तराणामपि विभावादय उन्नेयाः । एवमेतैर्विभावानुभावव्यभिचारिभिः काव्ये श्लोकानुसन्धानप्रतीतैर्नाट्याभ्यासपाटवं निर्वर्तितवाचिकाङ्गिकाद्यभिनयैश्चाभिव्यञ्जितो रत्यादिः सामाजिकनिष्ठस्थायिभावो रसः । तदुक्तं मुनिना—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति । तदेतत्सर्वमभिप्रेत्याह—**विभावेति । रस इति** । उक्तप्रकार इत्यर्थः । परस्य भावस्य रसादेर्वा अङ्गं भवतीति रसस्य प्राधान्ये ध्वनित्वम् । इतराङ्गत्वे रसवदलङ्कारता । अत एव ध्वनिकारः—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः । काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥' इति व्यक्तं प्रत्यपादयदिति भावः । तत-

---

पि ह्यलंकारांगतां गते ॥ पदे पदार्थे वाक्यार्थे वाक्यार्थस्तबके तथा । एते भवन्ति विन्यासाः स्वभावातिशयात्मकाः ॥ कस्याप्यतिशयस्योक्तेरित्यन्वर्थविचारणात् । प्रायेणामी अलंकारा भिन्ना नातिशयोक्तितः ॥ अलंकारप्रधानेषु दधानेष्वपि साम्यताम् । वैलक्षण्यं प्रतिव्यक्ति प्रतिभाति मुखेष्विव ॥ अलंकारेषु तथ्येषु यद्यनास्था मनीषिणाम् । तदर्वाचीनभेदेषु नाम्नाम्नायोऽथ दूष्यताम् ॥' इति ।

भावानुभावाभ्यामभिव्यञ्जितो निर्वेदादिस्त्रयस्त्रिंशद्भेदो देवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमाना रतिश्च भावः । स यत्रापरस्याङ्गं तत्र प्रेयोऽलङ्कारः । अनौचित्येन प्रवृत्तो रसो भावश्च रसाभासो भावाभासश्चेत्युच्यते । स यत्रापरस्याङ्गं तदूर्जस्वि । भावस्य प्रशाम्यदवस्था भावशान्तिः । तस्यापराङ्गत्वे समाहितम् । भावस्योद्गमावस्था भावोदयः । द्वयोर्विरुद्धयोर्भावयोः परस्परस्पर्धाभावो भावसन्धिः । बहूनां भावानां पूर्वपूर्वोपमर्देनोत्पत्तिर्भावशबलता । एतेषामितराङ्गत्वे भावोदयाद्यास्त्रयोऽलङ्काराः । तत्र रसवदुदाहरणम्—

'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलके दृष्टौ तौ दिव्यौ मत्स्यकच्छपौ ॥'

अत्र मुनिविषयरतिरूपस्य भावस्याद्भुतरसोऽङ्गम् ।

---

श्च इतराङ्गीभूतस्थायिभावत्वं रसवदलङ्कारत्वं तल्लक्षणमिह विवक्षितमिति स्थायिभावस्यैव इतराङ्गत्वेन रसवदलङ्कारव्यवहारः । न त्वलौकिकाखण्डब्रह्मानन्दसब्रह्मचारिणो विभावादिपरामर्शजीवितावधेः रसस्याङ्गत्वमस्तीति । **अभिव्यञ्जित इति** । अनेन वाच्यस्य निर्वेदादेर्न भावत्वमिति सूचितम् । अत एव 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्त' इति काव्यप्रकाशकारस्तथैव व्याचष्ट । **निर्वेदादिरिति** । निर्वेदस्यामङ्गलप्रायस्यापि व्यभिचारिषु प्रथमनिर्देशः शान्तरसस्थायित्वप्रत्यायनायेति भावः । **स यत्रेति** । इतराङ्गीभूतभावत्वं प्रेयोऽलङ्कारत्वमिति द्रष्टव्यम् । रसाभासभावाभासयोरपराङ्गत्वे ऊर्जस्व्यलङ्कार इति वदन् तौ लक्षयति—**अनौचित्येनेति** । अनौचित्यं धर्मादिविरोधित्वं तिर्यगादिविषयत्वं च । तेन प्रवर्तितयोः रसभावयोराभासत्वमित्यर्थः । समाहितालङ्कारं लक्षयति । **भावस्येति** । प्रशाम्यदवस्था विनश्यदवस्था । सा भावशान्तिरित्यर्थः । **भावस्येति** । न च भावोदयो भावालङ्कारशब्दितात् प्रेयोलङ्कारान्नातिरिच्यते । भावोदयाङ्गत्वस्योदीयमानभावाङ्गत्वपर्यवसितत्वादिति वाच्यम् । उदीयमानावस्थभावस्येतराङ्गत्वे भावोदयः । उदितावस्थभावस्यांगत्वे प्रेयोऽलङ्कार इति तयोर्भेदात् । एवं प्रशाम्यदवस्थभावस्येतराङ्गत्वे समाहितमिति न तस्यापि प्रेयोऽलङ्कारान्तर्भाव इति द्रष्टव्यम् । भावसन्धिभावशबलतयोरपि स्वरूपकथनपूर्वकं लक्षणमाह—**द्वयोरिति** । इत्थं लक्षितान्रसवदादीन् क्रमेणोदाहरति—**मुनिर्जयतीत्यादिना** । अत्र लक्षणमुपपादयति—**अत्र मुनीति** । मुनिर्जयतीति तदीयसर्वोत्कर्षवर्तनस्यैव प्राधान्येन विवक्षितत्वात्तद्विषयकरत्याख्यो भावः प्रधानभूतः । तत्र बहुयुगावर्तितदुष्करतपश्चर्यालभ्यदर्शनयोर्दिव्यमीनकमठयोश्चुलकदर्शनवर्णनेन विस्मयप्रतीतिस्तस्याङ्गता । रसस्य भावाङ्गत्वे इदमुदाहरणम् ।

यथा वा—

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'

अत्र करुणस्य शृङ्गाररसोऽङ्गम् ।  (१)

प्रेयोलङ्कार एव भावालङ्कार उच्यते । स यथा—

'कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ? त्रिपुरहर? शंभो? त्रिनयन?
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥'

अत्र शान्तिरसस्य 'कदे'ति पदसूचितश्चिन्ताख्यो व्यभिचारिभावोऽङ्गम् ।

यथा वा—

'अत्युच्चाः परितस्स्फुरन्ति गिरयः स्फारास्तथाम्भोधयः
तानेतानपि बिभ्रती किमपि न श्रान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥'

अत्र प्रभुविषयरतिभावस्य वसुमतीविषयरतिभावोऽङ्गम् । (२)

---

रसस्य रसाङ्गत्वे उदाहरति—**अयमिति** । अत्र रणशिरासि निपतितं भूरिश्रवसमालोक्य तद्वधूनां प्रलापे मृतभूरिश्रवोऽवलम्बनः छिन्नतदीयाङ्गदर्शनाद्युद्दीपितः रोदनादिना अनुभावितः स इति पूर्वावस्थास्मृत्यादिना सञ्चारितः प्रबन्धव्यङ्ग्यः करुणो रसः प्रधानम् । रशनोत्कर्षीत्यादिकरविशेषणैर्विप्रलम्भरसः प्रतीयमानस्तदङ्गमित्यभिप्रेत्याह—**अत्रेति । शृंगार इति** । शृङ्गाररसस्थायिभाव इत्यर्थः ॥ १ ॥

भावालङ्कारः प्रेयोऽलङ्कारादतिरिक्त इति भ्रमं वारयन् प्रेयोऽलङ्कारमुदाहरति—**प्रेयोऽलंकार इति । अत्र शान्तरसस्येति** । अत्र विरक्तालम्बनः विषयानित्यत्वदर्शनेनोद्दीपितः एकान्तवासाद्यनुभावितस्तत्वज्ञानक्षमामतिधृत्यादिभिस्सञ्चारितः शान्तरसो ध्वन्यत इति स प्रधानभूतः । तत्र कदेति पदसूचितश्चिन्ताख्यो व्यभिचारिभावोऽङ्गमिति प्रेयोऽलङ्कारोऽयमिति भावः । इदं व्यभिचारिभावस्य रसाङ्गत्वे उदाहरणम् । रतिरूपभावस्य रतिरूपभावाङ्गत्वे उदाहरति—**अत्युच्चा इति** । प्रभुविषयो रत्याख्यो भावः विभावेन मौनादिना व्यञ्जितः प्रधानभूतो वाक्यार्थस्तस्य भूविषयरतिभावोऽङ्गमिति प्रेयोऽलङ्कार इति भावः ॥ २ ॥

ऊर्जस्वि यथा—

'त्वत्प्रत्यर्थिवसुन्धरेशतरुणीस्सन्त्रासतस्सत्वरं
यान्तीर्वीर! विलुण्ठितुं सरभसं याताः किराता वने ।
तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमा-
स्तासामुत्तरलैस्तनैरतितरां लोलैरपाङ्गैरपि ॥'

अत्र प्रभुविषयरतिभावस्य शृङ्गाररसाभासोऽङ्गम् ।

यथा वा—

'त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते! ।
अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः ॥'

अत्र कवेः प्रभुविषयस्य रतिभावस्य तद्विषयद्विषद्गणरतिरूपो भावाभासोऽङ्गम् । (३)

समाहितं यथा—

'पश्यामः किमियं प्रपद्यत इति स्थैर्यं यथालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥'

अत्र शृङ्गारस्य कोपशान्तिरङ्गम् । (४)

अथ भावोदयप्रभृतयः—

भावोदयो यथा—

---

'तदद्य विश्रम्य दयालुरेधि मे दिनन्निनीषामि भवद्विलोकिनी ।
अदर्शि पादेन विलिख्य पत्रिणा तवैव रूपेण समस्स मन्प्रियः ॥'

ऊर्जस्व्यलङ्कारमुदाहरति—**त्वत्प्रत्यर्थीति** । **शृंगारेति** । पारदारिकतयास्य शृङ्गाररस आभास इति भावः । भावाभासोदाहरणमाह—**त्वयीति** । अत्र प्रभुविषयरतिभावस्य द्विषद्गतरतिलक्षणभावाभासोऽङ्गम् । तस्य च स्वसदृशप्रभ्वन्तरविषयतया अनौचित्येन प्रवृत्तत्वादाभासत्वमिति भावः ॥ ३ ॥

समाहितमुदाहरति—**पश्याम इति** । स्पष्टम् ॥ ४ ॥

भावोदयमुदाहरति—**तदद्येति** । अत्रौत्सुक्यरूपभावस्योदीयमानस्य शृङ्गाररसाङ्गत्वात् भावोदयालङ्कारः । अत्र नलालम्बनो रहोदर्शनसम्भाषणाद्युद्दीपितोऽवलोकना-

अत्र नलं प्रति दमयन्त्या औत्सुक्यरूपभावस्योदयश्शृगाररसस्याङ्गम्। (५)

भावसन्धिर्यथा—

'एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावलि-
जैंतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली ।
लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर ! भवतः प्रौढाहवाडम्बरम् ॥'

अत्र रमणीप्रेमरणौत्सुक्ययोस्संधिः प्रभुविषयभावस्याङ्गम् । (६)

भावशबलं यथा—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नश्श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियस्स्वप्नेऽपि सा दुर्लभा
चेतस्स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥'

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता विप्रलम्भशृङ्गारस्याङ्गम् ॥ (७)

---

दिनानुभावितः औत्सुक्येन व्यभिचारिणा सञ्चारितः शृङ्गाररसः प्रधानभूत इति भावः ॥५॥

भावसन्धिमुदाहरति—**एकाभूदिति** । अत्र वर्णनीयभूपविषयकभावः प्रधानभूतो वाक्यार्थस्तस्य प्रियतमालोकनाहवाडम्बराकर्णनजनितयोः परस्परस्पर्धया समबलत्वेनान्योन्यपराभवमसहमानयोः प्रियतमाप्रेमरमणौत्सुक्ययोः सन्धिरङ्गमिति भावः ॥६॥

भावशबलतामुदाहरति—**क्वाकार्यमिति** । अत्र 'क्वाकार्य'मित्यनेन सूचितस्य वितर्काख्यस्य भावस्य 'भूयोऽपि दृश्येत से'ति दर्शनाशंसासूचितेन औत्सुक्येन तस्य दोषाणामुपशान्तये स्मृतमिति सूचितया मत्या तस्या 'अहो कोपेऽपि कान्तं मुख'मिति सूचितस्मरणेन तस्य 'किं वक्ष्यन्त्यपकल्मषा'इति सूचितया शङ्कया तस्याः 'स्वप्नेऽपि सा दुर्लभे'ति सूचितदैन्येन तस्य 'चेतः स्वास्थ्यमुपेही'ति सूचितधृत्या तस्याः 'कः खलु युवे'ति सूचितया चिन्तया उपमर्देन पूर्वपूर्वोपमर्दनपूर्वकमुत्तरोत्तरभावोत्थानात् भावशबलता । सेयं विप्रलम्भशृङ्गाररसस्याङ्गमिति भावः । अत्रेदं चिन्त्यम् । इयं हि भावशबलता प्राधान्येन काव्यप्रकाशकारादिभिरुदाहृत्य 'नन्वत्र सर्वत्र शृङ्गाररसस्य प्राधान्येन सत्वादेषां तदङ्गतया गुणीभूतव्यङ्ग्यतैव वाच्येत्याशङ्क्य 'मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन । इति राजानुगतविवाहप्रवृत्तभृत्यवद्रसाविनाभावेन सततं रसाङ्गभूतानामपि भावोदयादीनां तत्प्रयुक्तचमत्कारातिशये सहृदयानुभवसाक्षिके सत्यङ्गित्वविवक्षया तानादाय ध्वनिव्यपदेशो

अथ प्रमाणालङ्काराः—

प्रमाणालङ्कारेषु प्रत्यक्षं यथा—

'क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥'

यथा वा—

'किंतावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते युवत्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः ॥'

पूर्वत्र प्रत्यक्षमात्रम् । इह तु विशेषदर्शनजन्यसंशयोत्तरप्रत्यक्षमिति भेदः ।(८)

अनुमानं यथा—

'यथा रन्ध्रं व्योम्नश्चलजलदधूमस्स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुषण्डे स्मरदवः ॥'

---

युक्तः । तत्र तदा चेतसः विवाहप्रवृत्तभृत्य इव जननँधनानां विश्रमात्तैरेव ध्वनिव्यपदेशो युक्त इति ध्वनित्वं समर्थितम् । ग्रन्थकृतापि भावोदयभावसन्ध्योस्तथैवोदाहरणे दर्शिते । भावशबलताङ्गित्वं च 'पश्येत्कश्चिचल चपल!रे!कात्वराहं कुमारी हस्तालम्बं वितर हहह व्युत्क्रमः क्वासि यासि । इत्थं पृथ्वीपरिबृढ ! भवद्विद्विषोऽरण्यवृत्तेः कन्या कञ्चित्फलकिसलयान्याददानाभिधत्ते ॥' इत्यत्रोदाहृतम् । यद्यप्यत्रापि प्रबन्धव्यङ्ग्यं विप्रलम्भमादाय भावशबलताया अङ्गत्वं सम्भवति । तथापि प्रबन्धमपर्यालोचयतः भावशबलतामात्रकृतचमत्कारोदयात् विवक्षानुसार्यङ्गित्वसद्भावात् भावशबलताध्वनिरेव युक्त इति ॥ ७ ॥

(१) प्रमाणालङ्कारान् क्रमेणोदाहरति—**प्रमाणेति** । उदाहरणे 'क्रान्तकान्ते'ति प्रथमविशेषणेन चक्षुर्विषयस्य, द्वितीयविशेषणेन घ्राणविषयस्य, तृतीयविशेषणेन रसनेन्द्रियविषयस्य, तुरीयविशेषणेन श्रवणविषयस्य, पञ्चमविशेषणेन त्वगिन्द्रियविषयस्य, 'निर्ववारे'त्यनेन सकलेन्द्रियविषयानुभवजन्यसुखसोक्त्या षडिन्द्रियजन्यप्रत्यक्षाणां प्रतीतिः प्रत्यक्षालङ्कार इत्यर्थः । उदाहरणान्तरमाह—**किं तावदिति** । पूर्वस्मादस्य विशेषमाह—**पूर्वमिति** ।(८)

(२) अनुमानालङ्कारमुदाहरति—**यथा रन्ध्रं व्योम्न इति** । अत्र पथिकतरुषण्डे पक्षे जलदलक्षणधूमलेखया अभ्रंलिहया कीटमणिलक्षणस्फुलिङ्गैर्दिविभामधिशङ्कतया च विद्युन्निवहलक्षणज्वालोल्लसितया स्मरदावानलव्यतिरेकानुमितेर्वर्णनादनुमानालङ्कार इति

यथा वा—

'यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवौ
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापपुङ्खितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरस्सत्यं तदासां स्मरः ॥'

पूर्वं रूपकसङ्कीर्णम् । इदमतिशयोक्तिसङ्कीर्णमिति भेदः ॥

शुद्धानुमानं यथा—

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥'

यथा वा—

'सौमित्रे! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते! चन्द्रोऽयमुन्मीलति ।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि? हा कुरङ्गनयने? चन्द्रानने? जानकि? ॥(२)

---

भावः । उदाहरणान्तरमाह—**यत्रैता इति** । अत्राङ्गनाकटाक्षाणां मन्मथमार्गणत्वेनाध्यवसितानां निपतनेन लिङ्गेन चक्रीकृतचापालंकृतमन्मथपुरोधावनानुमितेरत्राप्यनुमानालङ्कार इति भावः । उदाहरणयोर्भेदं दर्शयति—**पूर्वमिति** । 'जलदधूम' इत्यादौ रूपकस्य व्यक्तं प्रतीतेः रूपकसङ्कीर्णं पूर्वोदाहरणम् । वनितादृगन्तानां मार्गणैर्निगरणादतिशयोक्तिसङ्कीर्णमिति तयोर्भेद इति भावः । असङ्कीर्णमुदाहरति—**शुद्धेति** । अत्रैवोदाहरणान्तरं दर्शयति—**सौमित्र इति** । अत्र चन्द्रोदयविजृम्भितविरहानलजनिततापातिरेकतप्यमानमानसस्य रामभद्रस्य सौमित्रेश्वोक्तिप्रत्युक्तौ तरुतलसमाश्रयणकर्तव्यतया चण्डांशूदयानुमितेरनुमानालङ्कारः । ततः 'चण्डांशोर्निशि का कथे'ति लक्ष्मणोक्त्या चण्डांशूदयाभावनिश्चयेन बाधोदयेन पूर्वानुमितेः भ्रमत्वनिश्चयः । कथं चन्द्रोदयइति कुतो विदितमिति रघुपतेरुक्तिः । ततः 'धत्ते कुरङ्गं यत' इति लक्ष्मणस्योक्तिः । अनया लक्ष्मणोक्त्या चन्द्राविनाभूतकुरङ्गपक्षधर्मतया चन्द्रानुमितेः प्रतीतेरयमप्यनुमानालङ्कारः । पूर्वानुमानोपमर्देनास्योत्थानात् पूर्वस्माद्विच्छित्तिविशेषः । अयं च 'क्वासि प्रेयसी'ति तुरीयचरणव्यङ्ग्यस्य सीतालम्बनस्य चन्द्रोदयोद्दीपितस्य तापानलाद्यनुभावेनानुभावितस्य 'क्वासि प्रेयसी'ति सूचितौत्सुक्यस्मृत्यादिभिः सञ्चारितस्य विप्रलम्भरसस्याङ्गमिति द्रष्टव्यम् ॥ ९ ॥

उपमानं यथा—

'तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले।
यस्तन्वि? तारकान्यासश्शकटाकारमाश्रितः ॥'

'अत्र मन्मथमिवातिसुन्दरं दानवारिमिव दिव्यतेजसम्।
शैलराजमिव धैर्यशालिनं वेद्मि वेङ्कटपतिं महीपतिम् ॥'

पूर्वोदाहरणे उपमानमूलभूतमतिदेशवाक्यं दर्शितम्। अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः॥ (१०)

शब्दप्रमाणं यथा—

'विवृण्वता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥'

अत्र शिवः परमेष्ठिनोऽपि कारणमित्यत्र 'यो ब्रह्माणं विदधाति पूर्व'मिति श्रुतिरूपं शब्दप्रमाणमुपन्यस्तम्। एवं स्मृतिपुराणागमलौकिकवाक्यरूपाण्यपि शब्दप्रमाणान्युदाहरणीयानि।

तत्र स्मृतिर्यथा—

'बलात्कुरुत? पापानि सन्तु तान्यकृतानि वः।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥'

पूर्वं श्रुतिरभिमतार्थे प्रमाणत्वेनोपन्यस्ता। इह तु स्मृतिरनभिमता-

---

(३) उपमानालङ्कारमुदाहरति—**तां रोहिणीमिति**। अत्र शकटसदृशाकारताशालितारकाविन्यासो रोहिणीपदवाच्य इत्यतिदेशवाक्योपन्यासेन तद्वाक्यार्थज्ञानादयं तारकाविशेषो रोहिणीपदवाच्य इत्युपमितिप्रतीतेरुपमानालङ्कार इत्यर्थः। उदाहरणान्तरमाह—**अत्र मन्मथमिति**। पूर्वोदाहरणादत्र यो विशेषस्तमाह—**अत्रेति**। 'मन्मथमिवे'त्यादिभिर्वाक्यैर्मन्मथतुल्यसौन्दर्यशालित्वदानवारितुल्यदिव्यतेजस्वित्वहिमाद्रितुल्यधैर्यवत्त्वस्यातिदेशवाक्यार्थभूतसादृश्यात्मकस्य प्रतिपादनाद्वेङ्कटपतिशब्दवाच्यं 'वेद्मी'ति वेङ्कटपतिपदशक्तिग्रहरूपोपमितेः फलस्य प्रतिपादनेन फलसहितोपमाननिबन्धनेन पूर्वस्माच्चमत्कार इति भावः ॥१०॥

(४) शब्दप्रमाणस्य श्रुतिस्मृतिपुराणादिभेदेन बहुविधतया यथासम्भवमुदाहरति—**शब्देति**। 'यमामनन्ती'त्यनेन विधातुरपि कारणत्वेन वेदाः शिवमामनन्तीति श्रुतिरूपशब्दप्रमाणोदाहरणमित्याह—**अत्रेति**। स्मृतिमुदाहरति—**बलादिति**। अत्र लक्षणं योजयति—**इह त्विति**। पापकर्तव्यतारूपानभिमतार्थे पापकर्तव्यतादूषणाभिप्रायेण सर्वा-

थ तद्दूषणपरेण प्रमाणतया नीतेति भेदः ।

आचारात्मतुष्ट्योरपि मीमांसकोक्तधर्मप्रमाणयोर्वेदशब्दानुमापकतया शब्दप्रमाण एवान्तर्भावः । तत्राचारप्रमाणं यथा—

'महाजनाचारपरंपरेदृशी स्वनाम नामाददते न साधवः ।
अतोऽभिधातुं न तदुत्सहे पुनर्जनः किलाचारमुचं विगायति ॥'

आत्मतुष्टिप्रमाणं यथा—

'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥'

अत्र दुष्यन्तेनात्मतुष्ट्या शकुन्तलापरिग्रहस्य धर्मत्वं श्रुत्यनुमतमनुमीयते।

एवं श्रुतिलिङ्गादिकमपि मीमांसकोक्तं प्रमाणं सम्भवदिहोदाहर्तव्यम् । तत्र श्रुतिर्यथा—

'त्वं हि नाम्नैव वरदो नाधत्से वरमुद्रिकाम् ।
न हि श्रुतिप्रसिद्धार्थे लिङ्गमाद्रियते बुधैः ॥'

अत्र करिगिरीश्वरस्य 'वरद' इत्यभिधानश्रुत्या सर्वाभिलषितदातृत्वं समर्थितम् । लिङ्गं यथा—

'विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः ॥'

---

न् बलकृतानिति मनुस्मृतिः प्रमाणतयोपन्यस्तेति भावः । आचारात्मतुष्ट्योः 'आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।' इति प्रतिपादितदिशा मीमांसकोक्तधर्मप्रमाणयोः परम्परया वैदिकशब्दानुमापकतया न तत्पार्थक्यमित्यभिप्रेत्य ते अपि क्रमेणोदाहरति—**आचारेति**। **महाजेनेति** । 'मयाङ्ग! पृष्टः कुलनामनी भवानमू विमुच्यैव किमन्यदुक्तवान् ।' इति पूर्वत्र दमयन्तीविवक्षितस्य स्वनामधेयस्य स्वेनाभिधानं महाजनाचारविरुद्धमिति पुनर्दमयन्तीं प्रति ब्रुवता नलेनाचारस्य स्वनामानभिधानप्रमाणतयोपन्यासादाचारप्रमाणालङ्कार इति भावः। आत्मतुष्टिमुदाहरति—**असंशयमिति**। अत्रात्मतुष्टिमुपपादयति—**अत्र दुष्यन्तेनेति** । एवं मीमांसकाभिमतश्रुतिलिङ्गादिकमपि प्रमाणमुदाहार्यमित्यभिप्रेत्य श्रुतिमुदाहरति—**तत्र श्रुतिरिति** । **अत्रेति** । अत्रोदाहरणे स्वकूटस्थपक्षस्थलाचार्यकृतवरदराजवसन्तोत्सवाभिधकाव्यान्तर्गते भगवतो वरदराजस्य वरमुद्रापरिग्रहे,वरद इति तदभिधारूपश्रुतिप्रमाणात् सर्वाभिलषितदातृत्वसिद्ध्यानादरकथनात् श्रुतिप्रमाणोदाहरणमिति भावः । लिङ्गमुदाहरति—**विदितं व इति** । स्पष्टम् । ननु, लिङ्गस्य सामर्थ्यात्मकस्य श-

अत्र शिवस्य श्रुतिप्रसिद्धसर्वोपकारकपृथिव्याद्यष्टमूर्तिपरिग्रहलिङ्गेन तत्प्रवृत्तीनां लोकानुग्रहैकप्रयोजनत्वं समर्थितम् । लिङ्गस्यापि मूलभूतवेदानुमापकतया वैदिकशब्दप्रमाण एवान्तर्भावः । एवं लौकिकलिङ्गानामपि लौकिकशब्दोन्नायकतया लौकिकशब्दप्रमाण एवान्तर्भावः । अतः

'लोलद्भ्रूलतया विपक्षाद्दिगुपन्यासे विधूतं शिर-
स्तद्वृत्तान्तपरीक्षणेऽकृतनमस्कारो विलक्षः स्थितः ।
ईषत्ताम्रकपोलकान्तिनि मुखे दृष्ट्या नतः पादयो-
रुत्सृष्टो गुरुसन्निधावपि विधिर्द्वाभ्यां न कालोचितः ॥'

इत्यादिषु चेष्टारूपं प्रमाणान्तरं नाशङ्कनीयम् ।

क्वचिच्छब्दप्रमाणकल्पकतया चमत्कारो यथा—

'किमसुभिर्ग्लपितैर्जड? मन्यसे मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधस्स्मरः ॥'

अत्र म्रियमाणानां मनश्चन्द्रं प्रविशतीत्येतदर्थिकायाः श्रुतेः नलमुखचन्द्रविषयत्वे कल्पिते तथा व्याख्यातृस्मरवाक्यं प्रमाणतयोपन्यस्तम् ॥ (११)

अर्थापत्तिर्यथा—

'निर्णेतुं शक्यमस्तीति मध्यं तव नितंबिनी ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥'

यथा वा—

'व्यक्तं बलीयान्यदि हेतुरागमादपूरयत्सा जलधिं न जान्हवी ।
गङ्गौघनिर्भर्त्सितशम्भुकन्धरासवर्णमर्णः कथमन्यथा स्यात् ॥' (१२)

---

ब्दप्रमाणबहिर्भूततया शब्दप्रमाणप्रस्तावे कथमुदाहरणमित्यत आह—**लिंगस्यापीति** । स्वतस्तस्य प्रमाणत्वाभावेन वेदानुमापकतयैव प्रमाणत्वाच्छब्द एवान्तर्भाव इति भावः । एवैव रीतिर्लौकिकलिङ्गानामपीत्याह—**एवमिति** । शब्दोन्नायकतया प्रमाणभूतानां चेष्टादीनामपि न प्रमाणान्तरत्वमित्याभिप्रेत्य चेष्टाप्रमाणमुदाहरति—**अत इति** । अत्र शिरोविधूननादिचेष्टानिबन्धनान् चेष्टालङ्कार इति भावः । क्वचित् किञ्चिदर्थमूलप्रमाणतया शब्दकल्पनाप्रयुक्तश्चमत्कार इत्याह—**किमसुभिरिति** ॥ ११ ॥

(५) अर्थापत्तिप्रमाणमुदाहरति—**निर्णेतुमिति** । पयोधरभरस्थित्यन्यथानुपपत्त्या मध्यास्तित्वनिर्णयनिबन्धनादर्थापत्यलङ्कारोऽत्रेति भावः ॥ १२ ॥

अनुपलब्धिर्यथा—

'स्फुटमसदवलग्नं तन्वि! निश्चिन्वते ते
तदनुपलभमानास्तर्कयन्तोऽपि लोकाः ।
कुचगिरिवरयुग्मं यद्विनाधारमास्ते
तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥' (१३)

संभवो यथा—

'अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम् ।
किं तु त्वदग्रे शरणागतानां पराभवो नाथ! न तेऽनुरूपः ॥'

यथा वा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'

यथा वा—

'भ्रातः? पान्थ? कुतो भवान्नगरतो वार्ता न वा विद्यते
बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति ।
सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता
विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न सम्भाव्यते ॥'

अत्राद्योदाहरणे 'अभूतपूर्वं मम भावि किं वे'ति सम्भवप्रमाणसि-

---

(६) अनुपलब्धिप्रमाणमुदाहरति—**स्फुटमिति** । अत्र यदि मध्यः स्यादुपलभ्येतेति तत्सनाथया अनुपलब्ध्या मध्यासत्त्वनिश्चयादनुपलब्धिप्रमाणमिति भावः ॥ १३ ॥

(७) सम्भवमुदाहरति—**अभूतेति** । अत्र सकलभाविदुःखसहिष्णुतायाः 'सहजं हि दुःख'मिति वाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमपि द्रष्टव्यम् । उदाहरणान्तरमाह—**ये नामेति** । अत्र स्वावज्ञाकर्तॄन् प्रति नायं मदीयो यत्न इति प्रतिषेधः शाब्दः । उत्पत्स्यतेऽस्तीत्यत्र मम समानधर्मा कोऽपि उत्पत्स्यते अथ वास्ति तं प्रत्येष यत्न इत्यन्यत्र स्थापनस्यार्थिकतया परिसंख्यालङ्कारः । उत्पत्स्यतेऽस्तीत्यनयोः कालानन्त्यपृथ्वीविस्ताराभ्यां समर्थनात् पदार्थहेतुकं काव्यलिङ्गं च । उदाहरणान्तरमाह—**भ्रातरिति** । अत्र परस्परप्रश्नोत्तरमालानिबन्धनात्मा प्रश्नोत्तरिकालङ्कारः । उदाहरणत्रयेऽपि क्रमेण विशेषमाह—**अत्राद्योदाहरण इति** । तत्र सम्भवप्रमाणसिद्धाननुभूतपूर्वानागतदुःखसद्भावसिद्धवत्कारोक्त्या सम्भवप्रमाणसिद्धार्थः प्रदर्शितः । 'कालानन्त्यादिक'मित्यादिपदे-

द्वार्थो दर्शितः। द्वितीयोदाहरणे सम्भवोपपादकं कालानन्त्यादिकमपि दर्शितम्। तृतीयोदाहरणे तु सम्भवोऽपि कण्ठोक्त इति भेदः ॥(१४)

ऐतिह्यं यथा—

'कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥'

अत्र 'लौकिकी गाथेय'मित्यनिर्दिष्टप्रवक्तृकप्रवादपारम्पर्यरूपता दर्शिता॥

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे रसवदादिपञ्चदशालङ्कारप्रकरणम् ॥(१५)

अथ संसृष्टिसङ्करौ—

अथैतेषामलङ्काराणां यथासम्भवं क्वचिन्मेलने लौकिकालङ्काराणां मेलन इव चारुत्वातिशयोपलम्भान्नरसिंहन्यायेन पृथगलङ्कारावस्थितौ तन्निर्णयः क्रियते। तत्र तिलतण्डुलन्यायेन स्फुटावगम्यभेदालङ्कारमेलने संसृष्टिः। क्षीरनीरन्यायेनास्फुटभेदालङ्कारमेलने सङ्करः।

---

न महीविस्तारस्य ग्रहणम्। **कण्ठोक्त इति**। 'किं किं न सम्भाव्यत' इति शब्देन प्रतिपादित इत्यर्थः ॥ १४॥ (८) ऐतिह्यमुदाहरति—**कल्याणीति** ॥ १५॥

अत्रेदमवधेयम्। अष्टावेते प्रमाणालङ्काराः यद्यपि प्राचीनैर्न प्रदर्शिताः। तथापि अनुमानालङ्कारस्य सर्वैर्लक्षितत्वात् प्रत्यक्षाद्यलङ्कारा अपि लक्षितप्राया एव। न हि प्रत्यक्षादीनामपि प्रमाणतायामनुमानतो विशेषोऽस्ति। न वा विच्छित्तिसदसद्भावकृतं वैलक्षण्यम्। अतोऽनुमालङ्कारकथनं प्राचामितरप्रमाणोपलक्षणमित्यभिप्रेत्य ग्रन्थकारः सर्वाण्यपि प्रमाणानि प्रदर्शयन् उक्तानामलङ्काराणामनेकेषामेकत्र स्थितौ किं तत्तदलङ्कारभाव एव, आहोस्वित् नरसिंहन्यायेन समवायकृतमलङ्कारान्तरत्वमिति। तत्र केचिदाहुः। नालङ्कान्तरं युक्तमभ्युपगन्तुम्। प्रातिस्विकतत्तदलङ्कारत्वातिरेकेण संज्ञान्तरस्य चमत्कारविशेषस्य चानुपलम्भादिति। अन्ये तु, अलङ्कारान्तरमेव नरसिंहन्यायेन। न च संज्ञान्तरचमत्कारवैलक्षण्ययोरभावः। असिद्धेः। संसृष्टिसङ्करसंज्ञयोर्लौकिकालङ्काराणां कनकमुक्ताप्रवालादीनां परस्परविलक्षणशोभाधायकानां मेलनकृतशोभातिशयवदिहापि मेलने चमत्कारवैलक्षण्यस्य च सत्वात् सहृदयहृदयस्यैव प्रमाणत्वात् नरसिंहाकारमेलनं अलङ्कारान्तरमेवेत्यभिप्रेत्य पीठिकामारचयति—**अथैतेषामिति**। संसृष्टिसङ्कराभ्यां मेलनस्य द्वैविध्यमभिप्रेत्य तयोर्लक्षणमाह— **तत्रेति**। तिलतण्डुलन्यायमेव स्पष्टयति—**स्फुटेति**। ततश्च तिलतण्डुलयोर्मेलनेऽपि भेदो यथावगम्यते तद्वल्लक्षितभेदालङ्कारमेलनेन संसृष्टिरलङ्कारः। स्फुटभेदशून्यालङ्कारमेलनेन नीरक्षीरन्यायेन सङ्करोऽलङ्कार इति भावः। संसृष्टेर-

स चाङ्गाङ्गिभावेन समप्राधान्येन सन्देहेन एकवाचकानुप्रवेशेन च चतुर्विधः । एवं नृसिंहाकाराः पञ्चालङ्काराः । तत्र संसृष्टिर्यथा—

'वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखलाकलकलोलकलोऽलदशान्यया ॥'

अत्र शब्दालङ्कारयोरनुप्रासयमकयोस्संसृष्टिः ।

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥'

अत्रोत्प्रेक्षयोरुपमायाश्चेत्यर्थालङ्काराणां संसृष्टिः ।

'आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥'

अत्र शब्दार्थालङ्कारयोरनुप्रासोपमयोस्संसृष्टिः । (१)

---

वान्तरभेदाभावात्तामुपेक्ष्य सङ्करं विभजते—**स चेति** । यद्यपि संसृष्टेरपि सजातीयसंसृष्टिर्विजातीयसंसृष्टिरित्यवान्तरभेदोऽस्ति । तथापि मेलने निबन्धनविच्छित्तिव्यतिरेकेण विच्छित्त्यन्तराभावान्न तद्भेदादरः । सङ्करभेदेषु अङ्गाङ्गिभावादिकृतं विच्छित्तिवैलक्षण्यमस्तीति ते प्रागुदाहृताः । सजातीयसंसृष्टिमुदाहरति—**तत्र संसृष्टिरिति** । सजातीयसंसृष्टिरित्यर्थः । **अनुप्रासेति** । वृत्त्यनुप्रासेत्यर्थः । अर्थालङ्कारसंसृष्टिमुदाहरति—**लिम्पतीति** । **अनुप्रासोपमयोरिति** । छेकानुप्रासोपमयोरित्यर्थः । न च 'पादाम्बुज'मित्यत्र पाद एवाम्बुजमिति रूपकसमासस्यापि सम्भवात् रूपकमेवात्र किं न स्यादिति वाच्यम् । मञ्जीरशिञ्जितमनोहरत्वस्य रूपकबाधकत्वात् । रूपकसमासे 'पादाम्बुज'मित्यत्र उत्तरपदार्थस्याम्बुजस्य प्राधान्यादुक्तविशेषणस्य तत्रानन्वयात् । अतः पादोऽम्बुजमिवेति उपमितसमासस्यैवाश्रयणीयतया उपमैवेति तत्संसृष्टिरेव । एतेषु प्रदर्शितेषु संसृष्टिभेदेषु अलङ्काराणां मिलितानामन्योन्यवार्तानभिज्ञतया एकत्रावस्थितिमात्रमित्यतोऽपि सङ्करात्संसृष्टेर्भेद इति मम्मटादयः । तत्र । मैलने ह्यलङ्काराणां तत्तदलङ्कारनिबन्धनचमत्कारविलक्षणचमत्कारसद्भावादलङ्कारान्तरत्वमिति सिद्धान्तः । न च तत्रालङ्काराणां नैरपेक्ष्यं सम्भवति । सापेक्षाणामेव तादृशचमत्कारप्रयोजकत्वात् । प्रातिस्विकालङ्कारनिबन्धनचमत्कारे नैरपेक्ष्येण न मेलनस्यालङ्कारान्तरत्वप्रसङ्गः । अतः प्रागुक्तरीत्या तिलतण्डुलनीरक्षीरन्यायाभ्यामेव तयोर्भेदः । अत एव तिलतण्डुलयोः प्रातिस्विकरसापेक्षया विलक्षणे रसे मेलननिबन्धने सापेक्षयोरेव प्रयोजकत्वमितीहापि तथैव युक्तम् । इति ॥ (१)

अङ्गाङ्गिभावेन सङ्करो यथा—

"जलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकंपितानाम्।
शशाङ्कसिह्मेन तमोगजानां लूनाकृतीनामिव गात्रखण्डाः ॥"

अत्र 'शशाङ्कसिह्मेने'ति 'तमोगजाना'मिति च रूपकम्। यद्यप्यत्र शशाङ्क एव सिह्मः तमांस्येव गजा इति मयूरव्यंसकादिसमासाश्रयणेन रूपकवत् शशाङ्कस्सिह्म इव तमांसि गजा इवेत्युपमितसमासाश्रयणेनोपमाऽपि वक्तुं शक्या। तथाऽपि 'लूनाकृतीना'मिति विशेषणानुगुण्याद्रूपकसिद्धिः। तस्य हि विशेषणस्य प्रधानेन सहान्वयेन भाव्यं, न तु गुणेन। 'गुणानां च परार्थत्वादसम्बन्धस्समत्वात्स्या'दिति न्यायात्। उपमितसमासाश्रयणे तस्य पूर्वपदार्थप्रधानत्वात् शशाङ्कस्य तमसां च प्राधान्यं भवेत्। तत्र च न विशेषणस्य मुख्यार्थान्वयस्वारस्यमस्ति।

---

**अत्र शशांकेति**। शशाङ्क एव सिंहः तमांस्येव गजा इति रूपकसमासेन रूपकमित्यर्थः। ननु, साधारणधर्माप्रयोगेण उपमितसमासाश्रयणेन उपमाया अपि सम्भवान्न रूपकमिति परिशेष इति शङ्कते—**यद्यपीति**। **विशेषणानुगुण्यादिति**। विशेषणान्वयस्वारस्यादित्यर्थः। एतदेवोपपादयति—**तस्य हीति**। लूनाकृतित्वविशेषणस्य प्रधानेनान्वयः। न तु गुणान्वयः। न्यायविरोधादित्यभिप्रेत्य न्यायप्रतिपादकपारमर्षं सूत्रमुदाहरति—**गुणानामिति**। उपवीयत इति दर्शपूर्णमासप्रकरणश्रुतमुपवीतं सामिधेन्यवान्तरप्रकरणस्य उपवीतविध्यनन्तरमपि 'अन्तरानूच्यं सदेवत्वाये'ति सामिधेन्यनुवादेन गुणविधानादनुवृत्त्यवगतेः तेन महाप्रकरणादपि बलीयसा सामिधेन्यङ्गत्वमिति पूर्वपक्षं प्राप्य सामिधेन्यनन्विताभिर्निविद्भिस्तासां प्रकरणस्य विच्छिन्नतया उपवीतविधिपर्यंतमननुवृत्ते'रन्तरानूच्य'मित्यादिषु अनुवचनमात्रस्यानुवाक्यादिसाधारणस्य सामिधेन्यनुवचनमात्रानुपस्थापकतया सामिधनीप्रकरणाननुवृत्तेर्नोपवीतस्य सामिधेन्यङ्गत्वम्। यदि तु परं निविदां सामिधेन्यङ्गता भवेत्तदा तासां प्रकरणाविच्छेदकतया तदङ्गत्वं भवेन्न तु तदस्ति। सामिधेनीनामिव निविदामपि अग्निसमिन्धनार्थत्वेन गुणत्वाविशेषेण "गुणानां" परस्परसम्बन्धात्। अतस्ताभिः प्रकरणविच्छेदान्महाप्रकरणेनोपवीतं दर्शपूर्णमासाङ्गमिति तृतीये श्रुतिवादे भट्टपादैः सिद्धान्तितम्। तेन न्यायेन गुणानां परस्परसम्बन्धो नेत्यर्थः। ननु, उपमितसमासाश्रयणे कथं विशेषणस्य गुणान्वयः प्रसज्यत इत्यत आह—**उपमितेति**। ननु, तमसां प्राधान्ये तत्र लूनाकृतित्वविशेषणस्यान्वयसम्भवादुपमैवोपमितसमासाश्रयणनिबन्धना युक्तेत्यत आह—**तत्र चेति**। लूनाकृतिपदलक्ष्यतमस्स्वरूपनाशरूपलवनकर्तृत्वस्य शशाङ्के अन्वय-

स्वरूपनाशरूपोपचरिताकृतिलवनकर्तृत्वान्वयसम्भवेऽपि मुख्यार्थान्वयस्वारस्यमेवादरणीयम् । अतः **स्वरूपनाशक्रोडीकरणप्रवृत्तया** लक्षणामूलातिशयोक्त्या रूपकसिद्धिः । तच्च रूपकमुत्प्रेक्षाया अङ्गम् । तदुत्थापकत्वाद्रूपकाभावे हि छाया लूनगात्रखण्डा इवावेपंतेत्येतावदुक्तावुपमैव सिद्ध्येत् । वेपनादिसाधर्म्यान्न च्छायानां सद्यःकृत्तगात्रखण्डतादात्म्यसम्भावनारूपोत्प्रेक्षा । ननु, शशाङ्केन लूनाकृतीनां तमसां गात्रखण्डा इवावेपंतेत्येतावदुक्तावपि सिद्ध्यत्युत्प्रेक्षा । तादात्म्यसम्भावनोपयुक्तलूनाकृतित्वरूपाधिकविशेषणोपादानात् । सत्यम् । तथोक्तावाकृतिलवनादिधर्मरूपकार्यसमारोपनिमित्ता शशाङ्कतमसोर्हन्तृहन्तव्यचेतनवृत्तान्तसमारो-

---

सम्भवेऽपि तन्मुख्यार्थाकृतिलवनकर्तृत्वान्वयस्वारस्याभावान्नोपमितसमासो युक्त इत्यर्थः । ननु, तथापि लक्ष्यार्थान्वयस्य शशाङ्के सम्भवे मुख्यार्थान्वय एवानुरोद्धव्य इत्यत्र किं विनिगमकमित्यत आह—**स्वरूपनाशेति** । प्रथमोपस्थितमुख्यार्थान्वयस्वारस्यमतिलंघ्य लक्ष्यार्थान्वयस्वारस्यानुरोधस्यायुक्तत्वात् । अत एव प्रायपाठावगतगौणेक्षणान्वयस्य प्रधाने सम्भवेऽपि ईक्षतिमुख्यार्थान्वयस्वारस्याभावात् 'तदैक्षत बहु स्यां प्रजायेये'ति वाक्यगततच्छब्दपरामृष्टं सत् प्रधानं न भवति किं तु ब्रह्मैवेति निर्णीतमुत्तरतन्त्रे 'ईक्षतेर्नाशब्द'मित्यधिकरणे । स्वरूपनाशक्रोडीकारेण स्वरूपनाशोपादानेन लक्षणामूलेति लूनाकृतिमुख्यार्थस्य तमसि बाधात् । नष्टस्वरूपाणामिति नष्टस्वरूपलक्षणया लक्ष्यमुख्ययोरभेदाध्यवसायरूपातिशयोक्तिसिद्धौ तद्बलात् 'शशाङ्कसिंहेन तमोगजाना'मित्यत्र रूपकसिद्धिरिति भावः । **उत्प्रेक्षाया इति** । छायासु लूनाकृतिगजगात्रखण्डतादात्म्यसम्भावनरूपोत्प्रेक्षाया इवशब्दवाच्याया इत्यर्थः । अङ्गत्वमेवोपपादयति—**रूपकाभावे हीति**। इवशब्देन सादृश्याभिधानात् लूनाकृतिगात्रखण्डोपमैव लेपनादिसाधारणधर्मवशात् सिद्ध्येत् । न तु तादात्म्यसम्भावनरूपोत्प्रेक्षेति भावः । ननु, रूपकाभावेऽपि शशाङ्कलूनाकृतीनां तमसां गात्रखण्डा इवेत्युक्तावपि उत्प्रेक्षा सम्भवेदेव । 'बालेन्दुवक्राणी'त्यत्र पलाशमुकुलेषु इवशब्दोपादानेन नखक्षतौपम्यसम्भवेऽपि सद्यस्समागतवसन्तनायककृतवनस्थलीसम्बान्धित्वरूपतादात्म्यसम्भावनोपयुक्तविशेषणबलान्नखक्षततादात्म्योत्प्रेक्षणवादित्यभिप्रेत्य शङ्कते—**नन्विति** । आकृतिलवनादिसमासोक्तौ हि विशेषणसाधारण्यनिबन्धनायां धर्मसमारोपकार्यसमारोपयोः पृथगेव प्रयोजकत्वं तथैव प्रागुदाहृतेः । तथापि लवनादिरूपधर्मस्य हन्तृपुरुषकार्यताप्यस्तीति धर्मरूपकार्येत्युक्तम् । ततश्च कार्यसमारोपोत्थापितहन्तृहन्तव्यवृत्तान्तसमारोपरूपसमासोक्तिः समुत्तिष्ठतीति तदुत्थापितोत्प्रेक्षेति पर्यवस्यति । शशाङ्कसिंहेनेत्युक्तौ रूपकमिति अङ्गभूतयोरलङ्कारयोर्भेदेऽपि तदुत्थापितोत्प्रेक्षैव नोपमेति भावः । उपसंह-

परूपा समासोक्तिरपेक्षणीया । एवमुक्तौ रूपकमिति विशेषः । एवं चात्रातिशयोक्तिरूपकोत्प्रेक्षाणामङ्गाङ्गिभावेन सङ्करः ॥ (२)

समप्राधान्यसङ्करो यथा—

'अवतु नस्सवितुस्तुरगावलिस्समतिलंघिततुङ्गपयोधरा ।
स्फुरितमध्यगतारुणनायका मरकतैकलतेव नभःश्रियः ॥'

अत्र पयोधरादिशब्दश्लेषमूलातिशयोक्त्याङ्गभूतयोत्थाप्यमानैव सवितृतुरङ्गावल्यां गगनलक्ष्मीमरकतैकावलीतादात्म्योत्प्रेक्षा नभोलक्ष्म्यां नायिकाव्यवहारसपारोपरूपसमासोक्तिगर्भैवोत्थाप्यते । पयोधरशब्दश्लेषस्योभयोपकारकत्वात् । तत उत्प्रेक्षासमासोक्त्योरेकः कालः । परस्परापेक्षया चारुत्वसमुन्मेषश्चोभयोस्तुल्य इति विनिगमनाविरहात्समप्राधान्यम् ।

यथा वा—

'अंगुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

अत्रांगुलीभिरिवेति वाक्योक्तोपमया तत्प्रायपाठान्मुख्यकुड्मलीकरणालि-

---

रति—**एवमिति** । **अतिशयोक्तीति** । लक्षणामूलाभेदाध्यवसायरूपातिशयोक्तीत्यर्थः

समप्राधान्यसङ्करमुदाहरति—**अवतु न इति** । पयोधरादिश्लेषे हि एकवृन्तगतफलद्वयन्यायेन श्लिष्टसमर्पितयोरेकशब्दोपादाननिबन्धनाभेदाध्यवसायरूपयातिशयोक्त्या सवितृतुरगावल्यां मरतकैकावलीतादात्म्योत्प्रेक्षायाः श्लिष्टविशेषणनिबन्धनसमासोक्तेश्च युगपदुत्थानादुभयोः प्राधान्यमिति भावः । नन्वत्र समासोक्तेरपि उत्प्रेक्षाङ्गत्वमेव यतोऽनारोपितनायिकाव्यवहारायां नभोलक्ष्म्यां निरालम्बनैकावलीतादात्म्यासम्भावनस्य न चमत्काराधायकता । अतोऽत्रातिशयोक्त्युत्प्रेक्षयोरिव समासोक्त्युत्प्रेक्षयोरपि पौर्वापर्यस्य वक्तव्यतया अङ्गाङ्गिभाव एव युक्तः । न समप्राधान्यमित्यस्वरसादुदाहरणान्तरमाह—**अंगुलीभिरिवेति** । एतदेवोपपादयति—**अत्रांगुलीभिरिति** । यद्यपि नेयमुपमा वाक्योक्ता । 'इवेनानित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चे'ति कात्यायनवचनेनांगुलीभिरिवेत्यस्य एकपदत्वात् । तथापि अंगुलीभिरिव मरीचिभिरिति मरीचिपदसमभिव्याहारे सत्येवोपमानिष्पत्तेः वाक्योक्तेयमुपमेति तात्पर्यम् । ननु, 'कुड्मलीकृतसरोजलोचन'मित्यत्र सरोजमेव लोचनमिति रूपकसमासेन रूपकस्यैवोत्प्रेक्षाङ्गत्वमिति वक्तुं शक्यमित्यत आह—**तत्प्रायपाठादिति** । वाक्योक्तोपमाप्रायपाठात् कुड्मलीकृतसमासेऽपि उपमैवाभ्युपगन्तव्येति भावः । ननु, रूपकसमाससाधकत्वे प्रायपाठोऽकिञ्चित्कर इत्यत आह—**मुख्येति**।

ङ्गानुगुण्याच्च उपमितसमासाश्रयणेन लब्धया--सरोजलोचनमिति समासोक्तोपमया चांगभूतयोत्थाप्यमानैव शशिकर्तृकनिशामुखचुम्बनोत्प्रेक्षा निशाशशिनोर्दांपत्यव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते । उपमयोरुभयत्रोत्थापकत्वाविशेषात्, समासोक्तिगर्भतां विना चुम्बनोत्प्रेक्षाया निरालम्बनत्वाच्च । ततश्चात्राप्युत्प्रेक्षासमासोक्त्योरेककालयोस्समप्राधान्यम्। यद्यप्यत्रोपमाभ्यां शशिनिशागतावेव धर्मौ समर्थ्येते । न तु शशिनायकयोर्निशानायिकयोश्च साधारणौ धर्मौ । साधारणधर्मसमर्पणं चोत्प्रेक्षासमासोक्त्योरपेक्षितम् । उत्प्रेक्षायाः प्रकृताप्रकृतसाधारणगुणक्रियारूपनिमित्तसापेक्षत्वात्समासोक्तेर्विशेषणसाम्यमूलकत्वाच्च । तथापि वाक्योक्तोपमायामिवकारस्य मरीचिभिरिवेत्यन्वयान्तरमभ्युपगम्यान्वयभेदलब्धस्य प्रकृताप्रकृतयोरेकैकविषयस्यार्थद्वयस्य समासोक्तोपमायां सरोजसदृशं-लोचनमिति समासान्तरमभ्युपगम्य समासभेदलब्धार्थद्वयस्य चाभेदाध्यवसायेन साधारण्यं सम्पाद्य च तयोरुत्प्रेक्षासमासोक्त्योरङ्गता निर्वाह्या ।

कुड्मलपदमुख्यार्थान्वयसामर्थ्यरूपयोग्यतायाः सरोजधर्मतया रूपकसमासे उत्तरपदार्थप्राधान्येन लोचने अननुगुणत्वात् गौणमीलनान्वयसामर्थ्यस्य तत्र सम्भवेऽपि मुख्यार्थान्वयस्वारस्यस्यैवादरणीयतायाः प्रागुक्ततया उपमितसमासलब्धप्रधानभावे सरोजे तदन्वयेन प्रायपाठानुगृहीतेन तत्राप्युपमैव युक्तेति भावः । एवमाभ्यामुपमाभ्यां शशिकर्तृकनिशामुखचुम्बनोत्प्रेक्षायाः निशाशशिनोः दाम्पत्योचितव्यवहारसमारोपलक्षणसमासोक्तेश्च तुल्यतयोत्थानात् समप्राधान्यमिति भावः । ननु, वाक्यसमासलब्धाभ्यामुपमाभ्यामुत्प्रेक्षासमासोक्त्योरुत्थितिर्न सम्भवति । तत्प्रयोजकसाधारणधर्मसम्बन्धस्यासम्भवात् । उपमाभ्यां प्राधान्येन पूर्वपदार्थान्विताभ्यां शशिनिशागतयोरेव धर्मयोरारोपात् शशिनायकयोर्निशानायिकयोश्च न[1] साधारणधर्मारोपः । उपमयोः प्रकृताप्रकृतसाधारण्याभावात् । अतोऽत्रोत्प्रेक्षासमासोक्त्योरुपमाभ्यामुत्थितिरयुक्तेति शङ्कते—**यद्यप्यत्रेति** । **साधारणधर्मौति** । प्रकृताप्रकृतशशिनायकयोरंगुलिमरीचिसरोजलोचनादीनां बिम्बप्रतिबिम्बभावेन साधारण्यमिह न सम्भवति । तेषामुपमानुप्रविष्टतया व्यवस्थितोपमानोपमेयभावेन निर्देशेन साधारण्यासम्भवादित्यर्थः । **अन्वयभेदेति**। 'मारस्य हन्तुर्मनसा वृणीते योगीव पादौ शरणं वियोगी ।' इत्यत्रेवान्वयभेदलब्धार्थद्वयाभेदाध्यवसायस्य, 'तया विवृद्धाननचन्द्रकान्त्ये'त्यादाविव समासभेदाश्रयणनिबन्धनार्थद्वयभेदाध्यवसायस्य च साधारण्यप्रयोजकतया अंगुलिमरीचिसरोजलोचनादीनामभेदाध्यवसायेन सम्पादितं साधारण्यमादायोत्प्रेक्षासमासोक्त्योरुत्थि-

1 'शशिनायकनिशानायिकयोः' इति ग.ङ. पाठः ।

यद्वा—इह प्रकृतकोटिगतानां मरीचितिमिरसरोजानामप्रकृतकोटिगतानामांगुलिकेशसञ्चयलोचनानां च तनुदीर्धारुणत्वनीलनीरन्ध्रत्वकान्तिमत्त्वादिना सदृशानां प्रातिस्विकरूपेण भेदवदनुगतसादृश्यप्रयोजकरूपेणाभेदोऽप्यस्ति । स चात्र विवक्षित एव । भेदाभेदोभयप्रधानोपमेत्यालङ्कारिकसिद्धान्तात् । तत्र च व्याजकांडानिष्कर्षन्यायेनाभेदगर्भतांशोपजीवनेन साधारण्यं संपाद्य प्रधानभूतोत्प्रेक्षासमासोक्त्यंगता निर्वाह्या । न हि प्रकाशनतमोऽपनयनशाक्तिमतः सौरतेजसः शीतापनयनशक्तिमात्रेण शीतालूपयोगिता न दृष्टा । एवमनभ्युपगमे च—

'पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुस्सनिर्झरोद्गार इवाद्रिराजः ॥'

इत्याद्युपमापि न निर्वहेत् । न ह्यत्राद्रिराजपाण्ड्ययोरुपमानोपमेययोरनुगतस्साधारणधर्मो निर्दिष्टः । एकत्र बालातपनिर्झरावन्यत्र हरिचन्दनहाराविति धर्मभेदात् । तस्मात्तत्र बालातपहरिचन्दनयोर्निर्झरहारयोश्च सदृशयोरभेदांशोपजीवनमेव गतिः । यथा वा—

---

तिः सम्भवतीति भावः । ननु, अन्वयसमासभेदलब्धार्थद्वयाभेदाध्यवसायाङ्गीकारे लोचनत्वारोपस्य मरीचिष्वंगुलित्वारोपस्य च सिद्ध्या एकदेशविवर्तिरूपकन्यायेन नायिकानायकत्वारोप एव सिद्ध्येन्न तु नायिकानायकवृत्तान्तसमारोपरूपसमासोक्तिः । समासभेदाश्रयणकृताभेदाध्यवसायमूलविशेषणसाधारण्यमादाय समासोक्त्यसम्भवस्य समासोक्तिप्रकरणे अस्माभिर्व्यवस्थापितत्वादित्यस्वरसादाह—**यद्वेति** । यथाश्रुतान्वयसमासाभ्युपगमेऽपि प्रकृताप्रकृतकोटिगतानां धर्माणां तत्तदसाधारणरूपेण भेदेऽप्यनुगतकान्तिमत्त्वादिरूपेणाभेदस्यापि सर्वसम्प्रतिपन्नतया तदंशमादाय विशेषणसाधारण्यसम्भवेन उत्प्रेक्षासमासोक्त्योरुत्थानं सम्भवतीति भावः । ननु, उपमायां भेदाभेदयोः प्राधान्यस्य तुल्यतया न भेदांशपरित्यागेनाभेदांशस्य कार्यक्षमतेत्याशङ्क्याह—**प्रकाशनेति** । उभयशक्तिमतोऽपि सौरतेजसः शीतापनयनशक्तितः शीतार्तजनोपयोगितावत् विधिप्रत्ययस्य बलवदनिष्टाननुबन्धित्वादित्रितयशक्तस्यापि बलवदनिष्टाननुबन्धित्वत्यागेन इष्टसाधनत्वादिशक्तिमात्रेण श्येनादिवाक्यार्थनिर्वाहकत्वस्य तान्त्रिकसम्प्रतिपन्नत्ववच्च भेदाभेदोभयप्राधान्यसत्त्वेऽपि अभेदांशमादाय साधारण्यं सम्भवत्येवेति भावः । एवमनभ्युपगमे बाधकमाह—**एवमिति** । **अभेदांशोपजीवनमेवेति** । न च बिम्बप्रतिबिम्बभावेन साधारण्यमादायात्रोपमानिर्वाहः । बिम्बप्रतिबिम्बभावस्य साधारण्यापादकत्वे सादृश्यमूलकाभेदाध्यवसायस्यैव तन्त्रत्वात् बिम्बप्रतिबिम्बभावघटकसादृश्यप्रयोज्यत्वस्याभेदाध्यवसाये अभेदांशोपजीवनमन्तरेण निर्वाहा-

'पिनष्टीव तरङ्गाग्रैस्समुद्रः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥'

इत्यत्रोत्प्रेक्षयोः कालभेदेऽपि समप्राधान्यम् । अन्योन्यनिरपेक्षवाक्यद्वयोपात्तत्वात् । 'तदादाये'ति फेनछन्दनरूपकमात्रोपजीवनेन पूर्वोत्प्रेक्षानपेक्षणात् । न चैवं 'लिंपतीव तमोऽङ्गानीति' वदुत्प्रेक्षाद्वयस्य संसृष्टिरेवेयमिति वाच्यम् । लौकिकसिद्धपेषणलेपनपौर्वापर्यछायानुकारेणोत्प्रेक्षाद्वयपौर्वापर्येण चारुतातिशयसमुन्मेषतः संसृष्टिवैषम्यात् । तस्मादग्नीदिवदेकफलसाधनतया समप्रधानमिदमुत्प्रेक्षाद्वयम् । एवं समप्रधानसङ्करोऽप्युदाहृतः । (३) सन्देहसङ्करो यथा—

'शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जन्हुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराश्श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥'

दिति भावः। पूर्वोक्तसमप्राधान्योदाहरण इवात्रापि समासोक्तेरुत्प्रेक्षाङ्गतैवेत्यनुशयानं प्रति उदाहरणान्तरमाह—**पिनष्टीवेति**। नन्वत्रोत्प्रेक्षयोः समकालोत्थानाभावान्न समप्राधान्यसम्भव इत्यत आह—**अत्रोत्प्रेक्षयोरिति**। अन्योन्यनिरपेक्षतया वाक्यद्वयेन प्रतिपाद्यमानयोरुत्प्रेक्षयोराग्नेयादिवत् समप्राधान्यं सम्भवतीति भावः। ननु, उत्तरार्धगततच्छब्देन पूर्वार्धसाकाङ्क्षत्वप्रतीतेरुत्प्रेक्षाबोधकवाक्ययोर्न नैरपेक्ष्यमित्यत आह—**तदादायेति**। सत्यं तच्छब्दस्य सन्निहितपरामर्शिनः पूर्वार्धसापेक्षत्वेऽपि नोत्प्रेक्षयोः परस्परसापेक्षता। तच्छब्देन फेनचन्दनपरामर्शेन रूपकमात्रोपजीवनेनैवोत्तरोत्प्रेक्षाप्रवृत्त्या पूर्वोत्प्रेक्षाया अनपेक्षणादिति भावः। **उत्प्रेक्षाद्वयस्येति**। लेपनपेषणक्रियोत्प्रेक्षयोरन्योन्यनैरपेक्ष्येण संसृष्टिवत् इहापि तथैव स्यादिति भावः। **लोकसिद्धेति**। पेषणलेपनयोः पौर्वापर्यस्य लोकसिद्धस्य छायामनुगृह्योत्प्रेक्षाद्वयस्य पौर्वापर्यं कविना निबद्धमिति तन्निबन्धनविच्छित्तिविशेषसद्भावेन संसृष्टितोऽस्य वैलक्षण्यमिति भावः। उपसंहरति—**तस्मादिति**। उत्पत्तौ नैरपेक्ष्येऽपि आग्नेयादीनां फले परस्परसापेक्षतया प्राधान्यवदिहाप्युत्प्रेक्षाद्वयस्य विच्छित्तिविशेषरूपफले अन्योन्यसापेक्षत्वसत्त्वात् प्राधान्यं युक्तमिति भावः। इदं त्विह वक्तव्यम्। संसृष्टेः प्रातिस्विकतत्तदलङ्कारापेक्षया वैचित्र्यविशेषाधायकतया ऽलङ्कारान्तरत्वं सिद्धान्तसम्प्रतिपन्नम्। तच्चान्योन्यनैरपेक्ष्येण प्रतिपन्नानां वैचित्र्यविशेषे सापेक्षतया निर्वाह्यम्। ततश्च समप्राधान्यलक्षणे सङ्करे अभ्युपगम्यमाने संसृष्टेर्विषयापहार एव स्यात्। अत एव संसृष्टयैव समप्राधान्यचारितार्थ्यम्मन्यमानैः प्राचीनैः समप्राधान्यनामा सङ्करभेदो न दर्शित इति प्रदर्शितेषूदाहरणेषु संसृष्टिरेव वक्तव्येति॥ ३ ॥

सन्देहसङ्करमुदाहरति—**शशिनमिति**। अत्रालङ्कारसन्देहमुदाहरति—**इयमिति**॥ पूर्वप्रतिपादिताजवत्स्वरूपधर्मविशिष्टत्वेन रूपेण इन्दुमत्याः परामर्शः, किं वा स्वरूपेण के-

अत्र इयमिति सर्वनाम्ना यद्यजं वृतवतीन्दुमती विशिष्टरूपेण निर्दिश्यते, तदा बिंबप्रतिबिंबभावापन्नधर्मविशिष्टयोस्सदृशयोरैक्यारोपरूपा निदर्शना । यदि तेन सा स्वरूपेणैव निर्दिश्यते, बिंबभूतो धर्मस्तु पूर्वप्रस्तावात् 'समगुणयोगप्रीतय, इति पौरविशेषणाच्चावगम्यते। तदा प्रस्तुते धर्मिणि तद्वृत्तान्तप्रतिबिंबभूताप्रस्तुतवृत्तान्तारोपरूपं ललितमित्यनध्यवसायात्सन्देहः । यथा वा—

'विलीयेन्दुस्साक्षादमृतरसवापी यदि भवे-
त्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् ।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनपरिपीडापरिभवम् ॥'

अत्र यद्येतावत्साधनं सम्पद्येत तदा तापश्शाम्यतीत्यर्थे कविसंरम्भश्चेत्तदैतदुपात्तसिध्यर्थमूह इति सम्भावनालङ्कारः । एतावत्साधनं कदापि न सम्भवत्येव, अतस्तापशान्तिरपि गगनकुसुमकल्पेत्यर्थे कविसंरम्भश्चेदुपात्तमिथ्यात्वसिध्यर्थं मिथ्यार्थान्तरकल्पनारूपा मिथ्याध्यवसितिरित्युभयथा सम्भवात्सन्देहः । एवम्—

वलेन परामर्शः । तत्राद्ये निदर्शनालङ्कारोत्थितिः । अजशशिप्रभृतेर्बिम्बप्रतिबिम्बभावापन्नतया तद्विशिष्टयोः कौमुदीन्दुमत्योरैक्यारोपादित्याह—**बिम्बप्रतिबिम्बेति** । द्वितीय आह—**यदीति** । ननु, स्वरूपेण निर्देशे अजवरणरूपबिम्बधर्मस्य कुतस्तर्हि लाभ इत्यत आह—**बिम्बभूत इति** । **प्रस्तुते धर्मिणीति** । इन्दुमतीरूपे इति शेषः । **तद्वृत्तान्तेति** । अजवरणात्मकेन्दुमतीवृत्तान्तप्रतिबिम्बभूताप्रस्तुतकौमुदीवृत्तान्तस्य शशिसमागमस्यारोपरूपेत्यर्थः । **अनध्यवसायादिति** । अन्यतरनिर्धारणहेत्वभावादिति भावः । नन्वत्र इयमिति सर्वनाम्ना स्वरूपेण इन्दुमतीपरामर्शपक्षे ललितालङ्कार इति कोऽप्यन्तरोपन्यासो न सङ्गच्छते । प्रस्तुतधर्मिणि वर्णनीयवाक्यार्थप्रतिबिम्बभूताप्रस्तुतवृत्तान्तस्य 'तितीर्षुर्दुस्तरं मोहा' दित्यादाविवारोपाभावात् । स्वधर्मविशिष्टकौमुद्या इयमिति निर्दिष्टेन्दुमत्या सह सामानाधिकरण्यादभेदस्यैव प्रतीतेर्विशिष्टरूपकमेव । तेन प्रकृताप्रकृतधर्मिविशेषणयोरैक्यारोप आक्षिप्यते । विशिष्टविधिनैव विशेषणविधेरियांस्तु विशेषः । विशेषणारोपविषयस्य प्रस्तुतवृत्तान्तस्य प्रकरणादिनाऽऽक्षेप इति रूपकनिदर्शनयोरेवात्र सन्देहो न तु ललितनिदर्शनयोरित्यस्वरसादुदाहरणान्तरमाह—**विलीयेन्दुरिति** । अनयोरेव सन्देहे उदाहरणान्तरमाह—

'सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः ।
मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ॥'

इत्यादिष्वपि सम्भावनामिथ्याध्यवसितिसन्देहसङ्करो द्रष्टव्यः ।

'मुखेन गरलं मुञ्चन् मूले वसति चेत्फणी ।
फलसन्दोहगुरुणा तरुणा किं प्रयोजनम् ॥'

अत्र महोरगवृत्तान्ते वर्ण्यमाने राजद्वारारूढखलवृत्तान्तोऽपि प्रतीयते । तत्र किं वस्तुतस्तथाभूतमहोरगवृत्तान्त एव प्रस्तुते अप्रस्तुतः खलवृत्तान्तस्ततः प्रतीयत इति समासोक्तिः । यद्वा प्रस्तुतखलवृत्तान्तप्रत्यायनायाप्रस्तुतमहोरगवृत्तान्तकीर्तनमप्रस्तुतप्रशंसा । यद्वा वर्ण्यमानमहोरगवृत्तान्तकीर्तनेन समीपस्थितखलमर्मोद्घाटनं क्रियत इत्युभयस्यापि प्रस्तुतत्वात् प्रस्तुतांकुर इति सन्देहः । (४)

एकवाचकानुप्रवेशसङ्करस्तु शब्दार्थालङ्कारयोरेवेति लक्षयित्वा काव्यप्रकाशकार उदाजहार—

'स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिंबविस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धान्धकारमधुपावलि संचुकोच ॥'

अत्र एकपदानुप्रविष्टौ रूपकानुप्रासौ । यत्रैकस्मिन् श्लोके पदभेदेन शब्दार्थालङ्कारयोः स्थितिः तत्र तयोस्संसृष्टिः । इह तु स-

---

**सिक्तमिति** । **मुखेनेति** । अत्र वाच्यमहोरगवृत्तान्तमात्रस्य प्रस्तुतत्वे तत्सादृश्यमूलकराजद्वारगताप्रस्तुतखलवृत्तान्तप्रतीतेः समासोक्तिः । उभयोरपि प्रस्तुतत्वे प्रस्तुतांकुरः । खलवृत्तान्तमात्रस्य प्रस्तुतत्वे सादृश्यनिबन्धनाप्रस्तुतप्रशंसेत्येषामन्यतमनिर्णयप्रमाणाभावादेषां सन्देसङ्कर इत्यभिप्रेत्याह—**अत्रेति** ॥ (४)

**लक्षयित्वेति** । 'स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वय'मिति यत्र शब्दार्थालङ्कारावेकस्मिन्पदे स्फुटं प्रतीयेते तत्रायं सङ्कर इति तल्लक्षणात् । न च शब्दालङ्कारस्य पदावाच्यतया एकस्मिन्वाचके वाच्यतया अनुप्रवेशाभावात् कथं शब्दालङ्कारस्य एकवाचकानुप्रवेश इति वाच्यम् । एकवाचकाश्रितत्वमात्रस्यैव तत्र एकवाचकानुप्रवेशशब्दार्थत्वात् । न चैवमर्थालङ्कारस्य वाचकवृत्तित्वाभावात् कथमेकवाचकानुप्रवेशविषयतेति वाच्यम् । तस्यापि वाच्यतासम्बन्धेन तद्वृत्तितया तदुपपत्तेरित्यभिप्रेत्य काव्यप्रकाशकार एकवाचकानुप्रवेशमुदाजहारेति भावः । **अत्रेति** । स्पष्टोल्लसत्किरणेति पदे रूपकच्छेकानुप्रासयोस्सत्त्वमिति भावः । संसृष्टितोऽस्य भेदः कुत इत्यतस्तमुपपादयति—**यत्रेति** ।

ङ्कर इति । अलङ्कारसर्वस्वकारस्तु—'एकस्मिन् वाचके अनुप्रवेशो व च्ययोरेवाऽलंकारयोः स्वारसिकः, वाच्यप्रतियोगिकत्वाद्वाचकस्येति मत्वार्थ कारयोरप्येकवाचकानुप्रवेशसङ्करमुदाजहार—

'सत्पुष्करद्योतितरम्यशोभिन्यमन्दमारब्धमृदङ्गवाद्ये ।
उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते ॥'

अत्र नाट्यगृहवापीपयसो'स्सत्पुष्करे'त्यादिविशेषणे शब्दसाम्यं श्लेष 'अमन्दमारब्धे'त्यादिविशेषणेऽर्थसाम्यमुपमा । तदुभयमेकस्मिन्निवशब्दे अनुप्रविष्टमिति तदपि न मन्यामहे । 'सत्पुष्करे'त्यादिविशेषणेऽपि श्ले षभित्तिकाभेदाध्यवसायरूपातिशयोक्तिलभ्यस्य धर्मसाम्यस्यैव तत्रैव श ब्दप्रतिपाद्यतया शब्दसाम्यस्य तदप्रतिपाद्यत्वात् । श्लेषभित्तिकाभे दाध्यवसायेन धर्मसाम्यमतानङ्गीकारे । 'अहो रागवती सन्ध्या जहाति स्वयमम्बर'मित्यादिश्लिष्टविशेषणसमासोक्त्युदाहरणे विशेषणसाम्याभावेन समासोक्त्यभावप्रसङ्गात् । शब्दसाम्यस्यैव शब्दप्रतिपाद्यत्वेऽपि तस्यो

---

तथा च एकश्लोकगतपदभेदाभेदाभ्यां तयोर्भेद इति भावः । सर्वस्वकारमतमाह—**एकस्मिन्निति** । वाचकशब्दस्य सम्बन्धिशब्दतया वाच्यस्यैवानुप्रवेशप्रतियोगित्वेनोपस्थितेरेकवाचकसम्बन्धित्वमात्रेणार्थालङ्कारयोरप्येष सम्भवतीत्यभिप्रेत्योदाहृतवानित्यर्थः । **अत्र नाट्यगृहेति** । सद्भिः पुष्करैः कमलैरित्यादिरूपेणार्थद्वयप्रतीत्या शब्दसाम्यं द्वितीयविशेषणे अर्थसाम्यं चेत्युभयमिवशब्दे वाच्यत्वेनानुप्रविष्टमित्येवमेकवाचकानुप्रवेश इति भावः। **श्लेषभित्तिकेति** । श्लेषलब्धार्थद्वयस्य एकशब्दोपादानेनाभेदाध्यवसायस्य श्लिष्टविशेषणविन्यासे सर्वसम्प्रतिपन्नतया 'सत्पुष्करे'त्यत्रापि धर्मसाम्यस्यैव इवशब्दार्थतया शब्दसाम्यरूपश्लेषस्य इवशब्दाप्रतिपाद्यतया अर्थालङ्कारयोरेकवाचकानुप्रवेशासम्भवादिति भावः । तथाविधधर्मसाम्यानङ्गीकारे 'अहो! रागवती'त्यादौ विशेषणसाम्याभावेन समासोक्तिर्न स्यादित्यत आह—**श्लेषभित्तिकेति** । ननु, अभङ्गश्लेषे एकवृन्तगतफलद्वयन्यायेनार्थद्वयस्य एकशब्दोपादाननिबन्धनाभेदाध्यवसायसम्भवेऽपि सभङ्गश्लेषे जतुकाष्ठन्यायेन शब्दद्वयस्य संश्लिष्टतया एकशब्दोपादानाभावेनार्थद्वयाभेदाध्यवसायासम्भवात् शब्दसाम्यस्यैव तत्र वक्तव्यतया प्रकृतेऽपि तस्य उपमात्वे प्रयोजकसादृश्यरूपकतया उपमाया एव प्राप्त्या श्लेषप्रसक्त्यभावादित्यभिप्रेत्याह—**शब्दसाम्यस्येति** । तथा च तस्य इवशब्दप्रतिपाद्यत्वेऽपि न तवेष्टसिद्धिरिति भावः । ननु, धर्मसाम्यस्यैव उपमाप्रयोजकतया 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव ।' इत्यादाविव शब्दसाम्ये श्लेषसम्प्रतिपत्तेरिहापि इवश

पमावाचकत्वस्यैव प्राप्त्याः श्लेषवाचकत्वाभावाच्च । शब्दतोऽर्थतो वाचकसम्मतसाम्यप्रतिपादने सर्वविधेऽप्युपमालङ्कारस्वीकारात् । अन्यथा

'यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥'

इत्यत्राप्युपमानं स्यात् । न ह्यत्रान्वर्थनामरूपशब्दसाम्यं विना किञ्चिदर्थसाम्यं कविविवक्षितमस्ति । तस्माद्यत्रैकस्मिन्नर्थे प्रतिमाद्यमाने अलङ्कारद्वयलक्षणयोगादलङ्कारद्वयप्रतीतिः, तत्र तयोरलङ्कारयोरेकवाचकानुप्रवेशः । यथा—

'विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैश्शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥'

अत्र हि प्रतिपाद्यमानोऽर्थः 'समृद्धिमद्वस्तुवर्णनमुदात्त' मिति लक्षणानुसारादुदात्तालङ्काररूपः । 'असम्बन्धे सम्बन्धकथनमतिशयोक्ति' रिति लक्षणादतिशयोक्तिरूपश्च । न च सर्वत्रोदात्तस्यासम्बन्धे सम्बन्धकथनरूपत्वं निर्णीतमिति न विविक्तालङ्कारद्वयलक्षणसमावेशोऽस्तीति वाच्यम् । दिव्यलोकगतसंपत्समृद्धिवर्णनादिष्वतिशयोक्त्यस्पृष्टस्योदात्तस्य शौर्यौदार्यदारिद्र्यादिविषयातिशयोक्तिवर्णनेषूदात्तास्पृष्टाया अतिशयोक्तेश्च परस्परविविक्ततया विश्रान्तेः । तयोश्चेहार्थवशसंपन्नसमावेशयोर्नाङ्गाङ्गिभावः । एकेनापरस्यानुत्थापनात् । स्वातन्त्र्यपारतन्त्र्यविशेषाद्-

---

ब्दे उपमायाः श्लेषस्य च समावेशस्सम्भवतीत्यत आह—**शब्दतोऽर्थतो वेति** । न हि शब्दातिरिक्तार्थसाम्य एवोपमा न तु शब्दसाम्य इति नियमोऽस्ति। कविसम्मतसाम्यमात्रस्यैव उपमाप्रयोजकत्वादिति भावः । स्वयमुपसंहरन्नेकवाचकानुप्रवेशसङ्करं लक्षयति—**तस्मादिति**। उदाहणे एकवाचकानुप्रवेशमुपपादयति—**अत्र हीति**। श्लोकेऽस्मिन् सम्पत्समृद्धिवर्णनादुदात्तालङ्कारः । असम्बन्धे सम्बन्धरूपातिशयोक्तिश्चालङ्कारः प्रतीयत इति एकस्मिन् श्लोके समृद्धिमद्वस्तुप्रतियादके अलङ्कारद्वयसमावेशादेकवाचकानुप्रवेशसङ्करः । लक्ष्यनाम्नि च वाचकपदं प्रतिपादकपरमिति भावः । नन्वनयोः परस्परविविक्तविषयाभावे भेदानुपपत्तेः कथमत्रालङ्कारयोरुक्तस्सङ्कर इत्याशङ्क्य परिहरति—**न चेति** । नन्वस्त्विहालङ्कारद्वयं तथापि नोक्तस्तयोः सङ्करः। अङ्गाङ्गिभावस्य समप्राधान्यस्य वोपपत्तेरित्याशङ्क्य क्रमेण निरस्यति—**तयोश्चेति** । उभयोरपि वाक्यार्थे प्रतीयमाने युगपदु-

र्शनाच्च । नापि समप्राधान्यम् । यैश्शब्दैरिह समृद्धिमद्वस्तु प्रतिपाद्यते तैरेव तस्यैव वस्तुनोऽसम्बन्धे सम्बन्धरूपस्य प्रतिपाद्यमानतया भिन्नप्रतिपादकशब्दव्यवस्थितार्थभेदाभावात । नापि सन्देहसङ्करः । एकालङ्कारकोट्यां तदन्यालङ्कारकोटिप्रातिक्षेपाभावात् । तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणस्सङ्करः ।

क्वचित्सङ्कराणामपि सङ्करो दृश्यते । यथा—

‘मुक्ताः केलिविसूत्रहारगलितास्सम्मार्जनीभिः कृताः
प्रातः प्रांगणसीम्नि मन्थरचलद्बालांघ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥’

अत्र तावद्विदुषां संपत्समृद्धिवर्णनमुदात्तालङ्कारः । तन्मूलको ‘बालांघ्रिलाक्षारुणा’ इत्यत्र तद्गुणालङ्कारः । तत्रैव वक्ष्यमाणभ्रान्त्युपपादकः पदार्थहेतुककाव्यलिंगालङ्कारश्चेति तयोरेकवाचकानुप्रवेशसङ्करः । त-

---

न्मेषेण एकेनापरस्यानुत्थितेर्नाङ्गाङ्गिभाव इति भावः । समप्राधान्यं निरस्यति—**नापीति** । भिन्नशब्दप्रतिपाद्यार्थभेदे ह्याग्नेयादीनामिव प्राधान्यसम्भवः । न ह्यत्र भिन्नशब्दाभ्यामलङ्कारद्वयप्रतीतिरस्ति । येन समप्राधान्यं सम्भवतीति भावः । अत्रेदं चिन्त्यम् । समप्राधान्यसङ्करमभ्युपगच्छतो भिन्नशब्दव्यवस्थितार्थभेदः समप्राधान्यप्रयोजकः । आग्नेयादावुत्पत्तिविधिभेदसत्त्वेऽपि ‘सप्तदशप्राजापत्यान् पशूनालभत’इत्यादौ विधिभेदाभावेऽपि समप्राधान्यव्यवहियतेस्तद्वदत्रापि प्रतिपादकशब्दभेदाभावेऽपि प्राधान्यसम्भवात् । इतोऽपि न समप्राधान्यससङ्करसम्भवः । एकवाचकानुप्रवेशसङ्करस्य निर्विषयत्वापत्तेः तत्रानुप्रविष्टयोरलङ्कारयोरेकजातियचमत्कारप्रयोजकतया समप्राधान्यस्यैवोपपत्तेः । किं च प्रकृतोदाहरणे उदात्तातिशयोक्त्योर्न समकालोत्थितिः । असम्बन्धे सम्बन्धवर्णनस्य समृद्धिमद्वस्तुवर्णनोपजीवित्वेन तदात्मना पर्यवसानाभावात् । अतो नेदमेकवाचकानुप्रवेशसङ्करोदाहरणमिति ॥ **संकराणामिति** । संसृष्टेः सङ्करस्य च सङ्करो न सम्भवतीति निरपेक्षालङ्कारद्वयरूपायास्तस्या अङ्गत्वे अङ्गाङ्गिभावसङ्कराद्भेदानुपपत्तेः । अतस्सङ्कराणामेव सङ्करः प्रदर्श्यत इति भावः । **अत्र तावदिति** । तावच्छब्दः प्राथम्ये । प्रथमपादे सम्पत्समृद्धिवर्णनादुदात्तालङ्कारः । ततो द्वितीयपादे स्वतः शुभ्राणां मुक्तानां चरणालक्तकरसारुणिमसंक्रान्तिवर्णनात् स्वगुणत्यागपूर्वकान्यदीयगुणग्रहणवर्णनात्तद्गुणालङ्कारो दाडिमबीजभ्रान्तिहेतुभूतस्तेनैव भ्रान्तेस्समर्थनात्काव्यलिङ्गालङ्कारश्चेत्यनयोर्बालांघ्रिलाक्षारुणा इ-

न्मूलकः 'शङ्कितधिय' इत्यत्र भ्रान्तिमदलङ्कारः । ताभ्यां चोदात्तालङ्कारश्चारुतां नीत इति तयोश्च तस्य चांगांगिभावेन सङ्करः । एवं विद्वद्गेहवैभवस्य हेतुमतो राज्ञो वितरणविलासस्य हेतोश्चाभेदकथनं हेत्वलङ्कारः । स च राज्ञो वितरणविलासस्य निरतिशयोत्कर्षाभिव्यक्तिपर्यवसायि । एतावन्मात्रे कविसंरम्भश्चेदुक्तरूपोदात्तालङ्कारपरिष्कृते हेत्वलङ्कारे विश्रान्तिः । वर्णनीयस्य राज्ञः कीदृशी संपदिति प्रश्नोत्तरतया निरतिशयैश्वर्यवितरणरूपाप्रस्तुतकार्यमुखेन तदीयसंपदुत्कर्षप्रशंसने कविसंरम्भश्चेत्कार्यनिबन्धनाप्रस्तुतप्रशंसालङ्कारे विश्रान्तिः । कार्यस्यापि वर्णनीयत्वेन प्रस्तुतत्वाभिप्राये तु प्रस्तुतांकुरेऽपि विश्रान्तिः । अत्र विशेषानध्यवसायात्सन्देहसङ्करः । किं च विद्वद्गृहवैभववर्णनस्यासम्बन्धे सम्बन्धकथनरूपतयातिशयोक्तेरुदात्तालङ्कारेण सहैकवाचकानुप्रवेशसङ्करः । निरतिशयवितरणोत्कर्षपर्यवसायिनो हेत्वलङ्कारस्याप्यद्भुतातथ्यौदार्यवर्णनात्मिकयात्युक्त्या सहैकवाचकानुप्रवेशसङ्करः । तन्मूलकस्याप्रस्तुतप्रशंसालङ्कारस्य प्रस्तुतांकुरस्य वा राजसंपत्समृद्धिवर्णनात्म-

---

स्यत्रानुप्रवेशादेकवाचकानुप्रवेशसङ्कर इति भावः । **ताभ्यामिति** । एकवाचकानुप्रवेशसङ्करभ्रान्तिमदलङ्काराभ्यामित्यर्थः । **चारुतां नीत इति** । तद्गुणभ्रान्तिमदलङ्काराभ्यां सम्पत्समृद्धेरुपपादनादुदात्तालङ्कारस्याङ्गिता । अनुप्रवेशसङ्करभ्रान्तिमदलङ्कारयोरङ्गतेति तयोरङ्गाङ्गिभावसङ्कर इति भावः । चतुर्थपादे 'भोजनृपतेस्तत्त्यागलीलायित'मिति तच्छब्दनिर्दिष्टविद्वद्गतसम्पत्समृद्धेः सामानाधिकरण्येन कारणीभूतवर्णनीयनृपवितरणविलासाभेदप्रतीतेर्हेतुहेतुमतोरभेदलक्षणो हेत्वलङ्कारः । तस्य च राजवितरणनिरतिशयोत्कर्षाभिव्यक्तौ पर्यवसानेन तस्यैव कविसंरम्भगोचरत्वे उदात्तालङ्कारेण हेत्वलङ्कारस्य चारुताधानात्तयोरङ्गाङ्गिभावसङ्करः । सम्पत्प्रश्नोत्तरत्वेनास्य श्लोकस्य प्रवृत्तौ वस्तुतः कार्यमुखेन तत्कारणराजकीयसम्पदतिशयप्रशंसायां तात्पर्ये अप्रस्तुतप्रशंसोदात्तयोरङ्गाङ्गिभावः । कार्यस्यापि वर्णनीयत्वेन कविविवक्षितत्वे प्रस्तुतांकुरे वाक्यविश्रान्तौ तस्योदात्तस्य चाङ्गाङ्गिभावसङ्करः । एतेषां चाङ्गाङ्गिभावानामन्यतमनिर्धारणे प्रमाणाभावात् सन्देहसङ्कर इत्यभिप्रेत्याह—**एवं विद्वदिति** । अङ्गाङ्गिभावानां सन्देहसङ्करमुपपाद्य एकवाचकानुप्रवेशानां समप्राधान्यमुपपादयति—**किं चेति** । सम्पत्समृद्धेरसम्बन्धे सम्बन्धवर्णनरूपातिशयोक्तेश्च एकवाचकानुप्रवेशस्तावदेकः । हेत्वलङ्कारात्यद्भुतौदार्यवर्णनात्मकायुक्तेश्च एकवाचकानुप्रवेशो द्वितीयः । एतन्मूलतयाऽप्रस्तुतप्रशंसायाः प्रस्तुतांकुरस्य वा

कोदात्तालङ्कारेण सहैकवाचकानुप्रवेशसङ्करः। वाचकशब्दस्य प्रतिपादकमात्रपरतया व्यञ्जकसाधारण्यात्। एषां च त्रयाणामेकवाचकानुप्रवेशसङ्कराणां समप्राधान्यसङ्करः। नह्येषां परस्परमन्यत्रांगत्वमस्ति। उदात्तादिमात्रस्यैव हेत्वलङ्कारादिचारुतापादकत्वेनातिशयोक्तिसङ्करस्यांगतयानपेक्षणात्। एवमत्र श्लोके चतुर्णामपि सङ्कराणां यथायोग्यं सङ्करः। एवमन्यत्राप्युदाहरणान्तराण्युदाहरणीयानि। (९)

इति श्रीमदप्पयदीक्षितकृतौ कुवलयानन्दे संसृष्टिसङ्करप्रकरणम् ॥ ॥

अमुं कुवलयानन्दमकरोदप्पदीक्षितः।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः॥

---

उदात्तालङ्कारेण सह एकवाचकानुप्रवेशस्तृतीय इति भावः। ननु, अप्रस्तुतप्रशंसाप्रस्तुतांकुरयोः प्रस्तुतवृत्तान्तस्य व्यङ्ग्यतया वाचकशब्दाभावात् कथमेकवाचकानुप्रवेशस्तयोरित्यत आह—**वाचकेति**। ततः किमत आह—**एषां चेति**। एतदेवोपपादयति—**न हीति**। परस्पराङ्गत्वमन्याङ्गत्वं वा नैषामस्तीत्यर्थः। ननु, सम्पत्समृद्धिवर्णनस्यासम्बन्धे सम्बन्धवर्णनरूपातिशयोक्तेश्च एकवाचकानुप्रवेशसङ्करस्य हेत्वलङ्कारचारुतापादकत्वेन इतराङ्गत्वसत्वात् कथं त्रयाणामेषां समप्राधान्यमित्याशङ्क्याह—**उदात्तादिति**। उदात्तालङ्कारस्यैव सम्पत्समृद्धिवर्णनात्मना हेत्वलङ्कारचारुतापादकत्वेनाङ्गता न तत्रातिशयोक्तिसङ्करस्याप्युपयोग इति त्रयाणां समप्राधान्यं युक्तमेवेति भावः। उपसंहरति—**एवमिति**। इदमत्रावधेयम्। एवमेतैः सङ्करसङ्करैर्भोजनृपतेरितरनृपापेक्षया निरतिशयोत्कर्षपर्यवसायिव्यतिरेकालङ्कारध्वननादर्थशक्तिमूलानुरणनव्यङ्ग्यात्मालङ्कारेणालङ्कारध्वनिः। तस्य च अलक्ष्यक्रमव्यङ्ग्यवर्णनीयराजविषयकभावध्वनेश्चाङ्गाङ्गिभावसङ्कर इति। उदाहरणान्तरेऽपि प्रदर्शितं सङ्करसङ्करन्यायमतिदिशति—**एवमन्यत्रापीति**। महाकविप्रबन्धेषु सङ्करसङ्करो धीमद्भिस्सञ्चारयितुं शक्य इति लेशतोऽस्माभिः क्वचिदुदाहृत इति ग्रन्थकृतोऽभिसन्धिः। अस्माभिस्त्वत्रैव ग्रन्थकृदुदाहृतेषु तत्तदलङ्कारश्लोकेषु तत्तद्व्याख्यानावसरे यथा सम्भवमयं प्रदर्शित इत्यशेषमतिमङ्गलम् ॥ ५॥

इति कुवलयानन्दटीकायां रसिकरञ्जन्यां संसृष्टिसङ्करप्रकरणम् ॥

इदानीं स्वग्रन्थस्य प्रसिद्धये स्वकीर्त्यनुवृत्तये च स्वोपजीव्यमहीपतियशोनुवृत्तये च प्रबन्धात्मप्रभुनामानि दर्शयन् ग्रन्थसमाप्तिं द्योतयति—**अमुमिति**। अस्य ग्रन्थस्य लक्ष्यलक्षणात्मकचन्द्रालोकविवरणतया चन्द्रालोकसापेक्षतया कुवलयानन्द इति नामधेयौचितीं प्रदर्शयन् ईदृग्विवरणविवृतभावतया इतरग्रन्थेभ्योऽस्य व्यतिरेकं व्यञ्जयन् 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते' इति महाभाष्योक्तेः 'योयं च क्वास्ति गगनार्णवरत्नमिन्दु'रित्यभियुक्तोक्तेः चिच्छक्त्यंशभूतचन्द्रनाम्ना चिच्छक्त्यनुसन्धा

चन्द्रालोको विजयतां शरदागमसम्भवः ।
हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलनिधिकौस्तुभश्रीरंगराजाध्वरीन्द्रवरसूनोः श्रीमदप्पयदीक्षितस्य कृतिः कुवयानन्दः समाप्तः

नलक्षणं मङ्गलं कुर्वन् चन्द्रालोकनाम्नो ग्रन्थस्य सर्वोत्कर्षं तावदाह—**चन्द्रालोक इति।** अत्र चन्द्रालोकनामा ग्रन्थः शरदागमनाम्ना टीकाग्रन्थेन सम्भव उत्पत्तिः मुख्यार्थासम्भवात् परिष्काररूपा यस्य सः । ईदृशः सः विजयतां सर्वोत्कर्षेण वर्ततामिति प्रार्थनायां लोट्। यत्प्रसादात् यस्य चन्द्रालोकग्रन्थस्य प्रसादात् परिशीलनात् हृद्यः बुधजनहृदयहारी कुवलयानन्दनामा ग्रन्थोऽयं स्वनिर्मितोऽभूत् जातः । इति प्रकृतो वाक्यार्थः । अप्रस्तुतस्तु, चन्द्रस्यालोकः प्रकाशः । शरत्कालागमेन सम्भवः सम्यक् मेघाद्यावरणापगमेन भवः उपचयः यस्य सः । विजयतामिति पूर्ववत् । यत्प्रसादात् यद्वैशद्यात् । अयं परिदृश्यमानः । कुवलयानां कुमुदानां कुवलयस्य भूमण्डलस्य तापशान्त्या वा आनन्दो हर्षो जात इति प्रतीतेः प्रकृताप्रकृतश्लेषमहिम्ना अप्रकृतचन्द्रालोकौपम्यं प्रकतस्य चन्द्रालोकनाम्नो ग्रन्थस्य । यथा चन्द्रालोकस्तापशान्त्या सकलविषयावभासनेन च जददाह्लादकारी तथा अयमपि ग्रन्थः स्वविषयीभूतार्थालङ्कारविविक्तस्वरूपावधारणसमापादनेन तद्विषयभ्रमसंशयादिलक्षणाज्ञानरूपतापशान्त्या कवीनामानन्दमादधातीत्येवंरूपमौपम्यं व्यज्यते । तत्र 'शरदागमसम्भव' इति विशेषणेन ग्रन्थविशेषशरत्कालागमयोः श्लिष्टशब्दोपादाननिबन्धनश्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्त्या साधारणधर्मतेत्यत्र शब्दशक्तिमूलानुरणनव्यङ्ग्यरूपश्लेषालङ्कारमूलकोपमाध्वनिः । चन्द्रालोकनाम्नो ग्रन्थस्य सर्वोत्कर्षेण वर्तनवर्णना तद्भावाविष्करणरूपस्य स्वग्रन्थस्य इतरग्रन्थापेक्षया आधिक्यप्रतीतेरर्थशक्तिमूलो वस्तुना व्यतिरेकध्वनिश्चेति शिवम् ॥

**श्रीदेवसिंहसुमते**स्तनयः प्रतीतः **श्रीविश्वरूपयतिराज**कृपानुबन्धी ।
श्रीचन्द्रचूडचरणाम्बुजगर्भदासो **गंगाधरो**ऽध्वरिवरः श्रुतपारदृश्वा ॥
स्वां वैदुषीं प्रथयितुं विबुधावलीनाम**प्पय्यदीक्षित**कृतेर्विवृतिच्छलेन ।
तास्ताः पुरातनकृतीः परिशील्य टीकामेनां व्यधात्कृतधियः परिशीलयन्तु ॥

**इयं कुवलयानन्दटीका रसिकरञ्जनी ।**
**अर्पिता पुष्पमालेव चन्द्रचूडपदाम्बुजे ॥**

इति श्रीमद्राधूलवंशमुक्ताफलतिलकश्रीदेवसिंहसुमतिनन्दनस्य श्रीविश्वरूपेन्द्रगुरुचरणदिव्यकरुणाकटाक्षवीक्षासमासादितसकलविद्यावैशारद्यस्य श्रीमत्साग्निचित्यवाजपेययाजि**गंगाधरमनीषिणः** श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदप्पय्ययज्वावतंसविरचित **कुवलयानन्दटीका रसिकरञ्जनी**

—*सम्पूर्णा*—